इति समगुणयोगप्रीतयस्तत्र पौराः
श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ॥ ८५ ॥

प्रमुदितवरपक्षमेकतस्तत्
क्षितिपतिमण्डलमन्यतोवितानम् ।
उषसि सर इव प्रफुल्लपद्मं
कुमुद्वनप्रतिपन्ननिद्रमासीत् ॥ ८६ ॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ
स्वयंवरवर्णनो नाम षष्ठः सर्गः ।

---

शशिनं शरच्चन्द्रम् उपगता कौमुदी, अनुरूपं सदृशं जलनिधिम् अवतीर्णा प्रविष्टा जह्नुकन्या भागीरथी तत्सदृशी इत्यर्थः इत्येवं नृपाणां श्रवणयोः कटु परुषम् एकम् अविसंवादि वाक्यम् एकवाक्यं विवव्रुः । मालिनीवृत्तम् ॥ ८५ ॥

प्रमुदितेति । एकतः एकत्र प्रमुदितः हृष्टः वरस्य जामातुः पक्षः वर्गः यस्य तत् तथोक्तम्, अन्यतः अन्यत्र वितानं शून्यं भग्नाशत्वादप्रहृष्टम् इत्यर्थः तत् क्षितिपतिमण्डलम् उषसि प्रभाते प्रफुल्लपद्मं कुमुदवनेन प्रतिपन्ननिद्रं प्राप्तनिमीलनं सरः इव सरस्तुल्यम् आसीत् । पुष्पिताग्रा वृत्तमेतत् ॥ ८६ ॥

इति श्रीमहामहोपाध्याय-कोलाचलमल्लिनाथसूरिविरचितायां
रघुवंशटीकायां सञ्जीवनी-समाख्यायां षष्ठः सर्गः ।

## सप्तमः सर्गः ।

अथोपयन्त्रा सदृशेन युक्तां
स्कन्देन साक्षादिव देवसेनाम् ।
स्वसारमादाय विदर्भनाथः
पुरप्रवेशाभिमुखो बभूव ॥ १ ॥

सेनानिवेशान् पृथिवीक्षितोऽपि
जग्मुर्विभातग्रहमन्दभासः ।
भोज्यां प्रति व्यर्थमनोरथत्वात्
रूपेषु वेषेषु च साभ्यसूयाः ॥ २ ॥

भजेमहि निपीयैकं मुहुरन्यं पयोधरम् ।
मार्गन्तं बालमालोक्याश्वासयन्तौ हि दम्पती ॥

अथेति । अथ विदर्भनाथः भोजः सदृशेन उपयन्त्रा युक्ताम् अत एव साक्षात् प्रत्यक्षम् । "साक्षात् प्रत्यक्षतुल्ययोः" इत्यमरः । स्कन्देन युक्तां देवसेनाम् इव देवसेना नाम देवपुत्री स्कन्दपत्नी ताम् इव स्थितां स्वसारं भगिनीम् इन्दुमतीम् आदाय गृहीत्वा पुरप्रवेशाभिमुखः बभूव । उपजातिवृत्तं सर्गेऽस्मिन् ॥ १ ॥

सेनेति । भोजस्य राज्ञः गोत्रापत्यं स्त्री भोज्या ताम् इन्दुमतीं प्रति व्यर्थमनोरथत्वात् रूपेषु आकृतिषु वेषेषु नेपथ्येषु च

सान्निध्ययोगात् किल तत्र शच्याः
स्वयंवरक्षोभकृतामभावः ।
काकुत्स्थमुद्दिश्य समत्सरोऽपि
शशाम तेन क्षितिपाललोकः ॥ ३ ॥

तावत्प्रकीर्णाभिनवोपचारम्
इन्द्रायुधद्योतिततोरणाङ्कम् ।
वरः स वध्वा सह राजमार्गं
प्राप ध्वजच्छायनिवारितोष्णम् ॥ ४ ॥

साभ्यसूयाः वृथेति निन्दन्तः किञ्च विभाते प्रातःकाले ये ग्रहाः चन्द्रादयः ते इव मन्दभासः क्षीणकान्तयः पृथिवीक्षितः नृपाः अपि सेनानिवेशान् शिविराणि जग्मुः ॥ २ ॥

ननु क्रुद्धाश्चेद्युध्यन्तां तत्राह, सान्निध्येति । तत्र स्वयंवरक्षेत्रे शच्याः इन्द्राण्याः सन्निधिः एव सान्निध्यं तस्य योगात् सद्भावात् हेतोः स्वयंवरस्य क्षोभकृतां विघ्नकारिणाम् अभावः किल । किलेति स्वयंवरविघातकाः शच्या विनाश्यन्ते इत्यागमसूचनार्थम् । तेन हेतुना काकुत्स्थम् अजम् उद्दिश्य समत्सरः अपि क्षितिपाललोकः शशाम न अक्षुभ्यत् ॥ ३ ॥

तावदिति "यावत् तावच्च साकल्ये" इत्यमरः । तावत्-प्रकीर्णाः साकल्येन प्रसारिताः अभिनवाः नूतनाः उपचाराः पुष्पप्रकारादयः यस्य तं तथोक्तम् इन्द्रायुधानि इव द्योतितानि

ततस्तदालोकनतत्पराणां
सौधेषु चामीकरजालवत्सु।
बभूवुरित्थं पुरसुन्दरीणां
त्यक्तान्यकार्य्याणि विचेष्टितानि ॥ ५ ॥

आलोकमार्गं सहसा व्रजन्त्या
कयाचिदुद्वेष्टनवान्तमाल्यः।
बन्धुं न सम्भावित एव तावत्
करेण रुद्धोऽपि च केशपाशः ॥ ६ ॥

प्रकाशितानि तोरणानि अङ्काः चिह्नानि यस्य तं ध्वजानां छाया ध्वजच्छायम्। छायाबाहुल्य इति नपुंसकत्वम्। तेन निवारितः उष्णः आतपः यत्र तं राजमार्गं सः वरः वोढ़ा वध्वा सह प्राप विवेश ॥ ४ ॥

तत इति। ततः तदनन्तरं चामीकरजालवत्सु सौवर्णगवाक्षयुक्तेषु सौधेषु तस्य अजस्य आलोकने तत्पराणाम् आसक्तानां पुरसुन्दरीणाम् इत्थं वक्ष्यमाणप्रकाराणि त्यक्तानि अन्यकार्य्याणि केशबन्धनादीनि येषु तानि विचेष्टितानि व्यापाराः बभूवुः ॥ ५ ॥

तान्येवाह पञ्चभिः श्लोकैः, आलोकेति। सहसा आलोकमार्गं गवाक्षपथं व्रजन्त्या कयाचित् उद्वेष्टनवान्तमाल्यः उद्वेष्टनः द्रुतगतिवशात् उन्मुक्तबन्धनः अत एव वान्तमाल्यः बन्धविश्लेषेण

प्रसाधिकालम्बितमग्रपादम्
आक्षिप्य काचित् द्रवरागमेव ।
उत्सृष्टलीलागतिरागवाक्षात्
अलक्तकाङ्कां पदवीं ततान ॥ ७ ॥

विलोचनं दक्षिणमञ्जनेन
सम्भाव्य तद्वञ्चितवामनेत्रा ।
तथैव वातायनसन्निकर्षं
ययौ शलाकामपरा वहन्ती ॥ ८ ॥

उद्गीर्णमाल्यः करेण रुद्धः गृहीतः अपि च केशपाशः केश-कलापः । "पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे" इत्य-मरः । तावत् आलोकमार्गप्राप्तिपर्यन्तं बन्धुं बन्धनार्थं न सम्भावितः न चिन्तितः एव ॥ ६ ॥

प्रसाधिकेति काचित् प्रसाधिकया अलङ्कर्त्र्या आलम्बितं रञ्जनार्थं धृतं द्रवरागम् एव आर्द्रालक्तकम् एव, अग्रश्चासौ पादश्च इति अग्रपादः इति कर्मधारयसमासः । "हस्ताग्राग्र-हस्तादयो गुणगुणिनोर्भेदाभेदाभ्याम्" इति वामनः । तम् आक्षिप्य आकृष्य उत्सृष्टलीलागतिः त्यक्तमन्दगमना सती आ गवाक्षात् गवाक्षपर्यन्तं पदवीं पन्थानम् अलक्तकाङ्कां लाक्षा-रागचिह्नां ततान विस्तारयामास ॥ ७ ॥

विलोचनमिति । अपरा स्त्री दक्षिणं विलोचनम् अञ्जनेन

जालान्तरप्रेषितदृष्टिरन्या
प्रस्थानभिन्नां न बबन्ध नीवीम् ।
नाभिप्रविष्टाभरणप्रभेण
हस्तेन तस्थाववलम्ब्य वासः ॥ ९ ॥

अर्द्धाञ्चिता सत्वरमुत्थितायाः
पदे पदे दुर्निमिते गलन्ती ।
कस्याश्चिदासीद्रशना तदानीम्
अङ्गुष्ठमूलार्पितसूत्रशेषा ॥ १० ॥

सम्भाव्य अलङ्कृत्य संभ्रमात् इति भावः। तदञ्चितं तेन अञ्जनेन वर्ज्जितं वामनेत्रं यस्याः सा सती तथैव शलाकां अञ्जनतूलिकां वहन्ती सती वातायनसन्निकर्षं गवाक्षसमीपं ययौ। दक्षिण-ग्रहणं सम्भ्रमात् व्युत्क्रमकरणद्योतनार्थम्, "सव्यं हि पूर्व्वं मनुष्या अञ्जते" इति श्रुतेः ॥ ८ ॥

जालेति । अन्या स्त्री जालान्तरप्रेषितदृष्टिः गवाक्षमध्य-प्रेरितदृष्टिः सती प्रस्थानेन गमनेन भिन्नां त्रुटितां नीवीं वसन-ग्रन्थिम् । "नीवी परिवणे ग्रन्थौ स्त्रीणां जघनवाससः" इति विश्वः। न बबन्ध किन्तु नाभिप्रविष्टा आभरणानां कङ्कणा-दीनां प्रभा यस्य तेन । प्रभैव नाभेराभरणमभूत् इति भावः। हस्तेन वासः अवलम्ब्य गृहीत्वा तस्थौ ॥ ९ ॥

अर्द्धेति। सत्वरम् उत्थितायाः कस्याश्चित् अर्द्धाञ्चिता

तासां मुखैरासवगन्धगर्भै-
र्व्याप्तान्तराः सान्द्रकुतूहलानाम् ।
विलोलनेत्रभ्रमरैर्गवाक्षाः
सहस्रपत्राभरणा इवासन् ॥ ११ ॥

ता राघवं दृष्टिभिरापिबन्त्यः
नार्य्यो न जग्मुर्विषयान्तराणि ॥
तथाहि शेषेन्द्रियवृत्तिरासां
सर्व्वात्मना चक्षुरिव प्रविष्टा ॥ १२ ॥

मणिभिः अर्द्धगुम्फिता दुर्निमिते संस्रात् दुरुत्क्षिप्ते । ग्रुमिज् प्रक्षेपण इति धातोः कर्म्मणि क्तः । पदे पदे प्रतिपदम् । वीप्सायां द्विर्भावः । गलन्ती गलद्दला सती रशना मेखला तदानीम् अङ्गुष्ठमूले अर्पितं सूत्रम् एव शेषः यस्या सा आसीत् ॥ १० ॥

तासामिति । तदानीं सान्द्रकुतूहलानां तासां स्त्रीणाम् आसवगन्धः गर्भे येषां तैः विलोलानि नेत्राणि एव भ्रमराः येषां तैः मुखैः व्याप्तान्तराः छन्नावकाशाः गवाक्षाः सहस्रपत्राभरणाः इव कमलालङ्कृताः इव । "सहस्रपत्रं कमलम्" इत्यमरः । आसन् ॥ ११ ॥

ता इति । ताः नार्य्यः । रघोरपत्यं राघवम् अजम् । तस्यापत्यमित्यण्प्रत्ययः । दृष्टिभिः आपिबन्त्यः अतितृष्णया पश्यन्त्यः विषयान्तराणि अन्यान् विषयान् न जग्मुः न विविदुः

स्थाने वृता भूपतिभिः परोक्षैः
स्वयंवरं साधुममंस्त भोज्या।
पद्मेव नारायणमन्यथासौ
लभेत कान्तं कथमात्मतुल्यम्॥ १३॥
परस्परेण स्पृहणीयशोभं
न चेदिदं द्वन्द्वमयोजयिष्यत्।

इत्यर्थः। तथाहि, आसां नारीणां शेषेन्द्रियवृत्तिः चक्षुर्व्यतिरिक्तश्रोत्रादीन्द्रियव्यापारः सर्व्वात्मना स्वरूपकार्त्स्न्येन चक्षुः प्रविष्टा इव। श्रोत्रादीनीन्द्रियाणि स्वातन्त्र्येण ग्रहणाशक्ताः चक्षुरेव प्रविश्य कौतुकात् स्वयमप्येनम् उपलभन्ते किमु, अन्यथा स्वविषयाधिगमः किं न स्यात् इति भावः॥ १२॥

शृण्वन् कथा इति वक्ष्यति ताः कथयति, स्थाने इत्यादिभिस्त्रिभिः। भोज्या इन्दुमती परोक्षैः अदृष्टैः भूपतिभिः वृता ममैवेयमिति प्रार्थिता अपि स्वयंवरम् एव साधु हितम् अमंस्त मेने न तु परोक्षमेव कञ्चित् प्रार्थकं वव्रे, स्थाने युक्तमेतत्। "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः। कुतः? अन्यथा स्वयंवराभावे असौ इन्दुमती पद्मम् अस्यास्तीति पद्मा लक्ष्मीः। अर्श आदिभ्यः इत्यच्प्रत्ययः। नारायणम् इव आत्मतुल्यं स्वानुरूपं कान्तं पतिं कथं लभेत न लभेत एव सदसद्विवेकासौकर्य्यात् इति भावः॥ १३॥

परस्परेणेति। स्पृहणीयशोभं सर्व्वाशास्यसौन्दर्य्यम् इदं

अस्मिन् द्वये रूपविधानयत्नः
पत्युः प्रजानां वितथोऽभविष्यत् ॥ १४ ॥
रतिस्मरौ नूनमिमावभूतां
राज्ञां सहस्रेषु तथाहि बाला ।
गतेयमात्मप्रतिरूपमेव
मनो हि जन्मान्तरसङ्गतिज्ञम् ॥ १५ ॥

द्वन्द्वं मिथुनम् । द्वन्द्वं रहस्येत्यादिना निपातः । परस्परेण न अयोजयिष्यत् चेत् न योजयेत् यदि, तर्हि प्रजानां पत्युः विधातुः अस्मिन् द्वये द्वन्द्वे रूपविधानयत्नः सौन्दर्य्यनिर्म्माण-प्रयासः वितथः अभविष्यत् एतादृशानुरूपस्त्रीपुंसान्तराभावात् इति भावः । लिङ्निमित्ते लृङ् क्रियातिपत्ताविति लृङ् । "कुतश्चित् कारणवैगुण्यात् क्रियाया अनभिनिष्पत्तिः क्रियाति-पत्ति" इति वृत्तिकारः ॥ १४ ॥

रतीति । रतिस्मरौ यौ नित्यसहचरौ इत्यभिप्रायः नूनं तौ एव इयञ्च अयञ्च इमौ दम्पती अभूताम् एतद्रूपेण उत्पन्नौ । कुतः तथाहि इयं बाला राज्ञां सहस्रेषु राजसहस्रमध्ये सत्यपि व्यत्यासकारणे इति भावः । आत्मप्रतिरूपं स्वतुल्यम् एव । "तुल्यसङ्काशनीकाशप्रकाशप्रतिरूपकाः" इति दण्डी । गता प्राप्ता । तदपि कथं जातमत आह, हि यस्मात् मनः जन्मान्तर-सङ्गतिज्ञं भवति । तदेवेदमिति प्रत्यभिज्ञाभावेऽपि वासना-विशेषवशादनुभूतार्थेषु मनःप्रवृत्तिरस्तीति ॥ १५ ॥

इत्युद्गताः पौरवधूमुखेभ्यः
शृण्वन् कथाः श्रोत्रसुखाः कुमारः ।
उद्भासितं मङ्गलसंविधाभिः
सम्बन्धिनः सद्म समाससाद ॥ १६ ॥
ततोऽवतीर्य्याशु करेणुकायाः
स कामरूपेश्वरदत्तहस्तः ।
वैदर्भनिर्द्दिष्टमथो विवेश
नारीमनांसीव चतुष्कमन्तः ॥ १७ ॥
महार्हसिंहासनसंस्थितोऽसौ
सरत्नमर्घ्यं मधुपर्कमिश्रम् ।

इतीति । इति स्थाने इत्याद्युक्तप्रकारेण पौरवधूमुखेभ्यः उद्गताः उत्पन्नाः श्रोत्रयोः सुखाः मधुराः । सुखशब्दो विशेष्यनिघ्नः । "पापपुण्यसुखादि च" इत्यमरः । कथाः गिरः शृण्वन् कुमारः अजः मङ्गलसंविधाभिः मङ्गलरचनाभिः उद्भासितं शोभितं सम्बन्धिनः कन्यादायिनः सद्म गृहं समाससाद प्राप ॥ १६ ॥

तत इति । ततः अनन्तरं करेणुकायाः हस्तिन्याः सकाशात् आशु शीघ्रम् अवतीर्य कामरूपेश्वरे दत्तः हस्तः येन सः अजः अथो अनन्तरं वैदर्भेण निर्दिष्टं प्रदर्शितम् अन्तश्चतुष्कं चत्वरं नारीणां मनांसि इव विवेश ॥ १७ ॥

महार्हेति । महार्हसिंहासने संस्थितः असौ अजः भोजेन

भोजोपनीतञ्च दुकूलयुग्मं
जग्राह सार्द्धं वनिताकटाक्षैः ॥ १८ ॥

दुकूलवासाः स वधूसमीपं
निन्ये विनीतैरवरोधरक्षैः ।
वेलासकाशं स्फुटफेनराजि-
र्नवैरुदन्वानिव चन्द्रपादैः ॥ १९ ॥

तत्रार्च्चितो भोजपतेः पुरोधाः
हुत्वाग्निमाज्यादिभिरग्निकल्पः ।
तमेव चाधाय विवाहसाक्ष्ये
वधूवरौ सङ्गमयाञ्चकार ॥ २० ॥

उपनीतं रत्नैः सहितं सरत्नं मधुपर्कमिश्रम् अर्घ्यं पूजासाधन-द्रव्यं दुकूलयोः क्षौमयोः युग्मञ्च वनिताकटाक्षैः अन्यस्त्रीणाम् अपाङ्गदर्शनैः सार्द्धं जग्राह गृहीतवान् ॥ १८ ॥

दुकूलेति । दुकूलवासाः सः अजः विनीतैः नम्रैः अवरोध-रक्षैः अन्तःपुराधिकृतैः वधूसमीपं निन्ये । तत्र दृष्टान्तः, स्फुटफेन राजिः उदन्वान् समुद्रः नवैः नूतनैः चन्द्रपादैः चन्द्रकिरणैः वेलायाः सकाशं समीपम् इव । पूर्णदृष्टान्तोऽयम् ॥ १९ ॥

तत्रेति । तत्र सद्मनि अर्च्चितः पूजितः अग्निकल्पः अग्नि-तुल्यः भोजपतेः भोजदेशाधीश्वरस्य पुरोधाः पुरोहितः । "पुरो-धास्तु पुरोहितः" इत्यमरः । आज्यादिभिः द्रव्यैः अग्निं हुत्वा-

हस्तेन हस्तं परिगृह्य वध्वाः
स राजसूनुः सुतरां चकाशे।
अनन्तराशोकलताप्रवालं
प्राप्येव चूतः प्रतिपल्लवेन ॥ २१ ॥

आसीद् वरः कण्टकितप्रकोष्ठः
स्विन्नाङ्गुलिः संववृते कुमारी।
तस्मिन् द्वये तत्क्षणमात्मवृत्तिः
समं विभक्तेव मनोभवेन ॥ २२ ॥

तम् एव चाग्निं विवाहसाक्ष्ये आधाय साक्षिणं कृत्वा इत्यर्थः वधूवरौ सङ्गमयाञ्चकार योजयामास ॥ २० ॥

हस्तेनेति। सः राजसूनुः हस्तेन स्वकीयेन वध्वाः हस्तं परिगृह्य, अनन्तरायाः सन्निहितायाः अशोकलतायाः प्रवालं पल्लवं प्रतिपल्लवेन स्वकीयेन प्राप्य चूतः आम्रः इव, सुतरां चकाशे ॥२१॥

आसीदिति। वरः कण्टकितः पुलकितः प्रकोष्ठः यस्य सः आसीत्। "सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः" इत्यमरः। कुमारी स्विन्नाङ्गुलिः संववृते बभूव। अत्रोत्प्रेक्षते, तस्मिन् द्वये मिथुने तत्क्षणम् आत्मवृत्तिः सात्त्विकोदयरूपा वृत्तिः मनोभवेन कामेन समं विभक्ता इव पृथक् कृता इव। अपरार्द्धस्य पाठान्तरे व्याख्यानान्तरम्। पाणिसमागमेन पाण्योः संसर्गेण कर्त्रा तयोः वधूवरयोः मनोभवस्य वृत्तिः स्थितिः समं विभक्ता इव

तयोरपाङ्गप्रतिसारितानि
क्रियासमापत्तिनिवर्त्तितानि।
ह्रीयन्त्रणामानशिरे मनोज्ञा-
मन्योन्यलोलानि विलोचनानि ॥ २३ ॥
प्रदक्षिणप्रक्रमणात् कृशानोः
उदर्च्चिषस्तन्मिथुनं चकाशे।

समीकृतेव इत्यर्थः। प्राक्सिद्धस्याप्यनुरागसाम्यस्य संप्रति तत्कार्य्यदर्शनात् पाणिस्पर्शकृतत्वमुत्प्रेक्ष्यते। अत्र वात्स्यायनः, "कन्या तु प्रथमसमागमे स्विन्नाङ्गुलिः स्विन्नमुखी च पुरुषस्तु रोमाञ्चितो भवति एभिरनयोर्भावं परीक्षेत" इति। स्त्रीपुरुषयोः स्वेदरोमाञ्चाभिधानं सात्त्विकमात्रोपलक्षणं न तु प्रतिनियमो विवक्षितः एभिरिति बहुवचनसामर्थ्यात्। एवं सति कुमारसम्भवे "रोमोद्गमः प्रादुरभूदुमायाः स्विन्नाङ्गुलिः पुङ्गवकेतुरासीत्" इति व्युत्क्रमवचनं न दोषायेति ॥ २२ ॥

तयोरिति। अपाङ्गेषु नेत्रप्रान्तेषु प्रतिसारितानि प्रवर्त्तितानि क्रिययोः निरीक्षणलक्षणयोः समापत्त्या यदृच्छासङ्गत्या निवर्त्तितानि प्रत्याकृष्टानि अन्योन्यस्मिन् लोलानि सतृष्णानि। "लोलश्चलसतृष्णयोः" इत्यमरः। तयोः दम्पत्योः विलोचनानि दृष्टयः मनोज्ञां रम्यां ह्रिया निमित्तेन यन्त्रणां सङ्कोचम् आनशिरे प्रापुः ॥ २३ ॥

प्रदक्षिणेति। तत् मिथुनम् उदर्च्चिषः उन्नतज्वालस्य कृशानोः

मेरोरुपान्तेष्विव वर्त्तमान-
मन्योन्यसंसक्तमहस्त्रियामम् ॥ २४ ॥
नितम्बगुर्व्वी गुरुणा प्रयुक्ता
वधूर्विधातृप्रतिमेन तेन ।
चकार सा मत्तचकोरनेत्रा
लज्जावती लाजविसर्गमग्नौ ॥ २५ ॥
हविः शमीपल्लवलाजगन्धी
पुण्यः कृशानोरुदियाय धूमः ।

वह्नेः प्रदक्षिणप्रक्रमणात् प्रदक्षिणीकरणात्, मेरोः उपान्तेषु समीपेषु वर्त्तमानम् आवर्त्तमानं मेरुं प्रदक्षिणीकुर्व्वत् इत्यर्थः अन्योन्यसंसक्तं परस्परसङ्गतं, मिथुनस्याप्येतद्विशेषणम्, अहश्च त्रियामा च अहस्त्रियामं रात्रिन्दिवम् इव । समाहारे द्वन्द्वैकवद्भावः । चकाशे दिदीपे ॥ २४ ॥

नितम्बेति । नितम्बेन गुर्व्वी अलघ्वी । "दुर्द्धरालघुनोर्गुर्व्वी" इति शाश्वतः । विधातृप्रतिमेन ब्रह्मतुल्येन तेन गुरुणा याजकेन प्रयुक्ता जुहुधीति नियुक्ता मत्तचकोरस्य इव नेत्रे यस्याः सा लज्जावती सा वधूः अग्नौ लाजविसर्गं चकार ॥ २५ ॥

हविरिति । हविषः आज्यादेः शमीपल्लवानां लाजानां च गन्धः अस्यास्तीति हविःशमीपल्लवलाजगन्धी । शमीपल्लवमिश्रान् लाजान् अञ्जलिना वपतीति कात्यायनः । पुण्यः धूमः

कपोलसंसर्पिशिखः स तस्याः
मुहूर्त्तकर्णोत्पलतां प्रपेदे ॥ २६ ॥

तदञ्जनक्लेदसमाकुलाक्षं
प्रम्लानबीजाङ्कुरकर्णपूरम् ।
वधूमुखं पाटलगण्डलेख-
माचारधूमग्रहणाद् बभूव ॥ २७ ॥

तौ स्नातकैर्बन्धुमता च राज्ञा
पुरन्ध्रिभिश्च क्रमशः प्रयुक्तम् ।
कन्याकुमारौ कनकासनस्थौ
आर्द्राक्षतारोपणमन्वभूताम् ॥ २८ ॥

कृशानोः पावकात् उदियाय उद्भूतः । कपोलयोः संसर्पिणी प्रसरणशीला शिखा यस्य सः तथोक्तः सः धूमः तस्याः वध्वाः मुहूर्त्तं कर्णोत्पलतां प्रपेदे ॥ २६ ॥

तदिति । तत् वधूमुखम् आचारेण प्राप्तात् धूमग्रहणात् अञ्जनस्य क्लेदः अञ्जनक्लेदः अञ्जनमिश्रवाष्पोदकम् इत्यर्थः तेन समाकुलाक्षं प्रम्लानः बीजाङ्कुरः यवाङ्कुरः एव कर्णपूरः अवतंसः यस्य तत् पाटलगण्डलेखम् अरुणगण्डस्थलञ्च बभूव ॥ २७ ॥

ताविति । कनकासनस्थौ तौ कन्याकुमारौ स्नातकैः गृहस्थविशेषैः । "स्नातकस्त्वाप्लुतव्रती" इत्यमरः । बन्धुमता बन्धुपुरःसरेण इत्यर्थः राज्ञा च पुरन्ध्रिभिः पतिपुत्रवतीभिः नारीभिश्च

इति स्वसुर्भोजकुलप्रदीपः
सम्पाद्य पाणिग्रहणं स राजा ।
महीपतीनां पृथगर्हणार्थम्
समादिदेशाधिकृतानधिश्रीः ॥ २९ ॥

लिङ्गैर्मुदः संवृतविक्रियास्ते
ह्रदाः प्रसन्ना इव गूढनक्राः ।
वैदर्भमामन्त्र्य ययुस्तदीयां
प्रत्यर्प्य पूजामुपदाच्छलेन ॥ ३० ॥

क्रमशः प्रयुक्तं स्नातकादीनां पूर्व्वपूर्व्ववैशिष्ट्यात् क्रमेण कृतम् आर्द्राक्षतानाम् आरोपणम् अन्वभूताम् अनुभूतवन्तौ ॥ २८ ॥

इतीति । अधिश्रीः अधिकसम्पन्नः भोजकुलप्रदीपः सः राजा इति स्वसुः इन्दुमत्याः पाणिग्रहणं विवाहं सम्पाद्य कारयित्वा महीपतीनां राज्ञां पृथक् एकैकशः अर्हणार्थं पूजार्थम् अधिकृतान् अधिकारिणः समादिदेश आज्ञापयामास ॥ २९ ॥

लिङ्गैरिति । मुदः सन्तोषस्य लिङ्गैः चिह्नैः कपटहासादिभिः संवृतविक्रियाः निगूहितमत्सराः अत एव प्रसन्नाः बहिर्निर्म्मलाः गूढनक्राः अन्तर्लीनग्राहाः ह्रदाः इव स्थिताः ते नृपाः वैदर्भं भोजम् आमन्त्र्य आपृच्छ्य तदीयां वैदर्भीयां पूजाम् उपदाच्छलेन उपायनमिषेण प्रत्यर्प्य ययुः गतवन्तः ॥ ३० ॥

स राजलोकः कृतपूर्व्वसंवित्
आरम्भसिद्धौ समयोपलभ्यम् ।
आदास्यमानः प्रमदामिषं तत्
आवृत्य पन्थानमजस्य तस्थौ ॥ ३१ ॥

भर्त्तापि तावत् क्रथकैशिकाना-
मनुष्ठितानन्तरजाविवाहः ।
सत्त्वानुरूपाहरणीकृतश्रीः
प्रास्थापयद्राघवमन्वगाच्च ॥ ३२ ॥

स इति । आरम्भसिद्धौ कार्य्यसिद्धौ विषये पूर्व्वं कृता कृतपूर्व्वा । सुप्सुपेति समासः । कृतपूर्व्वा संवित् सङ्केतः मार्गावरोधरूपः उपायः येन सः तथोक्तः । "संवित् युद्धे प्रतिज्ञायां सङ्केताचारनामसु" इति केशवः । सः राजलोकः समयोपलभ्यम् अजप्रस्थानकाले लभ्यं तदा तस्यैकाकित्वात् इति भावः । समरोपलभ्यमिति पाठे युद्धसाध्यम् इत्यर्थः । तत् प्रमदा एव आमिषं भोग्यवस्तु । "आमिषं त्वस्त्रियां मांसे तथा स्याद्भोग्यवस्तुनि" इति केशवः । आदास्यमानः ग्रहीष्यमाणः सन् अजस्य पन्थानम् आवृत्य अवरुध्य तस्थौ ३१ ॥

भर्त्तेति । अनुष्ठितः सम्पादितः अनन्तरजायाः अनुजायाः विवाहः येन सः तथोक्तः क्रथकैशिकानां देशानां भर्त्ता स्वामी भोजः अपि तावत् तदा सत्त्वानुरूपम् उत्साहानुरूपं यथा तथा

तिस्रस्त्रिलोकप्रथितेन सार्द्ध-
मजेन मार्गे वसतीरुषित्वा ।
तस्मात् अपावर्त्तत कुण्डिनेशः
पर्व्वात्यये सोम इवोष्णरश्मेः ॥ ३३ ॥
प्रमन्यवः प्रागपि कोशलेन्द्रे
प्रत्येकमात्तस्वतया बभूवुः ।
अतो नृपाश्चक्षमिरे समेताः
स्त्रीरत्नलाभं न तदात्मजस्य ॥ ३४ ॥

आ समन्तात्। अनेनानियतवस्तुदानम् इत्यर्थः। हरणं कन्यायै देयं धनम्। "यौतुकादि तु यद्देयं स दायो हरणञ्च तत्" इत्यमरः। अहरणं हरणीकृता श्रीः येन तथोक्तः सन् राघवम् अजं प्रास्थापयत् प्रस्थापितवात् स्वयम् अन्वगात् अनुजगाम च ॥ ३२ ॥

तिस्र इति। कुण्डिनं विदर्भनगरं तस्य ईशः भोजः त्रिषु लोकेषु प्रथितेन अजेन सार्द्धं मार्गे पथि तिस्रः वसतीः रात्रीः उषित्वा। "वसती रात्रिवेश्मनोः" इत्यमरः। कालाध्वनोरत्यन्तसंयोगे इति द्वितीया। पर्व्वात्यये दर्शान्ते उष्णरश्मेः सूर्य्यात् सोमः चन्द्रः इव, तस्मात् अजात् अपावर्त्तत तं विसृज्य निवृत्तः इत्यर्थः ॥ ३३ ॥

प्रमन्यव इति। नृपाः राजानः प्राक् अपि प्रत्येकम् आत्त-

तमुद्वहन्तं पथि भोजकन्याम्
रुरोध राजन्यगणः स दृप्तः।
बलिप्रदिष्टां श्रियमाददानं
त्रैविक्रमं पादमिवेन्द्रशत्रुः ॥ ३५ ॥

तस्याः स रक्षार्थमनल्पयोध
मादिश्य पित्र्यं सचिवं कुमारः।
प्रत्यग्रहीत् पार्थिववाहिनीं ताम्
भागीरथीं शोण इवोत्तरङ्गः ॥ ३६ ॥

स्वतया दिग्विजये गृहीतधनत्वेन कोशलेन्द्रे रघौ प्रमन्यवः रूढ़वैराः बभूवुः, अतः हेतोः समेताः सङ्गताः सन्तः तदात्मजस्य रघुसूनोः स्त्रीरत्नलाभं न चक्षमिरे न सेहिरे ॥ ३४ ॥

तमिति। दृप्तः उद्धतः सः राजन्यगणः राजसङ्घातः भोजकन्याम् उद्वहन्तं नयन्तं तम् अजं बलिना वैरोचनिना प्रदिष्टां दत्तां श्रियम् आददानं स्वीकुर्व्वाणं त्रिविक्रमस्य इमं त्रैविक्रमं पादम् इन्द्रशत्रुः प्रह्लादः इव पथि रुरोध। तथा च ब्रह्माण्डपुराणे, "विरोचनविरोधेऽपि प्रह्लादः प्रात्मनं स्मरन्। विष्णोस्तु क्रममाणस्य पादाम्भोजं रुरोध ह॥" इति ॥ ३५ ॥

तस्या इति। सः कुमारः अजः तस्याः इन्दुमत्याः रक्षार्थम् अनल्पयोधं बहुभटं पितुरागतं पित्र्यम् आप्तम् इत्यर्थः सचिवम् आदिश्य आज्ञाप्य तां पार्थिववाहिनीं राजसेनाम्।

पत्तिः पदातिं रथिनं रथेशः
तुरङ्गसादी तुरगाधिरूढम् ।
यन्ता गजस्याभ्यपतद्गजस्थं
तुल्यप्रतिद्वन्द्वि बभूव युद्धम् ॥ ३७ ॥
नदत्सु तूर्य्येष्वविभाव्यवाचः
नोदीरयन्ति स्म कुलोपदेशान् ।

"ध्वजिनी वाहिनी सेना" इत्यमरः । भागीरथीम् उत्तरङ्गः शोणः शोणाख्यः नदः इव, प्रत्यग्रहीत् अभियुक्तवान् ॥ ३६ ॥

पत्तिरिति । पत्तिः पादचारः योद्धा पदातिं पादचारम् अभ्यपतत् । पादाभ्याम् अततीति पदातिः । पादस्य पदित्यादिना पदादेशः । "पदातिपत्तिपदगपादातिकपदाजयः" इत्यमरः । रथेशः रथिकः रथिनं रथारोहम् अभ्यपतत्, तुरङ्गसादी अश्वारोहः तुरगाधिरूढम् अश्वारोहम् अभ्यपतत् । "रथिनः स्यन्दनारोहाः अश्वारोहास्तु सादिनः" इत्यमरः । गजस्य यन्ता हस्त्यारोहः गजस्थं पुरुषम् अभ्यपतत्, इत्थम् अनेन प्रकारेण तुल्यप्रतिद्वन्द्वि एकजातीयप्रतिभटं युद्धं बभूव । अन्योन्यं द्वन्द्वं कलहोऽस्त्येषामिति प्रतिद्वन्द्विनः योधाः । "द्वन्द्वं कलहयुग्मयोः" इत्यमरः ॥ ३७ ॥

नदत्स्विति । तूर्य्येषु नदत्सु सत्सु अविभाव्यवाचः अनवधार्य्यगिरः चापभृतः धानुष्काः कुलमुपदिश्यते प्रख्याप्यते यैः ते कुलोपदेशाः तान् कुलनामानि न उदीरयन्ति स्म न उच्चारया-

बाणाक्षरैरेव परस्परस्य
नामोर्जितं चापभृतः शशंसुः ॥ ३८ ॥
उत्थापितः संयति रेणुरश्वैः
सान्द्रीकृतः स्यन्दनवंशचक्रैः ।
विस्तारितः कुञ्जरकर्णतालै-
र्नेत्रक्रमेणोपरुरोध सूर्य्यम् ॥ ३९ ॥
मत्स्यध्वजा वायुवशाद्विदीर्णै-
र्मुखैः प्रवृद्धध्वजिनीरजांसि ।

मासुः श्रोतुमशक्यत्वाद्वाचो नाब्रुवन् इत्यर्थः । किन्तु बाणा-क्षरैः बाणेषु लिखिताक्षरैः एव परस्परस्य अन्योन्यस्य ऊर्जितं प्रख्यातं नाम शशंसुः ऊचुः ॥ ३८ ॥

उत्थापित इति । संयति संग्रामे अश्वैः उत्थापितः, स्यन्दन-वंशानां रथसमूहानां चक्रैः रथाङ्गैः सान्द्रीकृतः घनीकृतः । "वंशः पृष्ठास्थ्नि गेहोर्द्ध्वकाष्ठे वेणौ गणे कुले" इति केशवः । कुञ्जरकर्णानां तालैः ताड़नैः विस्तारितः प्रसारितः रेणुः नेत्र-क्रमेण अंशुकपरिपाट्या अंशुकमिव इत्यर्थः । "स्याज्जटांशुक-योर्नेत्रम्" इति, "क्रमोऽङ्घ्रौ परिपाट्यां च" इति च केशवः । सूर्य्यम् उपरुरोध आच्छादयामास ॥ ३९ ॥

मत्स्येति । वायुवशात् विदीर्णैः विवृतैः मुखैः महान्ति ध्वजिनीरजांसि सैन्यरेणून् पिबन्तः गृह्णन्तः मत्स्यध्वजाः मत्स्या-

बभुः पिबन्तः परमार्थमत्स्याः
पर्य्याविलानीव नवोदकानि ॥ ४० ॥
रथो रथाङ्गध्वनिना विजज्ञे
विलोलघण्टाक्वणितेन नागः ।
स्वभर्तृनामग्रहणाद् बभूव
सान्द्रे रजस्यात्मपरावबोधः ॥ ४१ ॥
आवृण्वतो लोचनमार्गमाजौ
रजोऽन्धकारस्य विजृम्भितस्य ।
शस्त्रक्षताश्वद्विपवीरजन्मा
बालारुणोऽभूद्रुधिरप्रवाहः ॥ ४२ ॥

कारा: ध्वजाः, पर्य्याविलानि परितः कलुषाणि नवोदकानि पिबन्तः परमार्थमत्स्याः इव, बभुः भान्ति स्म ॥ ४० ॥

रथ इति । सान्द्रे प्रवृद्धे रजसि रथः रथाङ्गध्वनिना चक्रस्वनेन विजज्ञे ज्ञातः, नागः हस्ती विलोलानां घण्टानां क्वणितेन नादेन विजज्ञे । आत्मपरावबोधः स्वपरविवेकः योधानाम् इति शेषः । स्वभर्तृणां स्वस्वामिनां नामग्रहणात् नामोच्चारणात् बभूव रजोऽन्धतया सर्व्वं स्वं परञ्च शब्दादेवानुमाय प्रजह्रुः इत्यर्थः ॥ ४१ ॥

आवृण्वत इति । लोचनमार्गम् आवृण्वतः दृष्टिपथम् उपरुन्धतः आजौ युद्धे विजृम्भितस्य व्याप्तस्य रजः एव अन्धकारे

स च्छिन्नमूलः क्षतजेन रेणुः
तस्योपरिष्टात् पवनावधूतः ।
अङ्गारशेषस्य हुताशनस्य
पूर्व्वोत्थितो धूम इवाबभासे ॥ ४३ ॥

प्रहारमूर्च्छापगमे रथस्थाः
यन्तॄनुपालभ्य निवर्त्तिताश्वान् ।
यैः सादिता लक्षितपूर्व्वकेतून्
तानेव सामर्षतया निजघ्नुः ॥ ४४ ॥

तस्य शस्त्रक्षतेभ्यः अश्वद्विपवीरेभ्यः जन्म यस्य सः तथोक्तः रुधिरप्रवाहः बालारुणः बालार्कः अभूत् । "अरुणः भास्करेऽपि स्यात्" इत्यमरः । बालविशेषणं रुधिरसावर्ण्यार्थम् ॥ ४२ ॥

स इति । क्षतजेन रुधिरेण छिन्नमूलः त्याजितभूतलसम्बन्धः इत्यर्थः तस्य क्षतजस्य उपरिष्टात् पवनावधूतः वाताहतः सः रेणुः अङ्गारशेषस्य हुताशनस्य अग्नेः पूर्व्वोत्थितः धूमः इव, आबभासे दिदीपे ॥ ४३ ॥

प्रहारेति । रथस्थाः रथिनः, प्रहारेण या मूर्च्छा तस्याः अपगमे सति । मूर्च्छितानामन्यत्र नीत्वा संरक्षणं सारथिधर्म्मः । इति ज्ञात्वा निवर्त्तिताश्वान् यन्तॄन् सारथीन् उपालभ्य असाधु कृतम् इत्यधिक्षिप्य पूर्व्वं यैः स्वयं सादिताः हताः लक्षितपूर्व्वकेतून् पूर्व्वदृष्टैः केतुभिः प्रत्यभिज्ञातान् इत्यर्थः, तान्

अप्यर्द्धमार्गे परबाणलूनाः
धनुर्भृतां हस्तवतां पृषत्काः ।
संप्रापुरेवात्मजवानुवृत्त्या
पूर्व्वार्द्धभागैः फलिभिः शरव्यम् ॥ ४५ ॥

आधोरणानां गजसन्निपाते
शिरांसि चक्रैर्निशितैः क्षुराग्रैः ।
हृतान्यपि श्येननखाग्रकोटि-
व्यासक्तकेशानि चिरेण पेतुः ॥ ४६ ॥

एव सामर्षतया सकोपत्वेन हेतुना निजघ्नुः प्रजह्रुः॥ ४४ ॥

अपीति। अर्द्धश्चासौ मार्गश्च तस्मिन् अर्द्धमार्गे परेषां बाणैः लूनाः छिन्नाः अपि हस्तवतां कृतहस्तानां धनुर्भृतां पृषत्काः शराः आत्मजवानुवृत्त्या स्ववेगानुबन्धेन हेतुना फलिभिः लोहाग्रवद्भिः। "शस्यबाणाग्रयोः फलम्" इति विश्वः। पूर्व्वार्द्धभागैः शृणातीति शरुः तस्मै हितं शरव्यं लक्ष्यम्। उगवादिभ्यो यदिति यत्प्रत्ययः। "लक्षं लक्ष्यं शरव्यञ्च" इत्यमरः। संप्रापुः एव न तु मध्ये पतिताः इत्यर्थः॥ ४५ ॥

आधोरणानामिति। गजसन्निपाते गजयुद्धे निशितैः अत एव क्षुराग्रैः क्षुरस्य अग्रमिव अग्रं येषां तैः चक्रैः आयुधविशेषैः हृतानि छिन्नानि अपि श्येनानां पक्षिविशेषाणाम्। "पक्षी श्येनः" इत्यमरः। नखाग्रकोटिषु व्यासक्ताः केशाः येषां

पूर्व्वं प्रहर्त्ता न जघान भूयः
प्रतिप्रहाराक्षममश्वसादी ।
तुरङ्गमस्कन्धनिषण्णदेहं
प्रत्याश्वसन्तं रिपुमाचकाङ्क्ष ॥ ४७ ॥

तनुत्यजां वर्म्मभृतां विकोशैः
वृहत्सु दन्तेष्वसिभिः पतद्भिः ।
उद्यन्तमग्निं शमयाम्बभूवुः
गजा विविग्नाः करशीकरेण ॥ ४८ ॥

तानि आधोरणानां हस्त्यारोहाणाम् । "आधोरणा हस्तिपका हस्त्यारोहा निषादिनः" इत्यमरः । शिरांसि चिरेण पेतुः पतितानि । शिरःपातात् प्रागेवारह्य पश्चादुत्पततां पक्षिणां नखेषु केशसङ्गश्चिरपातहेतुः इति भावः ॥ ४६ ॥

पूर्व्वमिति । पूर्व्वं प्रथमं प्रहर्त्ता अश्वसादी तौरङ्गिकः प्रतिप्रहारे अक्षमम् अशक्तं तुरङ्गमस्कन्धे निषण्णदेहं मूर्च्छितम् इत्यर्थः रिपुं भूयः न जघान पुनः न प्रजहार किन्तु प्रत्याश्वसन्तं पुनः उज्जीवन्तम् आचकाङ्क्ष । "नायुधव्यसनं प्राप्तं नार्त्तं नातिपरिक्षतम्" इति निषेधात् इति भावः ॥ ४७ ॥

तनुत्यजामिति । तनुत्यजां तनुषु निस्पृहाणाम् इत्यर्थः वर्म्मभृतां कवचिनां खड्गिभिः वृहत्सु दन्तेषु पतद्भिः अत एव, विकोशैः विधानात् वहतैः । "कोशोऽस्त्री कुड्मले खड्गपिधाने"

शिलीमुखोत्कृत्तशिरःफलाढ्या
च्युतैः शिरस्त्रैश्चषकोत्तरेव।
रणक्षितिः शोणितमद्यकुल्या
रराज मृत्योरिव पानभूमिः॥ ४९॥

उपान्तयोर्निष्कुषितं विहङ्गैः
आक्षिप्य तेभ्यः पिशितप्रियापि।
केयूरकोटिक्षततालुदेशा
शिवा भुजच्छेदमपाचकार॥ ५०॥

इत्यमरः। असिभिः खड्गैः उद्यन्तम् उत्थितम् अग्निं विविग्नाः भीताः गजाः करशीकरेण शुण्डादण्डजलकणेन शमयाम्बभूवुः शान्तं चक्रुः। ४८॥

शिलीमुखेति। शिलीमुखैः बाणैः उत्कृत्तानि शिरांसि एव फलानि तैः आढ्या सम्पन्ना च्युतैः भ्रष्टैः शिरांसि त्रायन्ते इति शिरस्त्राणि शीर्षण्यानि। "शीर्षण्यञ्च शिरस्त्रे" इत्यमरः। तैः चषकोत्तरा चषकः पानपात्रम् उत्तरं यस्यां सा इव। "चषकोऽस्त्री पानपात्रम्" इत्यमरः। शोणितानि एव मद्यं तस्य कुल्याः प्रवाहाः यस्यां सा। "कुल्याल्पा कृत्रिमा सरित्" इत्यमरः। रणक्षितिः युद्धभूमिः, मृत्योः पानभूमिः इव, रराज॥ ४९॥

उपान्तयोरिति। उपान्तयोः प्रान्तयोः विहङ्गैः पक्षिभिः निष्कुषितं खण्डितम्। इण्निष्ठायामितीड़ागमः। भुजच्छेदं

कश्चित् द्विषत्खड्गहृतोत्तमाङ्गः
सद्यो विमानप्रभुतामुपेत्य।
वामाङ्गसंसक्तसुराङ्गनः स्वं
नृत्यत् कबन्धं समरे ददर्श ॥ ५१ ॥

अन्योन्यसूतोन्मथनादभूताम्
तावेव सूतौ रथिनौ च कौचित्।
व्यश्वौ गदाव्यायतसंप्रहारौ
भग्नायुधौ बाहुविमर्दनिष्ठौ ॥ ५२ ॥

भुजखण्डं तेभ्यः विहङ्गेभ्यः आक्षिप्य आच्छिद्य पिशितप्रिया मांसप्रिया अपि शिवा क्रोष्टी। "शिवः कीलः शिवा क्रोष्टी" इति विश्वः। केयूरकोट्या अङ्गदाग्रेण क्षतः तालुदेशः यस्याः सा सती अपाचकार अपसारयामास। किरतेः करोतेर्वा लिट् ॥ ५० ॥

कश्चिदिति। द्विषतः खड्गेन हृतोत्तमाङ्गः छिन्नशिराः कश्चित् वीरः सद्यः विमानप्रभुतां विमानाधिपत्यं देवत्वम् इत्यर्थः उपेत्य प्राप्य वामाङ्गसंसक्ता सव्योत्सङ्गसङ्गिनी सुराङ्गना यस्य सः तथोक्तः सन् समरे नृत्यत् स्वं निजं कबन्धं विशिरस्कं कलेवरं ददर्श। "कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्ध कलेवरम्" इत्यमरः॥ ५१॥

अन्योन्येति। कौचित् वीरौ अन्योन्यस्य सूतयोः सारथ्योः उन्मथनात् निधनात् तौ एव सूतौ रथिनौ च योद्धारौ अभूतां, तौ एव व्यश्वौ नष्टाश्वौ सन्तौ गदाभ्यां व्यायतः दीर्घः

परस्परेण चतयोः प्रहर्त्रोः
उत्क्रान्तवाय्वोः समकालमेव।
अमर्त्यभावेऽपि कयोश्चिदासीत्
एकाप्सरःप्रार्थितयोर्विवादः॥ ५३॥
व्यूहावुभौ तावितरेतरस्मात्
भङ्गं जयञ्चापतुरव्यवस्थम्।

संप्रहारः युद्धं ययोः तौ अभूताम्, ततः भग्नायुधौ भग्नगदौ सन्तौ बाहुविमर्द्दे निष्ठा नाशः ययोः तौ अभूताम्। "निष्ठा निष्पत्ति-नाशान्ता" इत्यमरः॥ ५२॥

परस्परेणेति। परस्परेण अन्योन्यं चतयोः चततन्वोः समकालम् एककालं यथा तथा उत्क्रान्तवाय्वोः युगपदुद्गत-प्राणयोः एका एव अप्सराः प्रार्थिता याभ्यां तयोः एकाप्सरः-प्रार्थितयोः प्रार्थितैकाप्सरसोः इत्यर्थः। वाहिताग्न्यादिष्विति परनिपातः। अथवा, एकस्याम् अप्सरसि प्रार्थितं प्रार्थना ययोः इति विग्रहः। स्त्रियां बहुष्वप्सरस इति बहुत्वाभिधानं प्रायिकम्। कयोश्चित् प्रहर्त्रोः योधयोः अमर्त्यभावे अपि देवत्वे अपि विवादः कलहः आसीत्। एकामिषाभिलाषो हि महद्वैरबीजम् इति भावः॥ ५३॥

व्यूहाविति। तौ उभौ व्यूहौ सेनासङ्घातौ। "व्यूहस्तु बल-विन्यासः" इत्यमरः। पश्चात् पुरश्च यौ मारुतौ तयोः पर्याय-वृत्त्या क्रमवृत्त्या प्रवृद्धौ महार्णवोर्मी इव इतरेतरस्मात् अन्यो-

पश्चात् पुरोमारुतयोः प्रवृद्धौ
पर्य्यायवृत्त्येव महार्णवोर्म्मी ॥ ५४ ॥
परेण भग्नेऽपि बले महौजाः
ययावजः प्रत्यरिसैन्यमेव ।
धूमो निवर्त्त्येत समीरणेन
यतस्तु कक्षस्तत एव वह्निः ॥ ५५ ॥
रथी निषङ्गी कवची धनुष्मान्
दृप्तः स राजन्यकमेकवीरः ।

न्यस्मात् अव्यवस्थं व्यवस्थारहितम् अनियतं जयं भङ्गं पराजयं च आपतुः प्राप्तवन्तौ ॥ ५४ ॥

परेणेति । बले स्वसैन्ये परेण परबलेन भग्ने अपि महौजाः महाबलः अजः अरिसैन्यं प्रति एव ययौ । तथाहि, समीरणेन वायुना धूमः निवर्त्त्येत कक्षात् अपसार्य्येत । वर्त्ततेर्ण्यन्तात् कर्म्मणि सम्भावनायां लिङ् । वह्निस्तु यतः यत्र कक्षः तृणम् । "कक्षौ तु तृणवीरुधौ" इत्यमरः । ततः एव तत्रैव प्रवर्त्तते इति शेषः । सार्व्वविभक्तिकस्तसिः ॥ ५५ ॥

रथीति । रथी रथारूढः निषङ्गी तूणीरवान् । "तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः" इत्यमरः । कवची वर्म्मधरः धनुष्मान् धनुर्धरः दृप्तः रणदृप्तः एकवीरः असहायशूरः सः अजः राजन्यकं राजसमूहम् । गोत्रोक्षेत्यादिना वुञ्प्रत्ययः ।

निवारयामास महावराहः
कल्पक्षयोद्वृत्तमिवार्णवाम्भः ॥ ५६ ॥
स दक्षिणं तूणमुखेन वामं
व्यापारयन् हस्तमलक्ष्यताजौ ।
आकर्णकृष्टा सकृदस्य योद्धुः
मौर्व्वीव बाणान् सुषुवे रिपुघ्नान् ॥ ५७ ॥
स रोषदष्टाधिकलोहितोष्ठैः
व्यक्तोर्द्धरेखा भ्रुकुटीर्व्वहद्भिः ।

महावराहः वराहावतारो विष्णुः कल्पक्षये कल्पान्तकाले उद्वृत्तम् उद्वेलम् अर्णवाम्भः इव निवारयामास ॥ ५६ ॥

स इति । सः अजः आजौ संग्रामे दक्षिणं हस्तं तूणमुखेन निषङ्गविवरेण वामम् अतिसुन्दरम् । "वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे" इति विश्वः । व्यापारयन् अलक्ष्यत शरसन्धानादयस्तु दुर्लक्ष्याः इत्यर्थः । सकृत् आकर्णकृष्टा योद्धुः अस्य अजस्य मौर्व्वी ज्या रिपून् हन्तीति, रिपुघ्नाः तान् । अमनुष्यकर्तृके च इति टक्प्रत्ययः । बाणान् सुषुवे इव, इत्युत्प्रेक्षा ॥ ५७ ॥

स इति । सः अजः रोषेण दष्टाः अत एव अधिकलोहिताः ओष्ठाः येषां तानि तैः व्यक्ता ऊर्द्धा रेखा यासां ताः भ्रुकुटीः भ्रूभङ्गान् वहद्भिः भल्लनिकृत्ताः बाणविशेषच्छिन्नाः

तस्तार गां भल्लनिकृत्तकण्ठैः
हूङ्कारगर्भैर्द्विषतां शिरोभिः ॥ ५८ ॥
सर्व्वैर्बलाङ्गैर्द्विरदप्रधानैः
सर्व्वायुधैः कङ्कटभेदिभिश्च ।
सर्व्वप्रयत्नेन च भूमिपालाः
तस्मिन् प्रजह्रुर्युधि सर्व्व एव ॥ ५९ ॥
सोऽस्त्रव्रजैश्छिन्नरथः परेषाम्
ध्वजाग्रमात्रेण बभूव लक्ष्यः ।

तैः हूङ्कारगर्भैः सहूङ्कारैः हूङ्कुर्व्वद्भिः इत्यर्थः । द्विषतां शिरोभिः गां भूमिं तस्तार छादयामास ॥ ५८ ॥

सर्व्वैरिति । द्विरदप्रधानैः गजमुख्यैः सर्व्वैः बलाङ्गैः सेनाङ्गैः । "हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम्" इत्यमरः । कङ्कटभेदिभिः कवचभेदिभिः । "उरश्छदः कङ्कटकोऽजगरः कवचोऽस्त्रियाम्" इत्यमरः । सर्व्वायुधैश्च । बाह्यबलमुक्त्वा आन्तरमाह, सर्व्वप्रयत्नेन च सर्व्वे एव भूमिपालाः युधि तस्मिन् अजे प्रजह्रुः तं प्रजह्रुः इत्यर्थः । सर्व्वत्र सर्व्वकारकशक्तिसम्भवात् कर्म्मणोऽप्यधिकरणविवक्षायां सप्तमी । तदुक्तम्, "अनेकशक्तियुक्तस्य विश्वस्यानेककर्म्मणः । सर्व्वदा सर्व्वथाभावात् क्वचित् किञ्चित् विवक्ष्यते ॥" इति ॥ ५९ ॥

स इति । परेषां द्विषाम् अस्त्रव्रजैः छिन्नरथः सः अजः,

नीहारमग्नो दिनपूर्व्वभागः
किञ्चित्प्रकाशेन विवस्वतेव ॥ ६० ॥
प्रियंवदात् प्राप्तमसौ कुमारः
प्रायुङ्क्त राजस्वधिराजसूनुः ।
गान्धर्व्वमस्त्रं कुसुमास्त्रकान्तः
प्रस्वापनं स्वप्ननिवृत्तलौल्यः ॥ ६१ ॥
ततो धनुष्कर्षणमूढहस्त
मेकांसपर्य्यस्तशिरस्त्रजालम् ।
तस्थौ ध्वजस्तम्भनिषण्णदेहं
निद्राविधेयं नरदेवसैन्यम् ॥ ६२ ॥

नीहारैः हिमैः मग्नः दिनपूर्व्वभागः प्रातःकालः किञ्चित्प्रकाशेन ईषल्लक्ष्येण विवस्वता इव, ध्वजाग्रमात्रेण लक्ष्यः बभूव ध्वजाग्रादन्यन किञ्चिल्लक्ष्यते स्म इत्यर्थः ॥ ६० ॥

प्रियंवदादिति । अधिराजसूनुः महाराजपुत्रः कुसुमास्त्रकान्तः मदनसुन्दरः स्वप्ननिवृत्तलौल्यः सप्नविष्णाः जागरूकः इत्यर्थः असौ कुमारः अजः प्रियंवदात् पूर्व्वोक्तात् गन्धर्व्वात् प्राप्तं गान्धर्व्वं गन्धर्व्वदेवताकम् । सास्य देवतेत्यण् । प्रस्वापयतीति प्रस्वापनं निद्राजनकम् अस्त्रं राजसु प्रायुङ्क्त प्रयुक्तवान् ॥ ६१ ॥

तत इति । ततः धनुःष्कर्षणे मूढहस्तम् अव्यापृतहस्तम् एकस्मिन् अंसे पर्य्यस्तं स्रस्तं शिरस्त्राणां शीर्षण्यानां जालं समूहः

ततः प्रियोपात्तरसेऽधरौष्ठे
निवेश्य दध्मौ जलजं कुमारः ।
तेन स्वहस्तार्ज्जितमेकवीरः
पिबन् यशो मूर्त्तमिवाबभासे ॥ ६३ ॥

शङ्खस्वनाभिज्ञतया निवृत्ताः
तं सन्नशत्रुं ददृशुः स्वयोधाः ।
निमीलितानामिव पङ्कजानां
मध्ये स्फुरन्तं प्रतिमाशशाङ्कम् ॥ ६४ ॥

यस्य तत् ध्वजस्तम्भेषु निषण्णाः अवष्टब्धाः देहाः यस्य तत् नरदेवानां राज्ञां सेना एव सैन्यम् । चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्प्रत्ययः । निद्राविधेयं निद्रापरतन्त्रं तस्थौ ॥ ६२ ॥

तत इति । ततः कुमारः अजः प्रियायाः इन्दुमत्याः उपात्तरसे आस्वादितमाधुर्य्ये अतिश्लाघ्ये इति भावः अधरौष्ठे जलजं शङ्खं निवेश्य । "जलजं शङ्खपद्मयोः" इति विश्वः । दध्मौ मुखमारुतेन पूरयामास, तेनौष्ठनिविष्टेन शङ्खेन एकवीरः सः स्वहस्तार्ज्जितं मूर्त्तं मूर्त्तिमत् यशः पिबन् इव आबभासे यशसः शुभ्रत्वात् इति भावः ॥ ६३ ॥

शङ्खेति । शङ्खस्वनस्य अजशङ्खध्वनेः अभिज्ञतया प्रत्यभिज्ञातत्वात् निवृत्ताः प्राक् पलाय्य संप्रति प्रत्यागताः स्वयोधाः सन्नशत्रुं निद्राणशत्रुं तम् अजं, निमीलितानां मुकुलितानां पङ्कजानां

सशोणितैस्तेन शिलीमुखाग्रैः
निक्षेपिताः केतुषु पार्थिवानाम्।
यशो हृतं संप्रति राघवेण
न जीवितं वः कृपयेति वर्णाः॥ ६५ ॥
स चापकोटीनिहितैकबाहुः
शिरस्त्रनिष्कर्षणभिन्नमौलिः।
ललाटबद्धश्रमवारिबिन्दुः
भीतां प्रियामेत्य वचो बभाषे॥ ६६ ॥

मध्ये स्फुरन्तं प्रतिमा चासौ शशाङ्कश्च तं प्रतिमाशशाङ्कं प्रतिबिम्बचन्द्रम् इव, ददृशुः॥ ६४॥

सशोणितैरिति। संप्रति राघवेण रघुपुत्रेण। पूर्व्वं रघुणा इति भावः। हे राजानः! वः युष्माकं यशः हृतं जीवितं तु कृपया न हृतं न त्वशक्तया इति भावः इत्येवंरूपा वर्णाः एतदर्थप्रतिपादकं वाक्यम् इत्यर्थः सशोणितैः शोणितदिग्धैः शिलीमुखाग्रैः बाणाग्रैः साधनैः तेन अजेन प्रयोजककर्त्रा पार्थिवानां राज्ञां केतुषु ध्वजस्तम्भेषु निक्षेपिताः प्रयोज्यैरन्यैर्निवेशिताः लेखिताः इत्यर्थः। क्षिपतेर्ण्यन्तात् कर्म्मणि क्तः॥ ६५॥

स इति। चापकोट्यां निहितः एकबाहुः येन सः शिरस्त्रस्य निष्कर्षणेन अपनयनेन भिन्नमौलिः श्लथकेशबन्धः। "चूड़ा किरीटं केशाश्च संयता मौलयस्त्रयः" इत्यमरः। ललाटे बद्धाः

इतः परानर्भकहार्य्यशस्त्रान्
वैदर्भि ! पश्यानुमता मयासि ।
एवंविधेनाहवचेष्टितेन
त्वं प्रार्थ्यसे हस्तगता ममैभिः ॥ ६७ ॥

तस्याः प्रतिद्वन्द्विभवाद्विषादात्
सद्यो विमुक्तं मुखमावभासे ।
निश्वासवाष्पापगमात् प्रपन्नः
प्रसादमात्मीयमिवात्मदर्शः ॥ ६८ ॥

श्रमवारिविन्दवः यस्य सः सः अजः भीतां प्रियाम् इन्दुमतीम् एत्य आसाद्य वचः वभाषे ॥ ६६ ॥

किमित्याह, इत इति । हे वैदर्भि ! इन्दुमति ! इतः इदानीम् अर्भकहार्य्यशस्त्रान् वालकापहार्य्यायुधान् परान् शत्रून् पश्य मया अनुमता असि द्रष्टुम् इति शेषः । एभिः नृपैः एवंविधेन निद्रारूपेण आहवचेष्टितेन रणकर्म्मणा मम हस्तगता हस्तगतवत् दुर्ग्रहा इत्यर्थः त्वं प्रार्थ्यसे अपजिहीर्ष्यसे इत्यर्थः । एवंविधेनेत्यत्र स्वहस्तनिर्द्देशेन सोपहाससुत्रचेति द्रष्टव्यम् ॥ ६७ ॥

तस्या इति । प्रतिद्वन्द्विभवात् रिपूत्थात् विषादात् दैन्यात् सद्यः विमुक्तं तस्याः मुखं, निश्वासस्य यः वाष्पः उष्मा, । "वाष्पो नेत्रजलोष्मणोः" इति विश्वः । तस्य अपगमात् हेतोः आत्मीयं

हृष्टापि सा ह्रीविजिता न साक्षात्
वाग्भिः सखीनां प्रियमभ्यनन्दत्।
स्थली नवाम्भःपृषताभिवृष्टा
मयूरकेकाभिरिवाभ्रवृन्दम्॥ ६९ ॥

इति शिरसि स वामं पादमाधाय राज्ञा-
मुदवहदनवद्यां तामवद्यादपेतः।
रथतुरगरजोभिस्तस्य रूक्षालकाग्रा
समरविजयलक्ष्मीः सैव मूर्त्ता बभूव॥ ७०॥

प्रसादं नैर्मल्यं प्रपन्नः प्राप्तः आत्मा स्वरूपं दृश्यते अनेनेति आत्मदर्शः दर्पणः इव, आबभासे॥ ६८॥

हृष्टेति। सा इन्दुमती हृष्टा अपि पत्युः पौरुषेण प्रमुदिता अपि ह्रिया विजिता यतः अतः प्रियम् अजं साक्षात् स्वयं न अभ्यनन्दत् न प्रशशंस, किन्तु नवैः अम्भःपृषतैः पयोविन्दुभिः अभिवृष्टा अभिषिक्ता स्थली अकृत्रिमा भूमिः। जानपदकुण्ड-गोणस्थलेत्यादिना अकृत्रिमार्थे ङीष्। अभ्रवृन्दं मेघसङ्घं मयूरकेकाभिः इव, सखीनां वाग्भिः अभ्यनन्दत्॥ ६९॥

इतीति। न उद्यते न उच्यते इति अवद्यं गर्ह्यम्। अवद्य-पण्येत्यादिना निपातः। "कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः" इत्यमरः। तस्मात् अपेतः निर्दोषः इत्यर्थः सः अजः इति राज्ञां शिरसि वामं पादम् आधाय अनवद्याम् अदोषां

प्रथमपरिगतार्थस्तं रघुः सन्निवृत्तं
विजयिनमभिनन्द्य श्लाघ्यजायासमेतम् ।
तदुपहितकुटुम्बः शान्तिमार्गोत्सुकोऽभूत्
न हि सति कुलधुर्य्ये सूर्य्यवंश्या गृहाय ॥७१॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ
अजपाणिग्रहणो नाम सप्तमः सर्गः ।

---

ताम् इन्दुमतीम् उदवहत् उपानयत् आत्मसाच्चकार इत्यर्थः । अयमर्थस्तमुद्वहन्तं पथि भोजकन्यामित्यत्र न श्लिष्टः । तस्य अजस्य रथतुरगाणां रजोभिः रूक्षाणि परुषाणि अलकाग्राणि यस्याः सा सा इन्दुमती एव मूर्त्ता मूर्त्तिमती समरविजयलक्ष्मीः बभूव । एतल्लाभादन्यः को विजयलक्ष्मीलाभः इत्यर्थः ॥ ७० ॥

प्रथमेति । प्रथमम् अजागमनात् प्राक् एव परिगतः ज्ञातः अर्थः विवाहविजयरूपः येन सः प्रथमपरिगतार्थः रघुः विजयिनं विजययुक्तं श्लाघ्यजायासमेतं सन्निवृत्तं प्रत्यागतं तम् अजम् अभिनन्द्य तस्मिन् अजे उपहितकुटुम्बः सन् "सुतविन्यस्तपत्नीकः" इति याज्ञवल्क्यस्मरणात् इति भावः । शान्तिमार्गे मोक्षमार्गे उत्सुकः अभूत्, तथाहि कुलधुर्य्ये कुलधुरन्धरे सति सूर्य्यवंश्याः गृहाय गृहस्थाश्रमाय न भवन्ति ॥ ७१ ॥

इति श्रीमहामहोपाध्याय-कोलाचलमल्लिनाथसूरिविरचितायां
रघुवंशटीकायां सञ्जीवनी-समाख्यायां सप्तमः सर्गः ।

---

## अष्टमः सर्गः ।

अथ तस्य विवाहकौतुकं
ललितं बिभ्रत एव पार्थिवः ।
वसुधामपि हस्तगामिनी-
मकरोदिन्दुमतीमिवापराम् ॥ १ ॥
दुरितैरपि कर्त्तुमात्मसात्
प्रयतन्ते नृपसूनवो हि यत् ।

हेरम्बमवलम्बेऽहं यस्मिन् पातालकेलिषु ।
दन्तेनोद्दस्यति क्षोणीं विश्राम्यन्ति फणीश्वराः ॥

अथेति । अथ पार्थिवः रघुः ललितं सुभगं विवाहकौतुकं विवाहमङ्गलं विवाहहस्तसूत्रं वा बिभ्रतः एव । "कौतुकं मङ्गले हर्षे हस्तसूत्रे कुतूहले" इति शाश्वतः । तस्य अजस्य अपराम् इन्दुमतीम् इव वसुधाम् अपि हस्तगामिनीम् अकरोत् । अस्मिन् सर्गे वैतालीयं छन्दः ॥ १ ॥

दुरितैरिति । नृपसूनवः राजपुत्राः यत् राज्यं दुरितैः अपि विषप्रयोगादिनिषिद्धोपायैः अपि आत्मसात् स्वाधीनम् । तदधीनवचन इति सातिप्रत्ययः । कर्त्तुं प्रयतन्ते हि प्रवर्त्तन्ते एव इत्यर्थः । हिशब्दोऽवधारणे । "हि हेताववधारणे" इत्यमरः ।

तदुपस्थितमग्रहीदजः
पितुराज्ञेति न भोगतृष्णया ॥ २ ॥

अनुभूय वशिष्ठसम्भृतैः
सलिलैस्तेन सहाभिषेचनम्।
विशदोच्छ्वसितेन मेदिनी
कथयामास कृतार्थतामिव ॥ ३ ॥

स बभूव दुरासदः परैः
गुरुणाथर्व्वविदा कृतक्रियः।

उपस्थितं स्वतः प्राप्तं तत् राज्यम् अजः पितुराज्ञेति हेतोः अग्रहीत् स्वीचकार भोगतृष्णया तु न अग्रहीत् ॥ २ ॥

अनुभूयेति। मेदिनी भूमिः महिषी च ध्वन्यते वशिष्ठेन सम्भृतैः सलिलैः तेन अजेन सह अभिषेचनम् अनुभूय विशदोच्छ्वसितेन स्फुटमुद्गूढहर्षेण आनन्दनिर्म्मलोच्छ्वसितेन चेति ध्वन्यते, कृतार्थतां गुणवद्भर्तृलाभकृतं साफल्यं कथयामास इव। न चैतावता पूर्व्वेषामपकर्षः प्रशंसापरत्वात् "सर्व्वत्र जयमन्विच्छेत् पुत्रादिच्छेत् पराजयम्" इत्यङ्गीकृतत्वाच्च ॥ ३ ॥

स इति। अथर्व्वविदा अथर्व्ववेदाभिज्ञेन गुरुणा वशिष्ठेन कृतक्रियः अथर्व्वोक्तविधिना कृताभिषेकसंस्कारः इत्यर्थः सः अजः परैः शत्रुभिः दुरासदः दुर्द्धर्षः बभूव। तथाहि, अस्त्रतेजसा क्षत्त्रतेजसा सहितं युक्तं यत् ब्रह्म ब्रह्मतेजः अयं पवनाग्निसमागमः हि तत्कल्पः इत्यर्थः। पवनाग्नीत्यत्र पूर्व्व-

पवनाग्निसमागमो ह्ययम्
सहितं ब्रह्म यदस्त्रतेजसा ॥ ४ ॥
रघुमेव निवृत्तयौवनं
तममन्यन्त नवेश्वरं प्रजाः ।
स हि तस्य न केवलां श्रियम्
प्रतिपेदे सकलान् गुणानपि ॥ ५ ॥
अधिकं शुशुभे शुभंयुना
द्वितयेन द्वयमेव सङ्गतम् ।

निपातशास्त्रस्यानित्यत्वात् द्वन्द्वे घीति नाग्निशब्दस्य पूर्व्वनिपातः । तथाच काशिकायाम्, "अयमेकस्तु लक्षणहेत्वोरिति निर्द्देशः पूर्व्वनिपातव्यभिचारचिह्नम्" इति । क्षात्त्रेणैवार्थ दुर्द्धर्षः किमयं पुनर्वशिष्ठमन्त्रभावे सति इत्यर्थः । अत्र मनुः, "नाक्षत्त्रं ब्रह्म भवति क्षत्त्रं नाब्रह्म वर्द्धते । ब्रह्माक्षत्त्रे तु संयुक्ते इहामुत्र च वर्द्धते" । इति ॥

रघुमिति । प्रजाः नवेश्वरं तम् अजम् निवृत्तयौवनं प्रत्याहृत्तयौवनं रघुम् एव अमन्यन्त न किञ्चिद्भेदकमस्ति इत्यर्थः । कुतः ? हि यस्मात् सः अजः तस्य रघोः केवलाम् एकां श्रियं न प्रतिपेदे किन्तु सकलान् गुणान् शौर्य्यदाक्षिण्यादीन् अपि प्रतिपेदे अतस्तद्गुणयोगात् तद्बुद्धियुक्ता इत्यर्थः ॥ ५ ॥

अधिकमिति । द्वयम् एव शुभंयुना शुभवता । "शुभंयुस्तु शुभान्वितः" इत्यमरः । अहंशुभयोर्युस् इति युस्प्रत्ययः । द्वित-

पदमृद्धमजेन पैतृकं
विनयेनास्य नवञ्च यौवनम् ॥ ६ ॥
सदयं बुभुजे महाभुजः
सहसोद्वेगमियं व्रजेदिति।
अचिरोपनतां स मेदिनीं
नवपाणिग्रहणां वधूमिव ॥ ७ ॥
अहमेव मतो महीपतेः
इति सर्व्वः प्रकृतिष्वचिन्तयत्।

घेन सङ्गतं युतं सत् अधिकं शुशुभे। किं केनेत्याह, पदमिति। पैतृकं पितुरागतम्। ऋतष्ठञ् इति ठञ्प्रत्ययः। ऋद्धं समृद्धं पदं राज्यम् अजेन, अस्य अजस्य नवं यौवनं विनयेन च ॥ ६ ॥

सदयमिति। महाभुजः सः अजः अचिरोपनतां नवोपगतां मेदिनीं भुवं नवं पाणिग्रहणं विवाहः यस्याः ताम् नवोढ़ां वधूम् इव, सहसा बलात्कारेण चेत्। "सहोबलं सहा मार्गः" इत्यमरः। इयं मेदिनी वधूः वा उद्वेगं भयं व्रजेत् इति हेतोः सदयं सकृपं बुभुजे भुक्तवान् भुजोऽनवन इत्यात्मनेपदम् ॥ ७ ॥

अहमिति। प्रकृतिषु प्रजासु मध्ये सर्व्वः जनः, अथवा प्रकृतिष्वहमित्यनेनान्वयः व्यवधानन्तु सह्यम्। सर्व्वः जनः प्रकृतिषु अहमेव महीपतेः मतः महीपतिना मन्यमानः। मतिबुद्धिपूजार्थेभ्यश्चेति वर्त्तमाने क्तः, क्तस्य च वर्त्तमाने इति षष्ठी। इति अचिन्तयत् अमन्यत। उदधेः निम्नगाशतेषु इव, अस्य

उदधेरिव निम्नगाशते-
ष्वभवन्नास्य विमानना क्वचित्॥ ८॥

न खरो न च भूयसा मृदुः
पवमानः पृथिवीरुहानिव।
स पुरस्कृतमध्यमक्रमः
नमयामास नृपाननुद्धरन्॥ ९॥

अथ वीक्ष्य रघुः प्रतिष्ठितं
प्रकृतिष्वात्मजमात्मवत्तया।

नृपस्य कर्त्तुः। कर्तृकर्म्मणोः कृतीति कर्त्तरि षष्ठी। क्वचित् अपि जने विषये विमानना अवगणना तिरस्कारः न अभवत् यतो न कश्चिदवमन्यते अतः सर्व्वोऽप्यहमेवास्य मत इत्यमन्यत इत्यर्थः॥ ८॥

न खर इति। सः नृपः भूयसा बाहुल्येन खरः तीक्ष्णः न, भूयसा मृदुः अतिमृदुः अपि न, किन्तु पुरस्कृतमध्यमक्रमः सन् मध्यमपरिपाटीमवलम्ब्य इत्यर्थः, पवमानः वायुः पृथिवीरुहान् तरून् इव नृपान् अनुद्धरन् अनुत्पाटयन् एव नमयामास। अत्र कामन्दकः, "मृदुश्चेदवमन्येत तीक्ष्णादुद्विजते जनः। तीक्ष्णश्चैव मृदुश्चैव प्रजानां स च सम्मतः॥" इति॥ ९॥

अथेति। अथ रघुः आत्मजं पुत्रम् आत्मवत्तया निर्विकारमनस्कतया इत्यर्थः। "उदयादिष्वविकृतिर्मनसः सत्त्वमुच्यते। आत्मवान् सत्त्ववानुक्तः" इत्युत्पलमालायाम्। प्रकृतिषु

विषयेषु विनाशधर्म्मसु
त्रिदिवस्थेष्वपि निःस्पृहोऽभवत ॥ १० ॥

गुणवत्सुतरोपितश्रियः
परिणामे हि दिलीपवंशजाः ।
पदवीं तरुवल्कवाससां
प्रयताः संयमिनां प्रपेदिरे ॥ ११ ॥

तमरण्यसमाश्रयोन्मुखं
शिरसा वेष्टनशोभिना सुतः ।
पितरं प्रणिपत्य पादयो-
रपरित्यागमयाचतात्मनः ॥ १२ ॥

अमात्यादिषु प्रतिष्ठितं रूढ़मूलं वीच्य ज्ञात्वा विनाशः धर्म्मः येषां तेषु विनाशधर्म्मसु अनित्येषु इत्यर्थः। धर्म्मादनिच् केवलादित्यनिच्प्रत्ययः समासान्तः। त्रिदिवस्थेषु स्वर्गस्थेपु अपि विषयेषु शब्दादिषु निःस्पृहः निर्गतेच्छः अभवत् ॥ १०॥

कुलधर्म्मश्चायमेवेत्याह, गुणवदिति। दिलीपवंशजाः परिणामे वार्द्धके गुणवत्सुतेषु रोपितश्रियः स्थापितलक्ष्मीकाः प्रयताश्च सन्तः तरुवल्कानि एव वासांसि येषां तेषां संयमिनां यतीनां पदवीं प्रपेदिरे यस्मात् तस्मादस्यापीदमुचितम् इत्यर्थः ॥ ११ ॥

तमिति। अरण्यसमाश्रयोन्मुखं वनवासोद्युक्तं पितरं तं

रघुरश्रुमुखस्य तस्य तत्
कृतवानीप्सितमात्मजप्रियः ।
न तु सर्प इव त्वचं पुनः
प्रतिपेदे व्यपवर्ज्जितां श्रियम् ॥ २३ ॥
स किलाश्रममन्त्यमाश्रितः
निवसन्नावसथे पुराद् बहिः ।

रघुं सुतः अजः वेष्टनशोभिना उष्णीषमनोहरेण शिरसा पादयोः प्रणिपत्य आत्मनः अपरित्यागम् अयाचत मां परित्यज्य न गन्तव्यमिति प्रार्थितवान् इत्यर्थः ॥ १२ ॥

रघुरिति । आत्मजप्रियः पुत्रवत्सलः रघुः अश्रूणि मुखे यस्य तस्य अश्रुमुखस्य अजस्य तत् अपरित्यागरूपम् ईप्सितम् अभिलषितं कृतवान्, किन्तु सर्पः त्वचम् इव, व्यपवर्ज्जितां त्यक्तां श्रियं पुनः न प्रतिपेदे न प्राप ॥ २३ ॥

स इति । सः रघुः किल अन्त्यम् आश्रमं प्रव्रज्याम् आश्रितः पुरात् नगरात् बहिः आवसथे स्थाने निवसन् अविकृतेन्द्रियः जितेन्द्रियः सन् इत्यर्थः, अत एव स्नुषया इव वध्वा इव, पुत्रभोग्यया न स्वभोग्यया श्रिया समुपास्यत शुश्रूषितः । जितेन्द्रियस्य तस्य स्नुषयेव श्रियापि पुष्पफलोदकाहरणादिशुश्रूषाव्यतिरेकेण न किञ्चिदपेक्षितमासीत् इत्यर्थः । अत्र यद्यपि "ब्राह्मणाः प्रव्रजन्ति" इति श्रुतेः "आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद् गृहात्" इति मनुस्मरणात् "मुखजानामयं

समुपास्यत पुत्त्रभोग्यया
स्नुषयेवाविकृतेन्द्रियः श्रिया ॥ १४ ॥
प्रशमस्थितपूर्व्वपार्थिवं
कुलमभ्युद्यतनूतनेश्वरम् ।

धर्मो यद्विष्णोर्लिङ्गधारणम् । बाहुजातोरुजातानामयं धर्मो न विद्यते ॥" इति निषेधाच्च ब्राह्मणस्यैव प्रव्रज्या न क्षत्त्रियादेरित्याहुः तथापि "यदहरेव विरजेत् तदहरेव प्रव्रजेत्" इत्यादिश्रुतेस्त्रैवर्णिकसाधारण्यात् "त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः" इति सूत्रकारवचनात् "ब्राह्मणः क्षत्त्रियो वापि वैश्यो वा प्रव्रजेद् गृहात्" इति स्मरणात् "मुख-जानामयं धर्मो वैष्णवं लिङ्गधारणम् । बाहुजातोरुजातानां त्रिदण्डं न विधीयते ॥" इति निषेधस्य त्रिदण्डविषयत्वदर्शनाच्च कुत्रचिद् ब्राह्मणपदस्योपलक्षणमाचक्षाणाः केचित् त्रैवर्णिकाधिकारं प्रपेदिरे । तथा सति "स किलाश्रमनन्त्य-माश्रितः" इति अत्रापि कविनाप्ययमेव पक्षो विवक्षित इति प्रतीमः । अन्यथा वानप्रस्थाश्रमतया व्याख्याते "विदधे विधि-मस्य नैष्ठिकं यतिभिःसार्द्धमनग्निमग्निचित्" इति वक्ष्यमाणेना-नग्निसंस्कारेण विरोधः स्यात् अग्निसंस्काररहितस्य वानप्रस्थ-स्यैवाभावात् इत्यलं प्रासङ्गिकेन ॥ १४ ॥

प्रशमेति । प्रशमे स्थितः पूर्व्वपार्थिवः रघुः यस्य तत् अभ्यु-द्यतः अभ्युदितः नूतनेश्वरः अजः यस्य तत् प्रसिद्धं कुलं

नभसा निभृतेन्दुना तुला-
मुदितार्केण समारुरोह तत् ॥ १५ ॥
यतिपार्थिवलिङ्गधारिणौ
ददृशाते रघुराघवौ जनैः ।
अपवर्गमहोदयार्थयो-
र्भुवमंशाविव धर्म्मयोर्गतौ ॥ १६ ॥
अजिताधिगमाय मन्त्रिभिः
युयुजे नीतिविशारदैरजः ।

निभृतेन्दुना अस्तमयासन्नचन्द्रेण उदितार्केण प्रकटितसूर्य्येण नभसा तुलां सादृश्यम् आरुरोह प्राप । न च नभसा तुलामित्यत्र तुल्यार्थैरित्यादिना प्रतिषेधस्तृतीयायाः(*) तस्य सदृशवाचितुलाशब्दविषयत्वात् कृष्णस्य तुला नास्तीति प्रयोगात् अस्य च सादृश्यवाचित्वात् ॥ १५ ॥

यतीति । यतिः भिक्षुः पार्थिवः राजा तयोः लिङ्गधारिणौ रघुराघवौ रघुतत्सुतौ अपवर्गमहोदयार्थयोः मोक्षाभ्युदयफलयोः निवर्त्तकप्रवर्त्तकरूपयोः भुवं गतौ भूलोकम् अवतीर्णौ अंशौ इव जनैः ददृशाते दृष्टौ ॥ १६ ॥

अजितेति । अजः अजिताधिगमाय अजितपदलाभाय

* तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् (पा० २।३।७२।) इति सूत्रेण तृतीयाप्रतिषेधस्य पाक्षिकत्वादत्र तत्प्रतिषेधशङ्कायाः कथमवसर ? इति सुधीभिरालोचनीयम् ।

अनपायिपदोपलब्धये
रघुराप्तैः समियाय योगिभिः॥ १७॥

नृपतिः प्रकृतीरवेक्षितुं
व्यवहारासनमाददे युवा।
परिचेतुमुपांशु धारणां
कुशपूतं प्रवयास्तु विष्टरम्॥ १८॥

अनयत् प्रभुशक्तिसम्पदा
वशमेको नृपतीननन्तरान्।

नीतिविशारदैः नीतिज्ञैः मन्त्रिभिः युयुजे सङ्गतः, रघुः अपि अनपायिपदस्य उपलब्धये मोक्षस्य प्राप्तये यथार्थदर्शिनः यथार्थवादिनश्च आप्ताः तैः योगिभिः समियाय सङ्गतः। उभयत्राप्युपायचिन्तार्थम् इति शेषः॥ १७॥

नृपतिरिति। युवा नृपतिः अजः प्रकृतीः प्रजाः कार्य्यार्थिनीः अवेक्षितुं दुष्टादुष्टपरिज्ञानार्थम् इत्यर्थः व्यवहारासनं धर्म्मासनम् आददे स्वीचकार। प्रवयाः स्थविरः नृपतिः रघुस्तु। "प्रवयाः स्थविरो वृद्धः" इत्यमरः। धारणां चित्तस्यैकाग्रतां परिचेतुम् अभ्यसितुम् उपांशु विजने। "उपांशु विजने प्रोक्तम्" इति हलायुधः। कुशैः पूतं विष्टरम् आददे। "यमादिगुणसंयुक्ते मनसः स्थितिरात्मनि। धारणा प्रोच्यते सद्भिर्योगशास्त्रविशारदैः।" इति वशिष्ठः॥ १८॥

अनयदिति। एकः अन्यतरः अजः इत्यर्थः अनन्तरान्

अपरः प्रणिधानयोग्यया
मरुतः पञ्च शरीरगोचरान् ॥ १६ ॥

अकरोदचिरेश्वरः क्षितौ
द्विषदारम्भफलानि भस्मसात् ।
इतरो दहने स्वकर्म्मणां
ववृते ज्ञानमयेन वह्निना ॥ २० ॥

पणबन्धमुखान् गुणानजः
षडुपायुङ्क्त समीक्ष्य तत्फलम् ।

स्वभूम्यनन्तरान् नृपतीन् यातव्यपार्ष्णिग्राहादीन् प्रभुशक्तिसम्पदा कोशदण्डमहिम्ना वशं स्वायत्तताम् अनयत् । अपरः रघुः प्रणिधानयोग्यया समाध्यभ्यासेन । "योग्याभ्यासार्कयोपितोः" इति विश्वः । शरीरगोचरान् देहाश्रयान् पञ्च मरुतः प्राणादीन् वशम् अनयत् ॥ १६ ॥

अकरोदिति । अचिरेश्वरः अजः क्षितौ द्विषताम् आरम्भाः कर्म्माणि तेषां फलानि भस्मसात् अकरोत् कार्त्स्न्येन भस्मीकृतवान् । "विभाषा साति कार्त्स्न्ये" इति सातिप्रत्ययः । इतरः रघुः ज्ञानमयेन तत्त्वज्ञानप्रचुरेण वह्निना करणेन स्वकर्म्मणां भवबीजभूतानां दहने भस्मीकरणे ववृते स्वकर्म्माणि दग्धुं प्रवृत्तः इत्यर्थः । "ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात् कुरुतेऽर्ज्जुन" इति वचनात् ॥ २० ॥

पणबन्धेति । "पणबन्धः सन्धिः" इति कौटिल्यः । अज

रघुरप्यजयद् गुणत्रयं
प्रकृतिस्थं समलोष्टकाञ्चनः ॥ २१ ॥
न नवः प्रभुराफलोदयात्
स्थिरकर्म्मा विरराम कर्म्मणः।
न च योगविधेर्नवेतरः
स्थिरधीरापरमात्मदर्शनात् ॥ २२ ॥

पणवन्धमुखान् सन्ध्यादीन् षड़्गुणान् "सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः। षड़्गुणाः" इत्यमरः। तत्फलं तेषां गुणानां फलं समीक्ष्य आलोच्य उपायुङ्क्त फलिष्यन्तमेव गुणं प्रायुङ्क्त इत्यर्थः। प्रोपाभ्यां युजेरयज्ञपात्रेष्वित्यात्मनेपदम्। समः तुल्यतया भावितः लोष्टः मृत्पिण्डः काञ्चनं सुवर्णञ्च यस्य सः समलोष्टकाञ्चनः निःस्पृहः इत्यर्थः। रघुः अपि गुणत्रयं सत्त्वादिकम्। गुणाः सत्त्वं रजस्तमः" इत्यमरः। प्रकृतौ साम्यावस्थायामेव तिष्ठतीति प्रकृतिस्थं पुनर्विकारशून्यं यथा तथा अजयत् ॥ २१ ॥

नेति। स्थिरकर्म्मा आफलोदयकर्म्मकारी नवः प्रभुः अजः आफलोदयात् फलसिद्धिपर्य्यन्तं कर्म्मणः आरम्भात् न विरराम न निवृत्तः। जुगुप्साविरामप्रमादार्थानामुपसंख्यानमित्यपादानात् पञ्चमी, व्याङ्परिभ्यो रम इति परस्मैपदम्। स्थिरधीः नवेतरः रघुश्च आपरमात्मदर्शनात् परमात्मसाक्षात्कारपर्य्यन्तं योगविधेः ऐक्यानुसन्धानात् न विरराम ॥ २२ ॥

इति शत्रुषु चेन्द्रियेषु च
प्रतिषिद्धप्रसरेषु जाग्रतौ।
प्रसितावुदयापवर्गयोः
उभयीं सिद्धिमुभाववापतुः॥ २३॥

अथ काश्चिदजव्यपेक्षया
गमयित्वा समदर्शनः समाः।
तमसः परमापदव्ययं
पुरुषं योगसमाधिना रघुः॥ २४॥

इतीति। इति एवं प्रतिषिद्धः प्रसरः स्वार्थप्रवृत्तिः येषां तेषु शत्रुषु च इन्द्रियेषु च जाग्रतौ अप्रमत्तौ उदयापवर्गयोः अभ्युदयमोक्षयोः प्रसितौ आसक्तौ। "तत्परे प्रसितासक्तौ" इत्यमरः। उभौ अजरघू उभयीं द्विविधाम् अभ्युदयमोक्षरूपाम्। उभादुदात्तो नित्यमिति तयप्प्रत्ययस्यायजादेशः, टिड्ढेति ङीप्। सिद्धिं फलम् अवापतुः उभौ उभे सिद्धी यथासंख्यम् अवापतुः इत्यर्थः॥ २३॥

अथेति। अथ रघुः समदर्शनः सर्व्वभूतेषु समदृष्टिः सन् अजव्यपेक्षया अजाकाङ्क्षानुरोधेन काश्चित् समाः कतिचित् वर्षाणि। "समा वर्षं समं तुल्यम्" इति विश्वः। गमयित्वा नीत्वा योगसमाधिना ऐक्यानुसन्धानेन। "संयोगो योग इत्युक्तो जीवात्मपरमात्मनोः" इति वशिष्ठः। अव्ययम् अवि-

श्रुतदेहविसर्ज्जनः पितुः
चिरमश्रूणि विमुच्य राघवः ।
विदधे विधिमस्य नैष्ठिकं
यतिभिः सार्द्धमनग्निमग्निचित् ॥ २५ ॥
अकरोत् स तदौर्द्ध्वदैहिकं
पितृभक्त्या पितृकार्य्यकल्पवित् ।

नाशिनं तमसः परम् अविद्यायाः परं मायातीतम् इत्यर्थः पुरुषं परमात्मानम् आपत् प्राप सायुज्यं प्राप्तः इत्यर्थः ॥ २४ ॥

श्रुतेति । अग्निचित् अग्निं चितवान् । अग्नौ चेरिति क्विप्प्रत्ययः। राघवः अजः पितुः श्रुतदेहविसर्ज्जनः आकर्णितपितृतनुत्यागः सन् चिरम् अश्रूणि वाष्पान् विमुच्य विसृज्य अस्य पितुः अनग्निम् अग्निसंस्काररहितम् इत्यर्थः नैष्ठिकं निष्ठायाम् अन्ते भवं विधिम् आचारम् अन्त्येष्टिं यतिभिः सन्न्यासिभिः सार्द्धं विदधे चक्रे । अनग्निं विधिमित्यत्र शौनकः, "सर्व्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च । न तस्य दहनं कार्य्यं नैव पिण्डोदकक्रिया । निदध्यात् प्रणवेनैव विले भिक्षोः कलेवरम् । प्रोक्षणं खननञ्चैव सर्व्वं तेनैव कारयेत् ॥" इति ॥२५॥

अकरोदिति । पितृकार्य्यस्य श्राद्धस्य कल्पवित् विधानज्ञः सः अजः पितृभक्त्या पितरि प्रेम्णा कारणेन, न पितुः परलोकसुखापेक्षया, मुक्तत्वात् इति भावः । तस्य रघोः और्द्ध्वदैहिकं देहादूर्द्ध्वं भवतीति तत्, तिलोदकपिण्डदानादिकम् अकरोत् । ऊर्द्ध्वं देहाच्चेति वक्तव्यात् ठक्प्रत्ययः, अनुशतिकादित्वा-

न हि तेन पथा तनुत्यजः
तनयावर्ज्जितपिण्डकाङ्क्षिणः ॥ २६ ॥
स परार्द्धगतेरशोच्यतां
पितुरुद्दिश्य सदर्थवेदिभिः ।
शमिताधिरधिज्यकार्म्मुकः
कृतवानप्रतिशासनं जगत् ॥ २७ ॥
क्षितिरिन्दुमती च भामिनी
पतिमासाद्य तमग्र्यपौरुषम् ।

द्गुभयपदवृत्तिः । ननु कथं भक्तिरेव श्राद्धादिफलप्रेप्सापि कस्मान्नाभूदित्याशङ्क्याह, नहीति । तेन पथा योगरूपेण मार्गेण तनुत्यजः शरीरत्यागिनः पुरुषाः तनयेन आवर्ज्जितं दत्तं पिण्डं काङ्क्षन्तीति तथोक्ताः न हि भवन्ति ॥ २६ ॥

स इति । परार्द्धगतेः प्रशस्तगतेः प्राप्तमोक्षस्य पितुः अशोच्यताम् अशोचनीयत्वम् उद्दिश्य अभिसन्धाय शोको न कर्त्तव्य इत्युपदिश्य इत्यर्थः सदर्थवेदिभिः परमार्थज्ञैः शमिताधिः निवारितमनोव्यथः । "पुंस्याधिर्मानसी व्यथा" इत्यमरः । सः अजः अधिज्यकार्म्मुकः अधिज्यम् आरोपितमौर्व्वीकं कार्म्मुकं यस्य सः तथोक्तः सन् जगत् कर्म्मभूतम् अप्रतिशासनं द्वितीयाज्ञारहितम् आत्माज्ञाविधेयम् इत्यर्थः कृतवान् चकार ॥ २७ ॥

क्षितिरिति । क्षितिः मही भामिनी कामिनी इन्दुमती च "भामिनी कामिनी च" इति हलायुधः । अग्र्यपौरुषं महा... परा...

प्रथमा बहुरत्नसूरभूत्
अपरा वीरमजीजनत् सुतम् ॥ २८ ॥
दशरश्मिशतोपमद्युतिं
यशसा दिक्षु दशस्वपि श्रुतम् ।
दशपूर्व्वरथं यमाख्यया
दशकण्ठारिगुरुं विदुर्बुधाः ॥ २९ ॥
ऋषिदेवगणस्वधाभुजां
श्रुतयागप्रसवैः स पार्थिवः ।

क्रमन् उत्कृष्टभोगशक्तिश्च तम् अजं पतिम् आसाद्य तत्र प्रथमा क्षितिः बहूनि रत्नानि श्रेष्ठवस्तूनि सूते इति बहुरत्नसूः अभूत्। "रत्नं स्वजातिश्रेष्ठेऽपि" इत्यमरः । अपरा इन्दुमती वीरं सुतम् अजीजनत् जनयति स्म । जायतेर्णौ लुङि रूपम् ॥ २८ ॥

किंनामकोऽसावत आह, दशेति । दश रश्मिशतानि यस्य सः दशरश्मिशतः सूर्य्यः सः उपमा यस्याः सा दशरश्मिशतोपमा द्युतिः यस्य तं यशसा कारणेन दशसु अपि दिक्षु श्रुतं प्रसिद्धं दशकण्ठारेः रावणारेः रामस्य गुरुं पितरं यं सुतम् आख्यया नाम्ना दशपूर्व्वः दशशब्दपूर्व्वः रथः रथशब्दः तं दशरथम् इत्यर्थः बुधाः विद्वांसः विदुः वदन्ति । विदोलटो वेति झेर्जुसादेशः ॥ २९ ॥

ऋषीति । श्रुतयागप्रसवैः अध्ययनयज्ञसन्तानैः यथासंख्यम् ऋषीणां देवगणानाम् इन्द्रादीनां स्वधाभुजां पितृणाम्

अनृणत्वमुपेयिवान् बभौ
परिधेर्मुक्त इवोष्णदीधितिः ॥ ३० ॥
बलमार्त्तभयोपशान्तये
विदुषां सत्कृतये बहु श्रुतम् ।
वसु तस्य विभोर्न केवलम्
गुणवत्तापि परप्रयोजना ॥ ३१ ॥
स कदाचिदवेक्षितप्रजः
सह देव्या विजहार सुप्रजाः ।

अनृणत्वम् ऋणविमुक्तत्वम् उपेयिवान् प्राप्तवान् । "एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी वा" इति श्रुतेः । सः पार्थिवः अजः, परिधेः परिवेशात् । "परिवेशस्तु परिधिः" इत्यमरः । मुक्तः उष्णदीधितिः सूर्य्यः इव, बभौ इत्युपमा ॥ ३० ॥

बलमिति । तस्य विभोः अजस्य केवलं वसु धनम् एव परप्रयोजनं परोपकारकं न अभूत् किन्तु गुणवत्ता अपि गुणित्वम् अपि परप्रयोजना परेषाम् अन्येषां प्रयोजनं यस्याः सा विधेयांशत्वेन प्राधान्याद्गुणवत्तायाः विशेषणम्, वसु इत्यत्र तूहनीयम् । तथाहि, बलं पौरुषम् आर्त्तानाम् आपन्नानां भयस्य उपशान्तये न तु स्वार्थं परपीड़नाय वा । बहु भूरि श्रुतं विद्या विदुषां सत्कृतये सत्काराय न तूत्सेकाय बभूव ॥ ३१ ॥

स इति । अवेक्षितप्रजः अकुतोभयत्वेनानुसंहितप्रजः । नित्यमसिच् प्रजामेधयोरिति असिच् प्रत्ययः । न केवलं

नगरोपवने शचीसखः
मरुतां पालयितेव नन्दने ॥ ३२ ॥
अथ रोधसि दक्षिणोदधेः
श्रितगोकर्णनिकेतमीश्वरम् ।
उपवीणयितुं ययौ रवेः
उदयावृत्तिपथेन नारदः ॥ ३३ ॥
कुसुमैर्ग्रथितामपार्थिवैः
स्रजमातोद्यशिरोनिवेशिताम् ।

स्त्रैणः इति भावः । शोभना प्रजा यस्य असौ सुप्रजाः सुपुत्रवान् पुत्रन्यस्तभारः इति भावः । सः अजः कदाचित् देव्या महिष्या इन्दुमत्या सह नगरोपवने, नन्दने नन्दनाख्ये अमरावत्युपकण्ठवने शचीसखः शच्या सह इत्यर्थः मरुतां देवानां पालयिता इन्द्रः इव, विजहार चिक्रीड़ ॥ ३२ ॥

अथेति । अथ दक्षिणस्य उदधेः समुद्रस्य रोधसि तीरे श्रितगोकर्णनिकेतम् अधिष्ठितगोकर्णाख्यस्थानम् ईश्वरं शिवम् उ[पवी]णयितुं वीणया उपगातुम् । सत्यापपाशेत्यादिना वीणाश[ब्]दादुपगानार्थे णिच्प्रत्ययः, ततस्तुमुन् । नारदः देवर्षिः रवेः सम्बन्धिना उदयावृत्तिपथेन आकाशमार्गेण ययौ ॥ ३३ ॥

कुसुमैरिति । अपार्थिवैः दिव्यैः इत्यर्थः । कुसुमैः ग्रथितां रचितां तस्य नारदस्य आतोद्यस्य वाद्यस्य वीणायाः शिरसि निवेशिताम् । "चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम्"

अहरत् किल तस्य वेगवान्
अधिवासस्पृहयेव मारुतः ॥ ३४ ॥
भ्रमरैः कुसुमानुसारिभिः
परिकीर्णा परिवादिनी मुनेः ।
ददृशे पवनावलेपजम्
सृजती बाष्पमिवाञ्जनाविलम् ॥ ३५ ॥
अभिभूय विभूतिमार्त्तवीं
मधुगन्धातिशयेन वीरुधाम् ।

इत्यमरः । स्रजं मालां वेगवान् मारुतः अधिवासे वासनायां स्पृहया इव स्रजा स्वाङ्ग संस्कर्त्तुम् इत्यर्थः । "संस्कारो गन्धमाल्याद्यैर्यः स्यात् तदधिवासनम्" इत्यमरः । अहरत् किल, किलेत्यैतिह्ये ॥ ३४ ॥

भ्रमरैरिति । कुसुमानुसारिभिः पुष्पानुयायिभिः भ्रमरैः परिकीर्णा व्याप्ता मुनेः नारदस्य परिवादिनी वीणा । "वीणा तु वल्लकी । विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी" इत्यमरः । पवनस्य अवलेपः अधिक्षेपः तज्जम् अञ्जनेन आविलं कलुषं वाष्पम् अश्रु, सृजती मुञ्चती इव ददृशे दृष्टा । परिस्रुताः स्त्रियोऽपि हि रुदन्ति इति भावः ॥ ३५ ॥

अभिभूयेति । सा अमरस्रक् दिव्यमाला मधुगन्धयोः मकरन्दसौरभयोः अतिशयेन आधिक्येन वीरुधां लतानाम् । "लता प्रतानिनी वीरुत्" इत्यमरः । ऋतोः प्राप्ताम् आर्त्तवीम्

नृपतेरमरस्रगाप सा
दयितोरुस्तनकोटिसुस्थितिम्॥ ३६॥
क्षणमात्रसखीं सुजातयोः
स्तनयोस्तामवलोक्य विह्वला।
निमिमील नरोत्तमप्रिया
हृतचन्द्रा तमसेव कौमुदी॥ ३७॥
वपुषा करणोज्झितेन सा
निपतन्ती पतिमप्यपातयत्।

ऋतुसम्बन्धिनीं विभूतिं समृद्धिम् अभिभूय नृपतेः दयिताया इन्दुमत्याः उर्व्वोः विशालयोः स्तनयोः कोटौ चूचुकौ तयोः सुस्थितिं स्थानम् आप॥ ३६॥

क्षणमिति। सुजातयोः सुजन्मनोः सुन्दरयोः इत्यर्थः स्तनयोः क्षणमात्रसखीं तां स्रजम् अवलोक्य विह्वला परवशा नरोत्तमप्रिया इन्दुमती, तमसा राहुणा। "तमस्तु राहुः स्वर्भानुः" इत्यमरः। हृतचन्द्रा कौमुदी इव, निमिमील ममार। "निमीलो दीर्घनिद्रा च" इति हलायुधः॥ ३७॥

वपुषेति। करणैः इन्द्रियैः उज्झितेन। "करणं साधकतमं क्षत्रगात्रेन्द्रियेष्वपि" इत्यमरः। वपुषा निपतन्ती सा इन्दुमती पतिम् अजम् अपि अपातयत् पातयति स्म। तथाहि, निषिच्यते निषेकः तैलस्य निषेकः तैलनिषेकः क्षरत्तैलम् इत्यर्थः। तस्य बिन्दुना सह दीपार्च्चिः दीपज्वाला मेदिनीं

ननु तैलनिषेकबिन्दुना
सह दीपार्च्चिरुपैति मेदिनीम् ॥ ३८ ॥
उभयोरपि पार्श्ववर्त्तिनां
तुमुलेनार्त्तरवेण वेजिताः।
विहगाः कमलाकरालयाः
समदुःखा इव तत्र चुक्रुशुः ॥ ३९ ॥
नृपतेर्व्यजनादिभिस्तमः
नुनुदे सा तु तथैव संस्थिता।
प्रतिकारविधानमायुषः
सति शेषे हि फलाय कल्पते ॥ ४० ॥

भुवम् उपैति ननु उपैत्येव। नन्वत्रावधारणे। "प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु" इत्यमरः ॥ ३८ ॥

उभयोरिति। उभयोः दम्पत्योः पार्श्ववर्त्तिनां परिजनानां तुमुलेन सङ्कुलेन आर्त्तरवेण करुणस्वनेन वेजिताः भीताः कमलाकरालयाः सरःस्थिताः विहगाः हंसादयः अपि तत्र उपवने समदुःखाः इव चुक्रुशुः ॥ ३९ ॥

नृपतेरिति। नृपतेः अजस्य तमः अज्ञानं व्यजनादिभिः साधनैः नुनुदे अपसारितं सा तु इन्दुमती तथैव संस्थिता मृता। तथाहि, प्रतिकारविधानं चिकित्सा आयुषः जीवितकालस्य शेषे सति विद्यमाने। "आयुर्जीवितकालो ना" इत्यमरः। फलाय कल्पते आरोग्याय भवति नान्यथा नृपतेरायुःशेष-

प्रतियोजयितव्यवल्लकी-
समवस्थामथ सत्त्वविप्लवात् ।
स निनाय नितान्तवत्सलः
परिगृह्योचितमङ्कमङ्गनाम् ॥ ४१ ॥

पतिरङ्कनिषण्णया तया
करणापायविभिन्नवर्णया ।
समलक्ष्यत बिभ्रदाविलां
मृगलेखामुषसीव चन्द्रमा ॥ ४२ ॥

विललाप स बाष्पगद्गदं
सहजामप्यपहाय धीरताम् ।

सद्भावात् प्रतीकारस्य साफल्यं तस्यास्तु तदभावात् वैफल्यम् इत्यर्थः ॥ ४० ॥

प्रतीति । अथ सत्त्वस्य चैतन्यस्य विप्लवात् विनाशात् हेतोः । "द्रव्यासु व्यवसायेषु सत्त्वम्" इत्यमरः । प्रतियोजयितव्या तन्त्रिभिः योजनीया न तु योजिततन्त्री इत्यर्थः । या वल्लकी वीणा तस्याः समावस्था अवस्था दशा यस्याः ताम् अङ्गनां वनितां नितान्त-वत्सलः अतिप्रेमवान् सः अजः परिगृह्य हस्ताभ्यां गृहीत्वा उचित परिचितम् अङ्कम् उत्सङ्गं निनाय नीतवान् ॥ ४१ ॥

पतिरिति । पतिः अजः अङ्कनिषण्णया करणानाम् अपा-येन अपगमेन विभिन्नवर्णया विच्छायया तया, उषसि आविलां मृगलेखां बिभ्रत् चन्द्रमाः इव, समलक्ष्यत इत्युपमा । ४२ ॥

विललापेति । सः अजः सहजां स्वाभाविकीम् अपि धीरतां

अभितप्तमयोऽपि मार्दवं
भजते कैव कथा शरीरिषु॥ ४३॥
कुसुमान्यपि गात्रसङ्गमात्
प्रभवन्त्यायुरपोहितुं यदि।
न भविष्यति हन्त साधनं
किमिवान्यत् प्रहरिष्यतो विधेः॥ ४४॥
अथवा मृदुवस्तुहिंसितुं
मृदुनैवारभते प्रजान्तकः।

धैर्य्यम् अपहाय वाष्पेण गद्गदं विशीर्णाक्षरं यथा तथा विललाप परिदेवितवान्। "विलापः परिदेवनम्" इत्यमरः। अभितप्तम् अग्निना सन्तप्तम् अयः अपि मार्द्दवं मृदुत्वं भजते, शरीरिषु देहिषु अभिसन्तप्तेषु इति शेषः। विषये का एव कथा वार्त्ता अनुक्तासिद्धम् इत्यर्थः॥ ४३॥

कुसुमानीति। कुसुमानि पुष्पाणि अपि। अपिशब्दो नितान्तमार्द्दवद्योतनार्थः। गात्रसङ्गमात् देहसंसर्गात् आयुः अपोहितुम् अपहर्त्तुं प्रभवन्ति यदि। हन्त विषादे। "हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः" इत्यमरः। प्रहरिष्यतः विधेः अन्यत् कुसुमातिरिक्तं किम् इव वस्तु। इवशब्दो वाक्यालङ्कारे कीदृशम् इत्यर्थः। साधनं न भविष्यति सर्व्वमपि साधनं भविष्यत्येव इत्यर्थः॥ ४४॥

अथवेति। अथवा पक्षान्तरे प्रजान्तकः कालः मृदु कोमलं वस्तु मृदुना एव वस्तुना हिंसितुं हन्तुम् आरभते उपक्रमते।

हिमसेकविपत्तिरत्र मे
नलिनी पूर्व्वनिदर्शनं मता ॥ ४५ ॥
स्रगियं यदि जीवितापहा
हृदये किं निहिता न हन्ति माम्।
विषमप्यमृतं क्वचिद्भवेत्
अमृतं वा विषमीश्वरेच्छया ॥ ४६ ॥
अथवा मम भाग्यविप्लवात्
अशनिः कल्पित एष वेधसा।
यदनेन तरुर्न पातितः
क्षपिता तद्विटपाश्रिता लता ॥ ४७ ॥

अत्रार्थे हिमसेकेन तुषारनिष्यन्देन विपत्तिः यस्याः सा नलिनी मे पूर्व्वं प्रथमं निदर्शनम् उदाहरणं मता ॥ ४५ ॥

स्रगिति। इयं स्रक् जीवितम् अपहन्तीति जीवितापहा यदि हृदये वक्षसि। "हृदयं वक्षसि स्वान्ते" इत्यमरः। निहिता सती मां किं न हन्ति। ईश्वरेच्छया क्वचित् प्रदेशे विषम् अपि अमृतं भवेत्, क्वचित् अमृतं वा विषं भवेत्। दैवमेवात्र कारणम् इत्यर्थः ॥ ४६ ॥

अथवेति। अथवा मम भाग्यस्य विप्लवात् विपर्य्ययात् एषः स्रक् इत्यर्थः। विधेयप्राधान्यात् पुंलिङ्गनिर्देशः। वेधसा विधात्रा अशनिः वैद्युतोऽग्निः कल्पितः। "दम्भोलिरशनिर्द्वयोः" इत्यमरः। यत् यस्मात् अनेन अपि अशनिना प्रसिद्धाशनिना इव तरुः तरुस्थानीयः स्वयम् एव न पातितः किन्तु तस्य

कृतवत्यसि नावधीरणाम्
अपराद्धेऽपि यदा चिरं मयि।
कथमेकपदे निरागसं
जनमाभाष्यमिमं न मन्यसे॥ ४८॥

ध्रुवमस्मि शठः शुचिस्मिते।
विदितः कैतववत्सलस्तव।
परलोकमसन्निवृत्तये
यदनापृच्छ्य गतासि मामितः॥ ४९॥

तरोः विटपाश्रिता लता च्युपिता नाश्रिता॥ ४७॥

कृतेति। मयि चिरं भूरिशः अपराद्धे अपि अपराधं कृतवति अपि। राधेः कर्त्तरि क्तः। यदा यस्मात् हेतोः। यदेति हेत्वर्थः "स्वरादौ पठ्यते यदेति हेतौ" इति गणव्याख्यानात्। अवधीरणाम् अवज्ञां न कृतवती असि। तत् कथम् एकपदे तत्क्षणे। "स्यात् तत्क्षणे एकपदम्" इति विश्वः। निरागसं नितरामनपराधम् इमं जनम्। इममिति स्वात्मनिर्द्देशः। माम् इत्यर्थः। आभाष्यं सम्भाष्यं न मन्यसे॥ ४८॥

ध्रुवमिति। हे शुचिस्मिते शठः गूढविप्रियकारी कैतवेन कपटेन वत्सलः कैतववत्सलः इति ध्रुवं सत्यं तव विदितः त्वया विज्ञातः अस्मि। मतिबुद्धीत्यादिना कर्त्तरि क्तः, क्तस्य च वर्त्तमाने इति कर्त्तरि षष्ठी। कुतः? यस्मात् माम् अनापृच्छ्य अनामन्त्र्य इतः अस्मात् लोकात् परलोकम् असन्निवृत्तये अपुनरावृत्तये गता असि॥ ४९॥

दयितां यदि तावदन्वगात्
विनिवृत्तं किमिदं तया विना।
सहतां हतजीवितं मम
प्रबलामात्मकृतेन वेदनाम् ॥ ५० ॥

सुरतश्रमसम्भृतो मुखे
ध्रियते स्वेदलवोद्गमोऽपि ते।
अथ चास्तमिता त्वमात्मना
धिगिमां देहभृतामसारताम् ॥ ५१ ॥

मनसापि न विप्रियं मया
कृतपूर्व्वं तव किं जहासि माम्।

दयितामिति। इदं मम हतजीवितं तावत् दयितम् अन्वगात् अन्वगच्छत् यदि अन्वगात् एव। यद्यत्रावधारणे। पूर्व्वं मूर्च्छितत्वात् इति भावः। तया विना किं किमर्थं विनिवृत्तं प्रत्यागतं प्रत्यागमनं न युक्तम् इत्यर्थः। अत एव आत्मकृतेन स्वदुश्चेष्टितेन निवृत्तिरूपेण प्रबलां वेदनां सहताम्। स्वयङ्कृतापराधेषु सहिष्णुतैव शरणम् इति भावः ॥ ५० ॥

सुरतेति। सुरतश्रमेण सम्भृतः जनितः स्वेदलवोद्गमः अपि ते तव मुखे ध्रियते वर्त्तते अथच त्वम् आत्मना स्वरूपेण अस्तं नाशम् इता प्राप्ता, अतः कारणात् देहभृताम् प्राणिनाम् इमाम् असारताम् अस्थिरतां धिक् ॥ ५१ ॥

मनसेति। मया मनसा अपि तव विप्रियं न कृतपूर्व्वं पूर्व्वं न कृतम् इत्यर्थः। सुप्सुपेति समासः। किं मां जहासि,

ननु शब्दपतिः क्षितेरहं
त्वयि मे भावनिबन्धना रतिः ॥ ५२ ॥

कुसुमोत्खचितान् वलीभृतः
चलयन् भृङ्गरुचस्तवालकान् ।
करभोरु ! करोति मारुतः
तदुपावर्त्तनशङ्कि मे मनः ॥ ५३ ॥

तदपोहितुमर्हसि प्रिये !
प्रतिबोधेन विषादमाशु मे ।
ज्वलितेन गुहागतं तमः
तुहिनाद्रेरिव नक्तमोषधिः ॥ ५४ ॥

ननु अहं क्षितेः शब्दपतिः शब्दतः एव पतिः नत्वर्थतः इत्यर्थः । भावनिबन्धना अभिप्रायनिबन्धना स्वभावहेतुका मे रतिस्तु त्वयि एव अस्ति इति शेषः ॥ ५२ ॥

कुसुमेति । कुसुमैः उत्खचितान् उत्कृष्टेन रचितान् वलीभृतः भङ्गीयुक्तान् भृङ्गरुचः नीलान् तव अलकान् चलयन् कम्पयन् मारुतः हे करभोरु मे मनः त्वदुपावर्त्तनशङ्कि तव पुनरागमने शङ्कावत् करोति त्वदुज्जीवने शङ्कां कारयति इत्यर्थः ॥ ५३ ॥

तदिति । हे प्रिये ! तत् तस्मात् कारणात् आशु मे विषादं दुःखं, नक्तं रात्रौ ओषधिः तृणज्योतिराख्या लता ज्वलितेन प्रकाशेन तुहिनाद्रेः गुहागतं तमः इव, प्रतिबोधेन ज्ञानेन अपोहितुं निरसितुम् अर्हसि ॥ ५४ ॥

इदमुच्छ्वसितालकं मुखं
तव विश्रान्तकथं दुनोति माम् ।
निशि सुप्तमिवैकपङ्कजं
विरताभ्यन्तरषट्पदस्वनम् ॥ ५५ ॥

शशिनं पुनरेति शर्वरी
दयिता द्वन्द्वचरं पतत्त्रिणम् ।
इति तौ विरहान्तरक्षमौ
कथमत्यन्तरता न मां दहेः ॥ ५६ ॥

नवपल्लवसंस्तरेऽपि ते
मृदु दूयेत यदङ्गमर्पितम् ।

इदमिति। इदम् उच्छ्वसितालकं चलितचूर्णकुन्तलं विश्रान्तकथं निवृत्तसंलापं तव मुखं, निशि सुप्तं निमीलितं विरतः अभ्यन्तराणाम् अन्तर्वर्त्तिनां षट्पदानां स्वनः यत्र तत् निःशब्दभृङ्गम् इत्यर्थः। एकपङ्कजम् इव, मां दुनोति परितापयति ॥५५॥

शशिनमिति। शर्वरी रात्रिः शशिनं चन्द्रं पुनः एति प्राप्नोति, द्वन्द्वीभूय चरतीति द्वन्द्वचरः तं पतत्त्रिणं चक्रवाकं दयिता चक्रवाकी पुनः एति, इति हेतोः तौ चन्द्रचक्रवाकौ विरहान्तरक्षमौ विरहावधिसहौ। "अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये" इत्यमरः। अत्यन्तगता पुनरावृत्तिरहिता त्वं तु कथं न मां दहेः अपितु दहेरेव इत्यर्थः ॥५६॥

नवेति। नवपल्लवसंस्तरे नूतनप्रवालास्तरणे अपि अर्पितं स्थापितं मृदु ते तव यत् अङ्गं शरीरं दूयेत परितप्तं भवेत् ।

कुसुमं कृतदोहदस्त्वया
यदशोकोऽयमुदीरयिष्यति ।
अलकाभरणं कथन्नु तत्
तव नेष्यामि निवापमाल्यताम् ॥ ६२ ॥

स्मरतेव सशब्दनूपुरं
चरणानुग्रहमन्यदुर्लभम् ।
अमुना कुसुमाश्रुवर्षिणा
त्वमशोकेन सुगात्रि! शोच्यसे ॥६३॥

तव निःश्वसितानुकारिभि-
र्बकुलैरर्द्धचितां समं मया ।

मङ्गलम् अविधाय अकृत्वा गम्यते इति असाम्प्रतम् अयुक्तम् । मातृहीनानां न किञ्चित् सुखमस्ति इति भावः ॥ ६१ ॥

कुसुममिति । वृक्षादिपोषकं दोहदम् । त्वया कृतं दोहदं पादताड़नरूपं यस्य सः अयम् अशोकः यत् कुसुमम् उदीरयिष्यति प्रसविष्यते तव अलकानाम् आभरणम् आभरणभूतं तत् कुसुमं कथं निवापमाल्यतां नेष्यामि । "निवापः पितृदानं स्यात्" इत्यमरः ॥ ६२ ॥

स्मरतेति । अन्यदुर्लभं किन्तु स्मर्त्तव्यमेव इत्यर्थः । सशब्दं नूपुरं यस्य तं चरणेन अनुग्रहं पादेन ताड़नरूपं स्मरता इव कुसुमानि एव अश्रूणि तद्वर्षिणा अमुना अशोकेन हे सुगात्रि! अङ्गगात्रकण्ठेभ्यश्चेति वक्तव्यात् ङीप् । त्वं शोच्यसे ॥ ६३ ॥

तवेति । तव निःश्वसितानुकारिभिः बकुलैः बकुलकुसुमैः

असमाप्य विलासमेखलां
किमिदं किन्नरकण्ठि ! सुप्यते ॥ ६४ ॥
समदुःखसुखः सखीजनः
प्रतिपच्चन्द्रनिभोऽयमात्मजः ।
अहमेकरसस्तथापि ते
व्यवसायः प्रतिपत्तिनिष्ठुरः ॥ ६५ ॥
धृतिरस्तमिता रतिश्च्युता
विरतं गेयमृतुर्निरुत्सवः ।

मया समं सार्द्धम् अर्द्धचिताम् अर्द्धं यथा तथा रचितां विलासमेखलाम् असमाप्य किन्नरस्य देवयोनिविशेषस्य कण्ठः इव कण्ठः यस्याः तत्सम्बुद्धिः हे किन्नरकण्ठि ! अङ्गगात्रकण्ठेभ्यश्चेति ङीप् । किम् इदं सुप्यते । वचिस्वपीत्यादिना सम्प्रसारणम् । अनुचितमिदं स्वपनम् इत्यर्थः ॥ ६४ ॥

समेति । सखीजनः समदुःखसुखः त्वद्दुःखेन दुःखी त्वत्सुखेन सुखी इत्यर्थः । अयम् आत्मजः बालः प्रतिपच्चन्द्रनिभः दर्शनीयः वर्द्धिष्णुश्च इत्यर्थः । प्रतिपच्छब्देन द्वितीया लक्ष्यते प्रतिपदि चन्द्रस्यादर्शनात् । अहम् एकरसः अभिन्नरागः । "शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रसः" इत्यमरः । तथापि जीवितसामग्रीसत्त्वेऽपि इत्यर्थः । ते तव व्यवसायः अस्मत्परित्यागरूपो व्यापारः प्रतिपत्त्या निश्चयेन निष्ठुरः । "प्रतिपत्तिः पदप्राप्तौ प्रवृत्तौ गौरवेऽपि च । प्रागल्भ्ये च प्रबोधे च" इति विश्वः । स्मर्त्तुं न शक्यं किमुताधिकर्त्तुम् इति भावः ॥ ६५ ॥

धृतिरिति । उद्याने धृतिः धैर्य्यं प्रतीतिः वा अस्तं नाशम् इता,

गतमाभरणप्रयोजनं
परिशून्यं शयनीयमद्य मे ॥ ६६ ॥
गृहिणी सचिवः सखी मिथः
प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना
हरता त्वां वद किं न मे हृतम् ॥ ६७ ॥
मदिराक्षि! मदाननार्पितं
मधु पीत्वा रसवत् कथं नु मे ।

रतिः च्युता गता, गेयं गानं विरतम्, ऋतुः वसन्तादिः निरुत्सवः आभरणानां प्रयोजनं गतम् अपगतं, शेते अस्मिन्निति शयनीयम् तल्पम् । कृत्यल्युटो बहुलमित्यधिकरणार्थे अनीयर्-प्रत्ययः । परिशून्यम् । त्वां विना सर्व्वमपि निष्फलम् इति भावः ॥ ६६ ॥

गृहिणीति । त्वम् एव गृहिणी दाराः सचिवः बुद्धि-सहायो मन्त्री मिथः रहसि सखी नर्म्मसचिवः ललिते मनोहरे कलाविधौ वादित्रादिचतुःषष्टिकलाप्रयोगे प्रियशिष्या, अतः त्वां समष्टिरूपां हरता अत एव करुणाविमुखेन कृपाशून्येन मृत्युना मे मत्सम्बन्धि किं न हृतं वद सर्व्वमपि हृतम् इत्यर्थः ॥ ६७ ॥

मदिरेति । माद्यति अनया इति मदिरा लोकप्रसिद्धा तथापि "नार्य्यो मदिरलोचनाः" इत्यादिप्रयोगदर्शनात् माद्यति आभ्याम् इति मदिरे अक्षिणी यस्याः तत्सम्बुद्धिः हे मदिराक्षि!

अनुपास्यसि वाष्पदूषितं
परलोकोपनतं जलाञ्जलिम् ॥ ६८ ॥

विभवेऽपि सति त्वया विना
सुखमेतावदजस्य गण्यताम् ।
अहृतस्य विलोभनान्तरैः
मम सर्व्वे विषयास्त्वदाश्रयाः ॥ ६९ ॥

विलपन्निति कोशलाधिपः
करुणार्थग्रथितं प्रियां प्रति ।

मदाननेन अर्पितं रसवत् स्वादुतरं मधु मद्यं पीत्वा वाष्पदूषितम् अश्रुतप्तं परलोकोपनतं परलोकप्राप्तं मे जलाञ्जलिं कथं नु अनु अनन्तरं पास्यसि । तदनन्तरमिदमनर्हम् इत्यर्थः । यथाह भट्टमल्लः, "अनुपानं हिमजलं यवगोधूमनिर्म्मिते । दध्नि मद्ये विषे द्राक्षे पिष्टे मिष्टमयेऽपि च ॥" इति । तच्च इहैव युज्यते । इदं तूष्णं लोकान्तरोपयोगि चेत्यायुर्वेदविरोधात् कथमनुपास्यसि इति भावः ॥ ६८ ॥

विभवे इति । विभवे ऐश्वर्य्ये सति अपि त्वया विना अजस्य एतावत् एव सुखं गण्यताम् यावत् त्वया सह भुक्तं ततः अन्यत्र किञ्चिन्नभविष्यति इत्यर्थः । कुतः ? विलोभनान्तरैः विषयान्तरैः अहृतस्य अनाकृष्टस्य मम सर्व्वे विषयाः भोगादयः त्वदाश्रयाः त्वदधीनाः त्वां विना मे न किञ्चिद्रोचते इत्यर्थः ॥ ६९ ॥

विलपन्निति । कोशलाधिपः अजः इति, करुणः शोकरसः स एव अर्थः तेन ग्रथितं सम्बद्धं यथा तथा, प्रियां प्रति विलपन्

अकरोत् पृथिवीरुहानपि
स्रुतशाखारसवाष्पदूषितान् ॥ ७० ॥

अथ तस्य कथञ्चिदङ्कतः
स्वजनस्तामपनीय सुन्दरीम्।
विससर्ज्ज तदन्त्यमण्डना-
मनलायागुरुचन्दनैधसे ॥ ७१ ॥

प्रमदामनु संस्थितः शुचा
नृपतिः सन्निति वाच्यदर्शनात्।
न चकार शरीरमग्निसात्
सह देव्या न तु जीविताशया ॥ ७२ ॥

पृथिवीरुहान् वृक्षान् अपि स्रुताः शाखारसाः मकरन्दाः एव वाष्पाः तैः दूषितान् अकरोत्। अचेतनानप्यरोदयदित्यर्थः॥७०

अथेति। अथ स्वजनः बन्धुवर्गः तस्य अजस्य अङ्कतः उत्सङ्गात् कथञ्चित् अपनीय तत् दिव्यकुसुमम् एव अन्त्यं मण्डनम् अलङ्कारः यस्याः तां तां सुन्दरीम् अगुरूणि चन्दनानि एधांसि यस्य तस्मै अनलाय अग्नये विससर्ज्ज विसृष्टवान्। क्रियाग्रहणमपि कर्त्तव्यमिति क्रियामात्रप्रयोगे सम्प्रदानत्वाच्चतुर्थी ॥७१॥

प्रमदामिति। नृपतिः सन् अपि विद्वान् अपि शुचा शोकेन प्रमदाम् अनु प्रमदया सह संस्थितः मृतः इति वाच्यदर्शनात् निन्दादर्शनात् देव्या इन्दुमत्या सह शरीरम् अग्निसात् अग्न्यधीनं न चकार। तदधीनवचने इति सातिप्रत्ययः। जीविताशया प्राणेच्छया तु न ॥ ७२ ॥

अथ तेन दशाहतः परे
गुणशेषामुपदिश्य भामिनीम्।
विदुषा विधयो महर्द्धयः
पुर एवोपवने समापिताः ॥ ७३ ॥

स विवेश पुरीं तया विना
क्षणदापायशशाङ्कदर्शनः।
परिवाहमिवावलोकयन्
स्वशुचः पौरवधूमुखाश्रुषु ॥ ७४ ॥

अथेति। अथ विदुषा तेन अजेन गुणाः एव शेषाः यस्याः तां गुणशेषां भामिनीम् इन्दुमतीम् उपदिश्य उद्दिश्य दशानाम् अह्नां समाहारः दशाहः। तद्धितार्थेत्यादिना समासः, समाहारस्यैकत्वादेकवचनम्, राजाहःसखिभ्यष्टजिति टच्, रात्राह्नाहाः पुंसीति पुंवत्, ततस्तसिल्। तस्मात् दशाहतः परे कर्त्तव्याः महर्द्धयः महासमृद्धयः विधयः क्रियाः पुरः पुर्य्याः उपवने एव समापिताः सम्पूर्णमनुष्ठिताः। दशाहतः इत्यत्र "विप्रः शुध्येद् दशाहेन द्वादशाहेन भूमिपः" इति वचनविरोधो नाशङ्कनीयः तस्य निर्गुणक्षत्रियविषयत्वात्। गुणवत्क्षत्रियस्य दशाहेन शुद्धिमाह पराशरः, "क्षत्रियस्तु दशाहेन स्वधर्मनिरतः शुचिः" इति सूचतेऽस्यापि गुणवत्त्वं विदुषेत्यनेन। ७३ ॥

स इति। तया इन्दुमत्या विना क्षणदायाः रात्रेः अपाये अपगमे यः शशाङ्कः चन्द्रः स इव दृश्यते इति कर्म्मार्थे ल्युट्। प्रातःकालिकचन्द्र इव दृश्यमानः इत्यर्थः। सः अजः पौरवधूमुखाश्रुषु स्वशुचः स्वशोकस्य परिवाहं जलोच्छ्वासम् इव अवलोकयन्।

अथ तं सवनाय दीक्षितः
प्रणिधानाद्गुरुराश्रमस्थितः ।
अभिषङ्गजड़ं विजज्ञिवा-
निति शिष्येण किलान्वबोधयत् ॥७५॥

असमाप्तविधिर्यतोमुनिः
तव विद्वानपि तापकारणम् ।
न भवन्तमुपस्थितः स्वयं
प्रकृतौ स्थापयितुं पथश्च्युतम् ॥ ७६ ॥

"जलोच्छ्वासाः परीवाहाः" इत्यमरः। स्वदुःखपूरातिशयम् इव पश्यन् पुरीं विवेश। वधूग्रहणात् तस्यामिन्दुमत्यां सख्याभिमानात् अजसमानदुःखसूचकपरीवाहोक्तिर्निर्वहति ॥ ७४ ॥

अथेति। अथ सवनाय यागाय दीक्षितः गुरुः वशिष्ठ आश्रमे स्वकीयाश्रमे स्थितः सन् तम् अजम् अभिषङ्गजड़ं दुःख मोहितं प्रणिधानात् चित्तैकाग्रात् विजज्ञिवान् ज्ञातवान् क्वसुश्चेति क्वसुप्रत्ययः। इति वक्ष्यमाणप्रकारेण शिष्येण अन्वबोधयत् किल। बुधेर्ण्यन्तात्सिचि लङ् ॥ ७५ ॥

वशिष्ठशिष्य आह असमाप्तेति। यतः हेतोः मुनिः असमाप्तविधिः असमाप्तक्रतुः ततः तव तापकारणं दुःखहेतुं कलत्रनाशरूपं विद्वान् जानन् अपि। विदेः शतुर्वसुरिति वस्वादेशः न लोकेत्यादिना षष्ठीप्रतिषेधः। पथः च्युतं स्वभावात् भ्रष्टं भवन्तं प्रकृतौ स्वभावे स्थापयितुं समाश्वासयितुम् इत्यर्थः स्वयं न उपस्थितः न आगतः ॥ ७६ ॥

मयि तस्य सुवृत्त! वर्त्तते
लघुसन्देशपदा सरस्वती।
शृणु विश्रुतसत्त्वसार! तां
हृदि चैनामुपधातुमर्हसि॥ ७७॥
पुरुषस्य पदेष्वजन्मनः
समतीतञ्च भवच्च भावि च।
स हि निष्प्रतिघेन चक्षुषा
त्रितयं ज्ञानमयेन पश्यति॥ ७८॥
चरतः किल दुश्चरं तपः
तृणविन्दोः परिशङ्कितः पुरा।

मयीति। हे सुवृत्त! सदाचार! सन्दिश्यते इति सन्देशः सन्देष्टव्यार्थः तस्य पदानि वाचकानि लघूनि संक्षिप्तानि सन्देशपदानि यस्यां सा लघुसन्देशपदा तस्य मुनेः सरस्वती वाक् मयि वर्त्तते, हे विश्रुतसत्त्वसार! प्रख्यातधैर्य्यातिशय! तां सरस्वतीं शृणु, एनां वाचं हृदि उपधातुं धर्त्तुं च अर्हसि॥ ७७॥

वक्ष्यमाणार्थानुगुणं मुनेः सर्व्वज्ञत्वं तावदाह, पुरुषस्येति। अजन्मनः पुरुषस्य पुराणपुरुषस्य भगवतः त्रिविक्रमस्य पदेषु विक्रमेषु त्रिभुवनेष्वपि इत्यर्थः। समतीतं भूतञ्च भवत् वर्त्तमानञ्च भावि भविष्यच्च इति त्रितयं सः मुनिः निष्प्रतिघेन अप्रतिबन्धेन ज्ञानमयेन चक्षुषा ज्ञानदृष्ट्या पश्यति हि, अतस्तदुक्तिषु न संशयितव्यम् इत्यर्थः॥ ७८॥

चरत इति। पुरा किल दुश्चरं तीव्रं तपः चरतः तृणविन्दोः

प्रजिघाय समाधिभेदिनीं
हरिरस्मै हरिणीं सुराङ्गनाम् ॥ ७९ ॥
स तपःप्रतिबन्धमन्युना
प्रमुखाविष्कृतचारुविभ्रमाम्।
अशपद्भव मानुषीति तां
शमवेलाप्रलयोर्म्मिणा भुवि ॥ ८० ॥
भगवन्! परवानयं जनः
प्रतिकूलाचरितं क्षमस्व मे।

तृणविन्दुनामकात् कस्माच्चित् ऋषेः परिशङ्कितः भीतः। कर्त्तरि क्तः, भीतार्थानां भयहेतुरित्यपादानात् पञ्चमी। हरिः इन्द्रः समाधिभेदिनीं तपोविघातिनीं हरिणीं नाम सुराङ्गनाम् अस्मै तृणविन्दवे प्रजिघाय प्रेरितवान् ॥ ७९ ॥

स इति। सः मुनिः शमः शान्तिः एव वेला मर्य्यादा तस्याः प्रलयोर्म्मिणा प्रलयकालतरङ्गेण शमविघातकेन इत्यर्थः। "अब्ध्यम्बुविकृतौ वेला कालमर्य्यादयोरपि" इत्यमरः। तपसः प्रतिबन्धेन विघ्नेन यः मन्युः क्रोधः तेन हेतुना प्रमुखे अग्रे आविष्कृतचारुविभ्रमां प्रकाशितमनोहरविलासां तां हरिणीं भुवि भूलोके मानुषी मनुष्यस्त्री भव इति अशपत् ॥ ८० ॥

भगवन्निति। हे भगवन्! महर्षे! अयं जनः परोऽस्यास्तीति स्वामित्वेन परवान् पराधीनः। अयमिति आत्मनिर्द्देशः, अहं पराधीना इत्यर्थः। मे मम प्रतिकूलाचरितम् अपराधं क्षमस्व इति अनेन प्रकारेण उपनतां शरणागतां च हरिणीम्

इति चोपनतां क्षितिस्पृशं
कृतवाना सुरपुष्पदर्शनात् ॥ ८१ ॥
क्रथकैशिकवंशसम्भवा
तव भूत्वा महिषी चिराय सा ।
उपलब्धवती दिवश्च्युतं
विवशा शापनिवृत्तिकारणम् ॥ ८२ ॥
तदलं तदपायचिन्तया
विपदुत्पत्तिमतामुपस्थिता ।
वसुधेयमवेक्ष्यतां त्वया
वसुमत्या हि नृपाः कलत्रिणः ॥ ८३ ॥

आ सुरपुष्पदर्शनात् सुरपुष्पदर्शनपर्य्यन्तं क्षितिं स्पृशतीति क्षितिस्पृक् तां क्षितिस्पृशं मानुषीं कृतवान् दिव्यपुष्पदर्शनं शापावधिरित्यनुगृहीतवान् इत्यर्थः ॥ ८१ ॥

क्रथेति । क्रथकैशिकानां राज्ञां वंशे सम्भवः यस्याः सा हरिणी तव महिषी अभिषिक्ता स्त्री । "कृताभिषेका महिषी" इत्यमरः । भूत्वा चिराय दिवः स्वर्गात् च्युतं शापनिवृत्तिकारणं सुरपुष्परूपम् उपलब्धवती विवशा अभूत् इति शेषः मृता इत्यर्थः ॥ ८२ ॥

तदिति । तत् तस्मात् तस्याः अपायचिन्तया अलं, तस्या मरणं न चिन्त्यम् इत्यर्थः । निषेधक्रियां प्रति करणत्वात् चिन्तयेति तृतीया । कुतो न चिन्त्यमत आह, उत्पत्तिमतां जन्मवतां विपत् विपत्तिरुपस्थिता सिद्धा, जातस्य हि ध्रुवो मृत्युः

उदये मदवाच्यमुज्झता
श्रुतमाविष्कृतमात्मवत् त्वया ।
मनसस्तदुपस्थिते ज्वरे
पुनरक्लीवतया प्रकाश्यताम् ॥ ८४ ॥

रुदता कुत एव सा पुनः
भवता नानुमृतापि लभ्यते ।
परलोकजुषां स्वकर्म्मभिः
गतयो भिन्नपथा हि देहिनाम् ॥ ८५ ॥

इत्यर्थः । तथापि कलत्ररहितस्य किं जीवितेन तत्राह, त्वया इयं वसुधा भूतिः अवेक्ष्यतां पाल्यतां, हि यस्मात् नृपाः वसुमत्या पृथिव्या कलत्रिणः कलत्रवन्तः, अतो न शोचितव्यम् इत्यर्थः ॥ ८३ ॥

उदय इति । उदये अभ्युदये सति मदेन यत् वाच्यं निन्दा तत् उज्झता परिहरता सति अपि मदहेतौ अवमाद्यता त्वया यत् आत्मवत् अध्यात्मप्रचुरं श्रुतं शास्त्रं तज्जनितं ज्ञानम् इति यावत् आविष्कृतं प्रकाशितं तत् श्रुतं मनसः ज्वरे सन्तापे उपस्थिते प्राप्ते अक्लीवतया धैर्य्येण लिङ्गेन पुनः प्रकाश्यतां विदुषा सर्व्वास्ववस्थास्वपि धीरेण भवितव्यम् इत्यर्थः ॥ ८४ ॥

इतोऽपि न रोदितव्यमित्याह, रुदतेति । रुदता भवता कुतः एव लभ्यते न लभ्यते एव, अनुम्रियते इति अनुमृत् क्विप् । तेन अनुमृता अनुमृतवता अपि भवता पुनः न लभ्यते । कथं न लभ्यते ? इत्याह, परलोकजुषां लोकान्तरभाजां देहिनां गम्यन्ते इति गतयः गम्यस्थानानि स्वकर्म्मभिः पूर्व्वाचरितपुण्य-

अपशोकमनाः कुटुम्बिनी
मनुगृह्णीष्व निवापदत्तिभिः ।
स्वजनाश्रु किलातिसन्ततं
दहति प्रेतमिति प्रचक्षते ॥ ८६ ॥
मरणं प्रकृतिः शरीरिणां
विकृतिर्जीवितमुच्यते बुधैः ।
क्षणमप्यवतिष्ठते श्वसन्
यदि जन्तुर्ननु लाभवानसौ ॥ ८७ ॥

पापैः भिन्नपथाः पृथक्कृतमार्गाः हि, परत्रापि स्वस्वधर्मानुरूपफलभोगाय भिन्नदेहगमनान्न मृतेनापि लभ्यते इत्यर्थः ॥ ८५ ॥

अपेति । किन्तु अपशोकमनाः निर्दुःखचित्तः सन् कुटुम्बिनीं पत्नीं निवापदत्तिभिः पिण्डोदकादिदानैः अनुगृह्णीष्व तर्पय इत्यर्थः । अन्यथा दोषमाह, अतिसन्ततम् अविच्छिन्नं स्वजनानां बन्धूनाम् । "बन्धुस्वस्वजनाः समाः" इत्यमरः । अश्रु, कर्तृ प्रेतं मृतं दहतीति प्रचक्षते किल । अत्र याज्ञवल्क्यः, "श्लेष्माश्रु बन्धुभिर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः । अतो न रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः ॥" इति ॥ ८६ ॥

मरणमिति । शरीरिणां मरणं प्रकृतिः स्वभावः ध्रुवम् इत्यर्थः, जीवितं विकृतिः यादृच्छिकं बुधैः उच्यते, एवं स्थिते जन्तुः प्राणी क्षणम् अपि । अत्यन्तसंयोगे द्वितीया । श्वसन् जीवन् अवतिष्ठते यदि असौ क्षणजीवी लाभवान् ननु । जीवने यथालाभं सन्तोष्टव्यम् अलभ्यलाभात्, मरणे तु न शोचितव्यम् अस्य स्वाभाव्यात् इति भावः ॥ ८७ ॥

अवगच्छति मूढचेतनः
प्रियनाशं हृदि शल्यमर्पितम्।
स्थिरधीस्तु तदेव मन्यते
कुशलद्वारतया समुद्धृतम्॥ ८८॥

स्वशरीरशरीरिणावपि
श्रुतसंयोगविपर्य्ययौ यदा।
विरहः किमिवानुतापयेत्
वद बाह्यैर्विषयैर्विपश्चितम्॥ ८९॥

न पृथग्जनवच्छुचो वशं
वशिनामुत्तम! गन्तुमर्हसि।

अवेति। मूढचेतनः भ्रान्तबुद्धिः प्रियनाशम् इष्टनाशं हृदि अर्पितं निखातं शल्यं शङ्कुम् अवगच्छति मन्यते, स्थिरधीः विद्वान् तु तत् एव शल्यं समुद्धृतम् उत्खातं मन्यते प्रियनाशे सति इति शेषः, कुतः? कुशलद्वारतया प्रियनाशस्य मोक्षोपायतया इत्यर्थः। विषयलाभविनाशयोर्यथाक्रमं हिताहितसाधनत्वाभिमानः पामराणां विपरीतं तु विपश्चिताम् इति भावः॥ ८८॥

स्वेति। स्वस्य शरीरशरीरिणौ देहात्मानौ अपि यदा यतः श्रुतौ अवगतौ संयोगविपर्य्ययौ संयोगवियोगौ ययोः तौ तयोक्तौ तदा बाह्यैः विषयैः पुत्रकलत्रादिभिः विरहः विपश्चितं विद्वांसं किम् इव अनुतापयेत्, त्वं वद, न किञ्चित् इत्यर्थः। अथवा स्वशब्दस्य शरीरेणैव सम्बन्धः॥ ८९॥

नेति। हे वशिनाम् उत्तम! जितेन्द्रियवर्य्य! पृथग्जनवत्

द्रुमसानुमतां किमन्तरं
यदि वायौ द्वितयेऽपि ते चलाः ॥ ९० ॥
स तथेति विनेतुरुदारमतेः
प्रतिगृह्य वचो विससर्ज्ज मुनिम्।
तदलब्धपदं हृदि शोकघने
प्रतियातमिवान्तिकमस्य गुरोः ॥ ९१ ॥
तेनाष्टौ परिगमिताः समाः कथञ्चित्
बालत्वादवितथसूनृतेन सूनोः।

शुचः शोकस्य वशं गन्तुं न अर्हसि। तथाहि, द्रुमसानुमतां तरुशिखरिणां किम् अन्तरं कः विशेषः वायौ सति द्वितये अपि द्विप्रकाराः अपि। प्रथमचरमेत्यादिना जसि विभाषया सर्व्वनामसंज्ञा। ते द्रुमसानुमन्तः चलाः यदि सानुमतामपि चलने द्रुमवत् तेषामपि अचलसंज्ञा न स्यात् इत्यर्थः ॥ ९० ॥

स इति। सः अजः उदारमतेः विनेतुः गुरोः वशिष्ठस्य वचः तच्छिष्यसुखेरितं तथेति प्रतिगृह्य अङ्गीकृत्य मुनिं वशिष्ठशिष्यं विससर्ज्ज प्रेषयामास, किन्तु तद्वचः शोकघने दुःखसान्द्रे अस्य अजस्य हृदि अलब्धपदम् अप्राप्तावकाशं सत् गुरोः वशिष्ठस्य अन्तिकं प्रतियातम् इव, प्रतिनिवृत्तं किमु, इत्युत्प्रेक्षा। तोटकवृत्तमेतत्। "इह तोटकमम्बुधिसैः प्रथितम्" इति तल्लक्षणम् ॥ ९१ ॥

तेनेति। अवितथं यथार्थं सूनृतं प्रियवचनं यस्य तेन अजेन सूनोः पुत्रस्य बालत्वात् राज्याक्षमत्वात् इत्यर्थः

सादृश्यप्रतिकृतिदर्शनैः प्रियायाः
स्वप्नेषु क्षणिकसमागमोत्सवैश्च ॥ ८२ ॥

तस्य प्रसह्य हृदयं किल शोकशङ्कुः
प्लक्षप्ररोह इव सौधतलं बिभेद ।
प्राणान्तहेतुमपि तं भिषजामसाध्यं
लाभं प्रियानुगमने त्वरया स मेने ॥ ८३ ॥

प्रियायाः इन्दुमत्याः सादृश्यं वस्त्वन्तरगतम् आकारसाम्यं प्रतिकृतिः चित्रं तयोः दर्शनैः स्वप्नेषु क्षणिकाः क्षणभङ्गुराः ये समागमोत्सवाः तैश्च कथञ्चित् कृच्छ्रेण अष्टौ समाः वत्सराः । "संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः" इत्यमरः । परिगमिताः अतिवाहिताः । उक्तञ्च, "वियोगावस्थासु प्रियजनसदृक्षानुभवनं ततश्चित्रं कर्म्म स्वपनसमये दर्शनमपि । तदङ्गस्पृष्टानामुपगतवतां स्पर्शनमपि प्रतीकारः कामव्यथितमनसां कोऽपि कथितः ॥" इति। प्रकृते सादृश्यादित्रितयाभिधानं तदङ्गस्पृष्टपदार्थस्पृष्टेरप्युपलक्षणम् । प्रहर्षिणीवृत्तमेतत् ॥ ८२ ॥

तस्येति । शोकः एव शङ्कुः कीलः । "शङ्कुः कीले शिवे च" इति विश्वः । तस्य अजस्य हृदयं, प्लक्षप्ररोहः सौधतलम् इव, प्रसह्य बलात् किल बिभेद । सः अजः प्राणान्तहेतुं मरणकारणम् अपि भिषजाम् असाध्यम् अप्रतिसमाधेयं तं शोकशङ्कुरोगपर्य्यवसितं प्रियायाः अनुगमने त्वरया उत्कण्ठया लाभं तद्विरहस्यातिदुःखसहत्वात् तत्प्राप्तिकारणं मरणमेव वरमित्यमन्यत इत्यर्थः ॥ ८३ ॥

सम्यग्विनीतमथ वर्म्महरं कुमार-
मादिश्य रक्षणविधौ विधिवत् प्रजानाम् ।
रोगोपसृष्टतनुदुर्वसतिं मुमुक्षुः
प्रायोपवेशनमतिर्नृपतिर्बभूव ॥ ९४ ॥
तीर्थे तोयव्यतिकरभवे जह्नुकन्यासरय्वो-
र्देहत्यागादमरगणनालेख्यमासाद्य सद्यः ।

सम्यगिति । अथ नृपतिः अजः सम्यक् विनीतं निसर्ग-संस्काराभ्यां विनयवन्तं वर्म्म हरतीति वर्म्महरः कवचधारणार्ह-वयस्कः । वयसि चेत्यच्प्रत्ययः । तं कुमारं दशरथं प्रजानां रक्षणविधौ राज्ये विधिवत् विध्यर्हं यथाशास्त्रम् इत्यर्थः । तदर्हमिति वतिप्रत्ययः । आदिश्य नियुज्य रोगेण उपसृष्टायाः व्याप्तायाः तनोः शरीरस्य दुर्वसतिं दुःखावस्थितिं मुमुक्षुः जिहासुः सन् प्रायोपवेशने अनशनावस्थाने मतिः यस्य सः बभूव । "प्रायश्चानशने मृत्यौ तुल्यबाहुल्ययोरपि" इति विश्वः । अत्र पुराणवचनम्, "समासक्तो भवेद् यस्तु पातकैर्महदादिभिः । दुश्चिकित्स्यैर्महारोगैः पीड़ितो वा भवेत् तु यः । स्वयं देहवि-नाशस्य काले प्राप्ते महामतिः । आब्राह्मणं वा स्वर्गादिमहा-फलजिगीषया । प्रविशेज्ज्वलनं दीप्तं कुर्य्यादनशनं तथा । एतेषामधिकारोऽस्ति नान्येषां सर्व्वजन्तुषु । नराणामथ नारीणां सर्व्ववर्णेषु सर्व्वदा ॥" इति । अनयोर्वसन्ततिलकाच्छन्दः । तल्लक्षणम्, "उक्ता वसन्ततिलका तभजाजगौ गः" इति ॥९४॥

तीर्थ इति । असौ अजः जह्नुकन्यासरय्वोः तोयानां जलानां व्यतिकरेण सम्भेदेन भवे तीर्थे गङ्गासरयूसङ्गमे देहत्यागात्

पूर्व्वाकाराधिकतररुचा सङ्गतः कान्तयासौ
लीलागारेष्वरमत पुनर्नन्दनाभ्यन्तरेषु ॥ ६५ ॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ
अजविलापो नाम अष्टमः सर्गः ।

---

सद्यः एव अमरगणनायां लेख्यं लेखनम् । तयोरेव कृत्यक्त-खलर्था इति भावार्थे ण्यत्प्रत्ययः । आसाद्य प्राप्य पूर्व्वस्मात् आकारात् अधिकतरा रुक् यस्याः तया कान्तया रमण्या सङ्गतः सन् नन्दनस्य इन्द्रोद्यानस्य अभ्यन्तरेषु अन्तर्वर्त्तिषु लीलागारेषु क्रीड़ाभवनेषु पुनः अरमत । "यथाकथञ्चित् तीर्थेऽस्मिन् देहत्यागं करोति यः । तस्यात्मघातदोषो न प्राप्नु-यादीप्सितान्यपि ॥" इति स्कान्दे । मन्दाक्रान्ताच्छन्दः । तल्ल-चणम्, "मन्दाक्रान्ता जलधिगैषड़्मौ भनौ तागुरू चेत्" इति ॥ ८५ ॥

इति श्रीमहामहोपाध्याय-कोलाचलमल्लिनाथसूरिविरचितायां
रघुवंशटीकायां सञ्जीवनी-समाख्यायां अष्टमः सर्गः ।

---

## नवमः सर्गः ।

पितुरनन्तरमुत्तरकोशलान्
समधिगम्य समाधिजितेन्द्रियः ।
दशरथः प्रशशास महारथः
यमवतामवताञ्च धुरि स्थितः ॥ १ ॥

अधिगतं विधिवद् यदपालयत्
प्रकृतिमण्डलमात्मकुलोचितम् ।
अभवदस्य ततो गुणवत्तरं
सनगरं नगरन्ध्रकरौजसः ॥ २ ॥

एकलोचनमेकार्द्धे सार्द्धलोचनमन्यतः ।
नीलार्द्धं नीलकण्ठार्द्धं महः किमपि मन्महे ॥

पितुरिति । समाधिना संयमेन जितेन्द्रियः । "समाधिर्नियमे ध्याने" इति कोषः । यमवतां संयमिनाम् अवतां रक्षतां च धुरि अग्रे स्थितः महारथः । "एको दश सहस्राणि योधयेत् यस्तु धन्विनाम् । शस्त्रशास्त्रप्रवीणश्च स महारथ उच्यते ॥" दशरथः पितुः अनन्तरम् उत्तरकोशलान् जनपदान् समधिगम्य प्रशशास । अत्र मनुः, "क्षत्रियस्य परो धर्म्मः प्रजानां परिपालनम्" इति । द्रुतविलम्बितमेतद्वृत्तम् । तल्लक्षणम्, "द्रुतविलम्बितमाह नभौ भरौ" इति ॥ १ ॥

अधिगतमिति । अधिगतं प्राप्तम् आत्मकुलोचितं स्वकुलागतं सनगरं नगरजनसहितं प्रकृतिमण्डलं जानपदमण्डलम् ।

उभयमेव वदन्ति मनीषिणः
समयवर्षितया कृतकर्म्मणाम् ।
बलनिषूदनमर्थपतिञ्च तं
श्रमनुदं मनुदण्डधरान्वयम् ॥ ३ ॥
जनपदे न गदः पदमादधौ
अभिभवः कुत एव सपत्नजः ।

अत्र प्रकृतिशब्देन प्रजामात्रवाचिना नगरशब्दयोगाद् गोबलीवर्दन्यायेन जानपदमात्रमुच्यते । यत् यस्मात् विधिवत् यथाशास्त्रम् अपालयत् ततः हेतोः रन्ध्रं करोतीति रन्ध्रकरः रन्ध्रहेतुः इत्यर्थः । कृञोहेतुताच्छील्यानुलोम्येष्विति टच्प्रत्ययः । नगस्य रन्ध्रकरः नगरन्ध्रकरः कुमारः । "कुमारः क्रौञ्चदारणः" इत्यमरः । तदोजसः तत्तुल्यबलस्य अस्य दशरथस्य गुणवत्तरम् अभवत् तत् पौरजानपदमण्डलं तस्मिन्नतीव सक्तमभूत् इत्यर्थः ॥ २ ॥

उभयमिति । मनसः ईषिणः मनीषिणः विद्वांसः । पृषोदरादित्वात् साधुः । बलनिषूदनम् इन्द्रं दण्डस्य धरः राजा मनुरिति यो दण्डधरः स एव अन्वयः कूटस्थः यस्य तम् अर्थ... दशरथं च इति उभयम् एव समये अवसरे जलं धनं च व... तीति समयवर्षी तस्य भावेन समयवर्षितया हेतुना कृतकर्म्मणां स्वकर्म्मकारिणां नुदतीति नूदम् । इगुपधज्ञाप्रीकिरः क इति कप्रत्ययः । श्रमस्य नुदं श्रमनुदम् । क्विवन्तत्वे नपुंसकलिङ्गेनोभयशब्देन सामानाधिकरण्यं न स्यादिति वदन्ति ॥ ३ ॥

जनपद इति । शमरते शान्तिपरे अमरतेजसि अजनन्दने

क्षितिरभूत् फलवत्यजनन्दने
शमरतेऽमरतेजसि पार्थिवे ॥ ४ ॥

दशदिगन्तजिता रघुणा यथा
श्रियमपुष्यदजेन ततः परम्।
तमधिगम्य तथैव पुनर्बभौ
न न महीनमहीनपराक्रमम् ॥ ५ ॥

समतया वसुवृष्टिविसर्ज्जनैः
नियमनादसताञ्च नराधिपः।

दशरथे पार्थिवे पृथिव्याः ईश्वरे सति। तस्येश्वर इत्यण्-प्रत्ययः। जनपदे देशे गदः व्याधिः। "उपतापरोगव्याधि-गदामयाः" इत्यमरः। पदं न आदधौ नाचक्राम इत्यर्थः। सपत्नजः शत्रुजन्यः अभिभवः कुतः एव असम्भावित एव इत्यर्थः, क्षितिः फलवती अभूच्च ॥ ४ ॥

दशेति। मही, दशदिगन्तान् जितवानिति दशदिगन्तजित् तेन रघुणा यथा श्रियं कान्तिम् अपुष्यत् ततः परं रघोः अन-न्तरम् अजेन च श्रियम् अपुष्यत्। तथैव अहीनपराक्रमं न हीनः पराक्रमः यस्य तम् अन्यूनपराक्रमं तं दशरथम् इनं स्वामिनम् अधिगम्य पुनः न बभौ इति न बभावेव इत्यर्थः। द्वौ नञौ प्रकृतमर्थं गमयतः ॥ ५ ॥

समतयेति। नराधिपः दशरथः समतया समवर्त्तित्वेन मध्यस्थत्वेन इत्यर्थः वसुवृष्टेः धनवृष्टेः विसर्ज्जनैः असतां दुष्टानां नियमनात् निग्रहाच्च सवरुणौ वरुणसहितौ यमपुण्यजनेश्वरौ यमकुवेरौ यमकुवेरवरुणान् यथासंख्यम् अनुययौ अनुचकार।

अनुययौ यमपुण्यजनेश्वरौ
सवरुणावरुणाग्रसरं रुचा ॥ ६ ॥
न मृगयाभिरतिर्न दुरोदरं
न च शशिप्रतिमाभरणं मधु ।
तमुदयाय न वा नवयौवना
प्रियतमा यतमानमपाहरत् ॥ ७ ॥
न कृपणा प्रभवत्यपि वासवे
न वितथा परिहासकथास्वपि ।

रुचा तेजसा अरुणाग्रसरम् अरुणसारथिं सूर्य्यम् अनुययौ ॥६॥

तस्य व्यसनासक्तिर्नासीदित्याह, नेति । उदयाय यतमानम् अभ्युदयार्थं व्याप्रियमाणं तं दशरथं मृगयाभिरतिः आखेटव्यसनं न अपाहरत् न आचकर्ष । "आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम्" इत्यमरः । दुष्टम् आ समन्तात् उदरमस्येति दुरोदरं द्यूतं न च अपाहरत् । "दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम्" इत्यमरः । शशिनः प्रतिमा प्रतिविम्बम् आभरणं यस्य तत् मधु न अपाहरत् । नेति पदच्छेदः, वाशब्दः समुच्चये । नवयौवना नवं नूतनं यौवनं तारुण्यं यस्याः तादृशी प्रियतमा स्त्री न अपाहरत् । जातावेकवचनम् । अत्र मनुः, "पानमक्षः स्त्रियश्चेति मृगया च यथाक्रमम् । एतत् कष्टतमं विद्याच्चतुष्कं कामजे गणे ॥" इति ॥ ७ ॥

नेति । तेन राज्ञा प्रभवति प्रभौ सति वासवे अपि कृपणा दीना वाक् न ईरिता न उक्ता, परिहासकथासु अपि वितथा

न च सपत्नजनेष्वपि तेन वाक्
अपरुषा परुषाक्षरमीरिता ॥ ८ ॥

उदयमस्तमयञ्च रघूद्वहात्
उभयमानशिरे वसुधाधिपाः।
स हि निदेशमलङ्घयतामभूत्
सुहृदयोहृदयः प्रतिगर्ज्जताम् ॥ ९ ॥

अजयदेकरथेन स मेदिनी-
मुदधिनेमिमधिज्यशरासनः।

अनृता वाक् न ईरिता, किञ्च अपरुषा रोषशून्येन तेन सपत्नजनेषु अपि परुषाक्षरं निष्ठुराक्षरं यथा तथा वाक् न ईरिता किमुतान्यत्रेति। सर्व्वत्रापिशब्दार्थः। किन्त्वदीना सत्या मधुरैव वागुक्तेति फलितार्थः ॥ ८ ॥

उदयमिति। वसुधाधिपाः राजानः उद्वहतीति उद्वहः नायकः। पचाद्यच्। रघूणाम् उद्वहः रघुनायकः तस्मात् रघुनायकात् उदयं वृद्धिम् अस्तमयं नाशं च इत्युभयम् आनशिरे लेभिरे। कुतः? हि यस्मात् सः दशरथः निदेशम् आज्ञाम् अलङ्घयतां शोभनं हृदयमस्येति सुहृत् मित्रम् अभूत्। सुहृद्दुर्हृदौ मित्रामित्रयोरिति निपातः। प्रतिगर्ज्जतां प्रतिस्पर्द्धिनाम् अयः इव हृदयं यस्य इति अयोहृदयः कठिनचित्तः अभूत् आज्ञाकारिणो रक्षति अन्यान् मारयति इत्यर्थः ॥ ९ ॥

अजयदिति। अधिज्यशरासनः सः दशरथः उदधिनेमिं समुद्रवेष्टनां मेदिनीम् एकरथेन अजयत् स्वयमेकरथेनाजैषीत् इत्यर्थः। गजवती गजयुक्ता जवेन तीव्राः जवाधिकाः

जयमघोषयदस्य तु केवलं
गजवती जवतीव्रहया चमूः ॥ १० ॥
अवनिमेकरथेन वरूथिना
जितवतः किल तस्य धनुर्भृतः ।
विजयदुन्दुभितां ययुरर्णवाः
घनरवा नरवाहनसम्पदः ॥ ११ ॥
शमितपक्षबलः शतकोटिना
शिखरिणां कुलिशेन पुरन्दरः ।
स शरवृष्टिमुचा धनुषा द्विषां
स्वनवता नवतामरसाननः ॥ १२ ॥

हयाः यस्याः सा चमूस्तु अस्य नृपस्य केवलं जयम् अघोषयत् अप्रथयत् । स्वयमेकवीरस्य चमूरुपकरणमात्रम् इति भावः ॥ १० ॥

अवनिमिति । वरूथिना गुप्तिमता । "वरूथो रथगुप्तिर्या तिरोधत्ते रथस्थितिम्" इति सज्जनः । एकरथेन अवनिं जितवतः धनुर्भृतः नरवाहनसम्पदः कुबेरश्रीकस्य तस्य दशरथस्य घनरवाः मेघसमघोषाः अर्णवाः विजयदुन्दुभितां ययुः अर्णवान्तविजयी इत्यर्थः ॥ ११ ॥

शमितेति । पुरन्दरः इन्द्रः शतकोटिना शतास्रिणा कुलिशेन वज्रेण शिखरिणां पर्व्वतानां शमितपक्षबलः विनाशितपक्षसारः नवतामरसाननः नवपङ्कजाननः । "पङ्केरुहं तामरसम्" इत्यमरः । सः दशरथः शरवृष्टिमुचा स्वनवता धनुषा द्विषां शमितः नाशितः पक्षः सहायः बलं च येन सः तथोक्तः । "पक्षः सहायोऽपि" इत्यमरः ॥ १२ ॥

चरणयोर्नखरागसमृद्धिभि-
र्मुकुटरत्नमरीचिभिरस्पृशन् ।
नृपतयः शतशो मरुतो यथा
शतमखं तमखण्डितपौरुषम् ॥ १३ ॥
निववृते स महार्णवरोधसः
सचिवकारितबालसुताञ्जलीन् ।
समनुकम्प्य सपत्नपरिग्रहा-
ननलकानलकानवमां पुरीम् ॥ १४ ॥
उपगतोऽपि च मण्डलनाभिता-
मनुदितान्यसितातपवारणः ।

चरणयोरिति । शतशः नृपतयः अखण्डितपौरुषं तं दशरथं मरुतः देवाः, शतमखं यथा शतक्रतुम् इव, नखरागेण चरणनखकान्त्या समृद्धिभिः सम्पादितर्द्धिभिः मुकुटरत्नमरीचिभिः चरणयोः अस्पृशन् प्रणेमुः इत्यर्थः ॥ १३ ॥

निववृत इति । सः दशरथः सचिवैः सम्प्रयोज्यैः कारिताः बालसुतानाम् अञ्जलयः यैः तान् स्वयमसम्मुखागतान् इत्यर्थः । अनलकान् हतभर्तृकतया अलकसंस्कारशून्यान् सपत्नपरिग्रहान् शत्रुपत्नीः । "पत्नी परिजनादानमूलशापाः परिग्रहाः" इत्यमरः । समनुकम्प्य अनुगृह्य अलकानवमाम् अलकानगरात् अन्यूनां पुरीम् अयोध्यां प्रति महार्णवानां रोधसः पर्य्यन्तात् निववृते । शरणागतवत्सलः इति भावः ॥ १४ ॥

उपगत इति । अनुदितम् अनुच्छ्रितम् अन्यत् स्वच्छत्राति-

श्रियमवेक्ष्य स रन्ध्रचलामभूत्
अनलसोऽनलसोमसमद्युतिः ॥ १५ ॥

रित्तं सितातपवारणं श्वेतच्छत्रं यस्य सः अनलसोमयोः अग्नि-चन्द्रयोः समे द्युती तेजःकान्ती यस्य सः तथोक्तः श्रियं लक्ष्मीं रन्ध्रे अन्यायालस्यादिरूपे छले चलां चञ्चलाम् अवेक्ष्य अवलोक्य। योऽहिं केनचिन्मिषेण पुमांसं परिहरति। सः दशरथः मण्डलस्य नाभितां द्वादशराजमण्डलस्य प्रधानमहीपतित्वम् उपगतः अपि चक्रवर्त्ती सन्नपि इत्यर्थः। "अथ नाभिस्तु जन्त्वङ्गे यस्य संज्ञा प्रतारिका। रथचक्रस्य मध्यस्थपिण्डिकायाञ्च ना पुनः। आद्यचत्रियभेदे तु मनोर्मुख्यमहीपतौ" इति केशवः पाठान्तरे अजितं नृपास्पदम् अस्तीति बुद्धा अनलसः अप्र-यत् अप्र-अभूत् विजितनिखिलजेतव्योऽपि पुनर्जेतव्यान्तरवान्... रूक एवावतिष्ठते इत्यर्थः। द्वादशराजमण्डलं तु कामन्दकेनोक्तम्, "अरिर्मित्रमरेर्मित्रं मित्रमित्रमतःपरम्। तथारिमित्र-मित्रञ्च विजिगीषोः पुरःसराः। पार्ष्णिग्रहास्ततः पश्चादाक्रन्द-स्तदनन्तरम्। आसारावनयोश्चैव विजिगीषोस्तु पृष्ठतः। अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः। अनुग्रहे संहतयोः समर्थो व्यस्तयोर्वधे। मण्डलाद्बहिरेतेषामुदासीनो बलाधिकः। अनुग्रहे संहतानां व्यस्तानाञ्च वधे प्रभुः॥" इति। "अरिमित्रादयः पञ्च विजिगीषोः पुरःसराः। पार्ष्णिग्राहाक्रन्दपार्ष्णिग्राहा-साराक्रन्दासाराः।" इति पृष्ठतः चत्वारः। मध्यमोदासीनौ द्वौ, विजिगीषुरेकः, इत्येवं द्वादशराजमण्डलम्। तत्रोदासीन-मध्यमोत्तरश्चक्रवर्त्ती दशरथश्चैतादृगिति तात्पर्य्यार्थः॥ १५ ॥

तमपहाय ककुत्स्थकुलोद्भवं
पुरुषमात्मभवञ्च पतिव्रता।
नृपतिमन्यमसेवत देवता
सकमला कमलाघवमर्थिषु ॥ १६ ॥

तमलभन्त पतिं पतिदेवताः
शिखरिणामिव सागरमापगाः।
मगधकोशलकेकयशासिनां
दुहितरोऽहितरोपितमार्गणम् ॥ १७ ॥

तमिति। पत्यौ व्रतं नियमः यस्याः सा पतिव्रता सकमला कमलहस्ता देवता लक्ष्मीः अर्थिषु विषये अलाघवं लघुत्वरहितम् अपराङ्मुखम् इत्यर्थः। ककुत्स्थकुलोद्भवं तं दशरथम् आत्मभवं पुरुषं विष्णुं च अपहाय त्यक्त्वा अन्यं कं नृपतिम् असेवत कर्मा.. नासेवत इत्यर्थः। विष्णाविव विष्णुतुल्ये तस्मिन्नपि श्रीः स्थिराभूत् इत्यर्थः ॥ १६ ॥

तमिति। पतिः एव देवता यासां ताः पतिदेवताः पतिव्रताः मगधाश्च कोशलाश्च केकयाश्च तान् जनपदान् शासतीति तच्छासिनः तेषां राज्ञां दुहितरः पुत्र्यः सुमित्रा-कौशल्या-कैकेय्यः इत्यर्थः। अत्र क्रमो न विवक्षितः। अहितरोपितमार्गणं शत्रुनिखातशरम्। "कलम्बमार्गणशराः" इत्यमरः। तं दशरथं शिखरिणां क्ष्माभृतां दुहितरः आ समन्तात् अपगच्छन्तीति अथवा आपेन अम्बुस्यन्दिना वेगेन गच्छन्तीति आपगाः इति क्षीरस्वामी। नद्यः सागरम् इव, पतिं भर्तारम् अलभन्त प्रापुः ॥ १७ ॥

प्रियतमाभिरसौ तिसृभिर्बभौ
तिसृभिरेव भुवं सह शक्तिभिः।
उपगतो विनिनीषुरिव प्रजाः
हरिहयोऽरिहयोगविचक्षणः ॥ १८ ॥

स किल संयुगमूर्द्ध्नि सहायतां
मघवतः प्रतिपद्य महारथः।
स्वभुजवीर्य्यमगापयदुच्छ्रितं
सुरवधूरवधूतभयाः शरैः ॥ १९ ॥

प्रियतमाभिरिति। अरीन् घ्नन्तीति अरिहाः रिपुघ्नाः। हन्तेः क्विप् ब्रह्मभ्रूणवृत्रेषु क्विबिति नियमस्य प्रायिकत्वात्। यथाह न्यासकारः, "प्रायिकश्चायं नियमः क्वचिदन्यस्मिन्नप्युपपदे दृश्यते मधुहा, प्रायिकत्वञ्च वक्ष्यमाणस्य बहुलग्रहणस्य पुरस्तादपकर्षाल्लभ्यते" इति। तेषु योगेषु उपायेषु विचक्षणः दक्षः। "योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु" इत्यमरः। इन्द्रेऽपि योज्यमेतत्। असौ दशरथः तिसृभिः प्रियतमाभिः सह, प्रजाः विनिनीषुः विनेतुमिच्छुः तिसृभिः शक्तिभिः प्रभुमन्त्रोत्साहशक्तिभिः एव सह, भुवम् उपगतः हरिहयः इन्द्रः इव, बभौ ॥ १८ ॥

स इति। महारथः सः दशरथः संयुगमूर्द्ध्नि रणाङ्गणे मघवतः इन्द्रस्य सहायतां प्रतिपद्य प्राप्य शरैः अवधूतभयाः निवर्त्तितत्रासाः सुरवधूः उच्छ्रितं स्वभुजवीर्य्यम् अगापयत् किल खलु। गायतेः शब्दकर्म्मत्वाद् गतिबुद्ध्यादिना सुरवधूनामपि कर्म्मत्वम् ॥ १९ ॥

क्रतुषु तेन विसर्ज्जितमौलिना
भुजसमाहृतदिग्वसुना कृताः ।
कनकयूपसमुच्छ्रयशोभिनः
वितमसा तमसासरयूतटाः ॥ २० ॥

अजिनदण्डभृतं कुशमेखलां
यतगिरं मृगशृङ्गपरिग्रहाम् ।
अधिवसंस्तनुमध्वरदीक्षिता-
मसमभासमभासयदीश्वरः ॥ २१ ॥

क्रतुष्विति । क्रतुषु अश्वमेधेषु विसर्ज्जितमौलिना अव-रोपितकिरीटेन । "यावद् यज्ञमध्वर्युरेव राजा भवति" इति राजचिह्नत्यागविधानादित्यभिप्रायः । "मौलिः किरीटे धम्मिल्ले" इति विश्वः । भुजसमाहृतदिग्वसुना भुजार्ज्जितदिगन्तसम्पदा । अनेन क्षत्रियस्य विजितमित्युक्तम्, नियमार्ज्जितधनत्वं सद्विनि-योगकारित्वञ्च सूच्यते । वितमसा तमोगुणरहितेन तेन दश-रथेन तमसा च सरयूश्च नद्यौ तयोः तटाः कनकयूपानां समु-च्छ्रयेण समुन्नमनेन शोभिनः कृताः । कनकमयत्वञ्च यूपानां स्तुत्यर्थं विध्यभावात् । "हेमयूपस्तु शोभिकः" इति यादवः ॥ २० ॥

अजिनेति । ईश्वरः भगवान् अष्टमूर्त्तिः अजिनं कृष्णा-जिनं दण्डम् औदुम्बरं बिभर्त्तीति ताम् अजिनदण्डभृतम् "कृष्णाजिनं दीक्षयति औदुम्बरं दण्डं यजमानाय प्रयच्छतीति" वचनात् । कुशमयी मेखला यस्याः तां कुशमेखलां शरमयी मौञ्जी वा मेखला तया यजमानं दीक्षयतीति विधानात् । प्रकृते कुशग्रहणं क्वचित् प्रतिनिधिदर्शनात् कृतम् । यतगिरं

अवभृथप्रयतो नियतेन्द्रियः
सुरसमाजसमाक्रमणोचितः ।
नमयति स्म स केवलमुन्नतं
वनमुचे नमुचेररये शिरः ॥ २२ ॥

असकृदेकरथेन तरस्विना
हरिहयाग्रसरेण धनुर्भृता ।
दिनकराभिमुखा रणरेणवः
रुरुधिरे रुधिरेण सुरद्विषाम् ॥ २३ ॥

वाचंयमाम् "वाचं यच्छति" इति श्रुतेः । मृगशृङ्गं परिग्रहे कण्डूयनसाधनं यस्याः ताम् "कृष्णविषाणया कण्डूयते" इ.. श्रुतेः । अध्वरदीक्षितां संस्कारविशेषयुक्तां तनुं दाशरथीम् अधि-वसन् अधितिष्ठन् सन् असमाः भासः दीप्तयः यस्मिन् कर्मणि तत् यथा तथा अभासयत् भासयति स्म ॥ २१ ॥

अवभृथेति । अवभृथेन प्रयतः नियतेन्द्रियः सुर... समाक्रमणोचितः देवसभाधिष्ठानार्हः सः दशरथः उन्नतं शि.. वनमुचे जलवर्षिणे । "जलं नीरं वनम्" इति शाश्वतः । नमु.. अरये केवलम् इन्द्राय एव नमयति स्म, न कस्मैचिदन्यस्मै मा.. पाय इत्यर्थः ॥ २२ ॥

असकृदिति । एकरथेन अद्वितीयरथेन तरस्विना बल-वता हरिहयस्य इन्द्रस्य अग्रसरेण धनुर्भृता दशरथेन असकृत् बहुशः दिनकरस्य अभिमुखाः अभिमुखस्थिताः इत्यर्थः ...व. सुरद्विषां दैत्यानां रुधिरेण रुरुधिरे निवारिताः ॥ २३ ॥

अथ समावव्रते कुसुमैर्नवैः
तमिव सेवितुमेकनराधिपम् ।
यमकुवेरजलेश्वरवज्रिणां
समधुरं मधुरञ्चितविक्रमम् ॥ २४ ॥
जिगमिषुर्धनदाध्युषितां दिशं
रथयुजा परिवर्त्तितवाहनः ।
दिनमुखानि रविर्हिमनिग्रहै:
विमलयन् मलयन्नगमत्यजत् ॥ २५ ॥

अथेति । अथ यमकुवेरजलेश्वरवज्रिणां धर्म्मराजधनदवरुणसुरेन्द्राणां समा धूः भारः यस्य सः समधुरः माध्यस्थवितरणसन्नियमनैश्वर्य्यैस्तुल्यकत्तः इत्यर्थः। ऋक्पूरित्यादिना मासान्तः । तं समधुरम् अञ्चितविक्रमं पूजितपराक्रमम् एकराधिपं तं दशरथं सेवितुम् इव, मधुः वसन्तः। "अथ पुष्परसे मधुः दैत्ये चैत्रे वसन्ते च मधु" इति विश्वः। नवैः कुसुमैः उपलचितः सन् समावव्रते समागतः। "रिक्तहस्तेन नोपेया ...नं देवतां गुरुम्" इति वचनात् पुष्पसमेतो राजानं सेवितुमागतः इत्यर्थः ॥ २४ ॥

जिगमिषुरिति । धनदाध्युषितां कुवेराधिष्ठितां दिशं जिगमिषुः गन्तुमिच्छुः रथयुजा सारथिना अरुणेन परिवर्त्तितवाहनः निवर्त्तिताश्वः रविः हिमस्य निग्रहैः निराकरणैः दिनमुखानि प्रभातानि विमलयन् विशदयन् मलयं नगं मलयाचलम् अत्यजत् दक्षिणां दिशमत्याक्षीत् इत्यर्थः ॥ २५ ॥

कुसुमजन्म ततो नवपल्लवा-
स्तदनु षट्पदकोकिलकूजितम् ।
इति यथाक्रममाविरभून्मधु-
र्द्रुमवतीमवतीर्य्य वनस्थलीम् ॥ २६ ॥

नयगुणोपचितामिव भूपतेः
सदुपकारफलां श्रियमर्थिनः ।
अभियुयुः सरसो मधुसम्भृतां
कमलिनीमलिनीरपतत्त्रिणः ॥ २७ ॥

कुसुममेव न केवलमार्त्तवं
नवमशोकतरोः स्मरदीपनम् ।

कुसुमेति । आदौ कुसुमजन्म ततः नवपल्लवाः तदनु ( अनु लक्षणे इति कर्म्मप्रवचनीयत्वात् द्वितीया । यथासंख्यं तदुभयानन्तरं षट्पदानां कोकिलानाञ्च कूजितम् इत्येवम् प्रकारेण यथाक्रमं क्रममनतिक्रम्य द्रुमवतीं द्रुमभूयिष्ठां वनस्थलीम् अवतीर्य्य मधुः वसन्तः आविरभूत् । केषाञ्चित् द्रुमाणां पल्लवप्राधान्यात् केषाञ्चित् कुसुमप्राधान्यान्नोक्तक्रमस्य दृष्टविरोधः ॥२६॥

नयेति । नयः नीतिः एव गुणः तेन अथवा नयेन गुणैः शौर्य्यादिभिश्च उपचिताम् । सताम् उपकारः फलं यस्याः तां सदुपकारफलां भूपतेः दशरथस्य श्रियम् अर्थिनः इव मधुना वसन्तेन सम्भृतां सम्यक् पुष्टां सरसः सम्बन्धिनीं कमलिनीं पद्मिनीम् अलिनीरपतत्त्रिणः अलयः भृङ्गाः नीरपतत्त्रिणः जलपतत्त्रिणः हंसादयश्च अभिययुः ॥ २७ ॥

किसलयप्रसवोऽपि विलासिनां
मदयिता दयिताश्रवणार्पितः ॥ २८ ॥
विरचिता मधुनोपवनश्रियाम्
अभिनवा इव पत्रविशेषकाः ।
मधुलिहां मधुदानविशारदाः
कुरवका रवकारणतां ययुः ॥ २९ ॥
सुवदनावदनासवसम्भृतः
तदनुवादिगुणः कुसुमोद्गमः ।

मधुलोलुपैः आयतपङ्क्तिभिः दीर्घपङ्क्तिभिः मधुकरैः मधुपैः कुसुममिति । ऋतुरस्य प्राप्तः आर्त्तवम् । ऋतेरण् इत्यण् । [...]वं प्रत्ययम् अशोकतरोः केवलं कुसुमम् एव स्मरदीपनम् उद्दीपनं न, किन्तु विलासिनां मदयिता मदजनकः दयिताश्रवणार्पितः किसलयप्रसवः अपि पल्लवसन्तानः अपि स्मरदीपनः अभवत् ॥ २८ ॥

विरचिता इति । मधुना वसन्तेन विरचिताः उपवनश्रियाम् अभिनवाः पत्रविशेषकाः पत्ररचनाः इव स्थिताः मधूनां मकरन्दानां दाने विशारदाः चतुराः कुरवकाः तरवः मधुलिहां मधुपानां रवकारणतां ययुः, भृङ्गाः कुरवकाणां मधूनि पीत्वा जगुः इत्यर्थः । दानशौण्डान् अर्थिजनाः स्तुवन्ति इति भावः ॥ २९ ॥

सुवदनेति । सुवदनावदनासवेन कान्तामुखमद्येन सम्भृतः जनितः । तत् तस्य दोहदम् इति प्रसिद्धिः । तस्य आसवस्य अनुवादी सदृशः गुणः यस्य तदनुवादिगुणः कुसुमोद्गमः कार्त्

मधुकरैरकरो न्मधुलोलुपैः
वकुलमाकुलमायतपङ्क्तिभिः ॥ ३० ॥
उपहितं शिशिरापगमश्रिया
मुकुलजालमशोभत किंशुके ।
प्रणयिनीव नखक्षतमण्डनं
प्रमदया मदयापितलज्जया ॥ ३१ ॥
व्रणगुरुप्रमदाधरदुःसहं
जघननिर्विषयीकृतमेखलम् ।
न खलु तावदशेषमपोहितुं
रविरलं विरलं कृतवान् हिमम् ॥ ३२ ॥

करणैः वकुलं वकुलवृक्षम् आकुलम् अकरोत् ॥ ३० ॥

उपहितमिति । शिशिरापगमश्रिया वसन्तलक्ष्म्या किंशुके पलाशवृक्षे । "पलाशः किंशुकः" इत्यमरः । उपहितं दत्तं मुकुलजालं कुड्मलसंहतिः, मदेन यापितलज्जया अपसारितलपया प्रमदया प्रणयिनि प्रियतमे उपहितं नखक्षतम् एव मण्डनं तत् इव अशोभत ॥ ३१ ॥

व्रणेति । व्रणैः दन्तक्षतैः गुरुभिः दुर्वहैः प्रमदानाम् अधरैः अधरोष्ठैः दुःसहं हिमस्य व्यथाकरत्वात् असह्यं जघनेषु निर्विषयीकृता निरवकाशीकृता मेखला येन तत् शैत्यात् त्याजितमेखलम् इत्यर्थः एवंभूतं हिमं रविः तावत् आ वसन्तात् अशेषं निःशेषं यथा तथा अपोहितुं निरसितुं न अलं खलु न शक्तो हि, किन्तु विरलं कृतवान् तनूचकार ॥ ३२ ॥

अभिनयान् परिचेतुमिवोद्यता
मलयमारुतकम्पितपल्लवा।
अमदयत् सहकारलता मनः
सकलिका कलिकामजितामपि ॥ ३३ ॥

प्रथममन्यभृताभिरुदीरिताः
प्रविरला इव मुग्धवधूकथाः।
सुरभिगन्धिषु शुश्रुविरे गिरः
कुसुमितासु मिता वनराजिषु ॥ ३४ ॥

अभिनयानिति। अत्र चूतलताया नर्त्तकीसमाधिरभिधीयते। अभिनयान् अर्थव्यञ्जकान् व्यापारान्। "व्यञ्जकाभिनयौ समौ" इत्यमरः। परिचेतुम् अभ्यसितुम् उद्यता इव स्थिता, कुतः? मलयमारुतेन कम्पितपल्लवा, पल्लवशब्देन हस्तो गम्यते, सकलिका सकोरका। "कलिका कोरकः पुमान्" इत्यमरः। सहकारलता कलिः कलहः द्वेषः उच्यते। "कलिः स्यात् कलहे शूरे कलिरन्त्ययुगे युधि" इति विश्वः। कामः रागः तज्जिताम् अपि जितरागद्वेषाणामपि इत्यर्थः मनः अमदयत् ॥ ३३ ॥

प्रथममिति। सुरभिः गन्धः यासां तासु सुरभिगन्धिषु। गन्धस्येतीकारः। कुसुमानि आसां सञ्जातानि कुसुमिताः तासु वनराजिषु वनपङ्क्तिषु अन्यभृताभिः कोकिलाभिः प्रथमं प्रारम्भेषु उदीरिताः उक्ताः अत एव मिताः परिमिता गिरः आलापाः, प्रविरलाः मौग्ध्यात् स्तोकोक्ताः मुग्धवधूनां कथाः वाचः इव, शुश्रुविरे श्रुताः ॥ ३४ ॥

श्रुतिसुखभ्रमरस्वनगीतयः
कुसुमकोमलदन्तरुचो बभुः ।
उपवनान्तलताः पवनाहतैः
किसलयैः सलयैरिव पाणिभिः ॥ ३५ ॥

ललितविभ्रमबन्धविचक्षणं
सुरभिगन्धपराजितकेसरम् ।
पतिषु निर्विविशुर्मधुमङ्गनाः
स्मरसखं रसखण्डनवर्ज्जितम् ॥ ३६ ॥

श्रुतीति । श्रुतिसुखाः कर्णमधुराः भ्रमरस्वना एव गीतयः यासां ताः कुसुमानि एव कोमलाः दन्तरुचः दन्तकान्तयः यासां ताः, अनेन स्मितत्वं विवक्षितम्. उपवनान्तलताः पवनेन आहतैः कम्पितैः किसलयैः सलयैः साभिनयैः । लयशब्देन लयानुगतोऽभिनयो लक्ष्यते उपवनान्ते पवनाहतैरिति सक्रियत्वाभिधानात् । पाणिभिः इव बभुः । अनेन लतानां नर्त्तकीसाम्यं गम्यते ॥ ३५ ॥

ललितेति । अङ्गनाः ललितविभ्रमबन्धविचक्षणं मधुरविलासघटनापटुतरं सुरभिणा मनोहरेण गन्धेन पराजितकेसरं निर्ज्जितवकुलपुष्पम् । "अथ केसरे वकुलः" इत्यमरः । स्मरस्य सखायं स्मरसखं स्मरोद्दीपकम् इत्यर्थः । मधुं मद्यम् । अर्द्धर्चाः पुंसि चेति पुंलिङ्गता । उक्तञ्च, "मकरन्दस्य मद्यस्य माक्षिकस्यापि वाचकः । अर्द्धर्चादिगणे पाठात् पुंनपुंसकयोर्मधुः॥" इति । पतिषु विषये रसखण्डनवर्ज्जितम् अनुरागभङ्ग-

शुशुभिरे स्मितचारुतराननाः
स्त्रिय इव श्लथशिञ्जितमेखलाः ।
विकचतामरसा गृहदीर्घिका
मदकलोदकलोलविहङ्गमाः ॥ ३७ ॥

उपययौ तनुतां मधुखण्डिता
हिमकरोदयपाण्डुमुखच्छविः ।
सदृशमिष्टसमागमनिर्वृतिं
वनितयानितया रजनीवधूः ॥ ३८ ॥

रहितं यथा तथा निर्विविशुः, परस्परानुरागपूर्व्वकं पतिभिः सह पपुः इत्यर्थः ॥ ३६ ॥

शुशुभिर इति । विकचतामरसाः विकसितकमलाः मदेन कलाः अव्यक्तमधुरं ध्वनन्तः उदकलोलविहङ्गमाः जलप्रिय-पक्षिणः हंसादयः यासु ताः मदकलोदकलोलविहङ्गमाः गृहेषु दीर्घिकाः वाप्यः स्मितेन चारुतराणि आननानि यासां ताः श्लथाः शिञ्जिताः मुखराः मेखलाः यासां ताः । शिञ्जितेति कर्त्तरि क्तः । स्त्रियः इव, शुशुभिरे ॥ ३७ ॥

उपययाविति । मधुना मधुसमयेन खण्डिता ह्रासं गमिता । क्षीयन्ते खलूत्तरायणे रात्रयः । खण्डिताख्या च नायिका ध्वन्यते । हिमकरोदयेन चन्द्रोदयेन पाण्डुः मुखस्य प्रदोषस्य वक्त्रस्य च छविः यस्याः सा रजनी एव वधूः इष्टसमागमनिर्वृतिं प्रियसङ्गमसुखम् अनितया अप्राप्तया । इण् गतौ इति धातोः कर्त्तरि क्तः । वनितया सदृशं तुल्यं तनुतां न्यूनतां कार्श्यं च उपययौ ॥ ३८ ॥

अपतुषारतया विषदप्रभैः
सुरतसङ्गपरिश्रमनोदिभिः ।
कुसुमचापमतेजयदंशुभिः
हिमकरो मकरोर्जितकेतनम् ॥ ३९ ॥

हुतहुताशनदीप्ति वनश्रियः
प्रतिनिधिः कनकाभरणस्य यत् ।
युवतयः कुसुमं दधुराहितं
तदलके दलकेसरपेशलम् ॥ ४० ॥

अलिभिरञ्जनविन्दुमनोहरैः
कुसुमपङ्क्तिनिपातिभिरङ्कितः ।

अपेति । हिमकरः चन्द्रः अपतुषारतया अपगतनीहारतया विषदप्रभैः निर्मलकान्तिभिः सुरतसङ्गपरिश्रमनोदिभिः सुरतसङ्गखेदहारिभिः अंशुभिः किरणैः मकरोर्जितकेतनं मकरेण ऊर्जितं केतनं ध्वजः यस्य तं लब्धावकाशत्वादुच्छ्रितध्वजम् इत्यर्थः। कुसुमचापं कामम् अतेजयत्। तिजनिशाने इति धातोर्ण्यन्ताल्लङ्। सहकारिलाभात् कामोऽपि तीक्ष्णोऽभूत् इत्यर्थः ॥ ३९ ॥

हुतेति । हुतहुताशनदीप्ति आज्यादिप्रज्वलिताग्निप्रभं यत् कुसुमं कर्णिकारम् इत्यर्थः। वनश्रियः उपवनलक्ष्म्याः कनकाभरणस्य प्रतिनिधिः अभूत् इति शेषः। दलेषु केसरेषु च पेशलं सुकुमारपत्रकिञ्जल्कम् इत्यर्थः। आहितं प्रिये इति शेषः। तत् कुसुमं युवतयः अलके कुन्तले दधुः ॥ ४० ॥

अलिभिरिति। अञ्जनविन्दुमनोहरैः कज्जलकणसुन्दरैः

न खलु शोभयति स्म वनस्थलीं
न तिलकस्तिलकः प्रमदामिव ॥ ४१ ॥
अमदयन्मधुगन्धसनाथया
किसलयाधरसङ्गतया मनः ।
कुसुमसम्भृतया नवमल्लिका
स्मितरुचा तरुचारुविलासिनी ॥ ४२ ॥
अरुणरागनिषेधिभिरंशुकैः
श्रवणलब्धपदैश्च यवाङ्कुरैः ।

कुसुमपङ्क्तिषु निपतन्ति ये तैः अलिभिः अङ्कितः चिह्नितः तिलकः श्रीमान् नाम वृक्षः । "तिलकः क्षुरकः श्रीमान्" इत्यमरः । वनस्थलीं तिलकः विशेषकः । "तमालपत्रतिलकचित्रकाणि विशेषकम् । द्वितीयञ्च तुरीयञ्च न स्त्रियाम्" इत्यमरः । प्रमदामिव न शोभयति स्म इति न खलु अपि त्वशोभयदेवेत्यर्थः । लट् स्मे इति स्मशब्दयोगात् भूतार्थे लट् ॥ ४१ ॥

अमदयदिति । तरुचारुविलासिनी तरोः पुंसश्च चारुविलासिनी नवमल्लिका सप्तलाख्या लता । "सप्तला नवमल्लिका" इत्यमरः । मधुनः मकरन्दस्य मद्यस्य च गन्धेन सनाथया गन्धप्रधानया इत्यर्थः । किसलयम् एव अधरः तत्र सङ्गतया प्रसृतरागया इत्यर्थः । कुसुमैः सम्भृतया सम्पादितया कुसुमरूपया इत्यर्थः । स्मितरुचा हासकान्त्या मनः पश्यताम् इति शेषः अमदयत् ॥ ४२ ॥

अरुणेति । विलासिनः विलसनशीलाः पुरुषाः । वौ कप-

परभृताविरुतैश्च विलासिनः
स्मरबलैरबलैकरसाः कृताः॥ ४३॥

उपचितावयवा शुचिभिः कणै-
रलिकदम्बकयोगमुपेयुषी।
सदृशकान्तिरलक्ष्यत मञ्जरी
तिलकजालकजालकमौक्तिकैः॥ ४४॥

ध्वजपटं मदनस्य धनुर्भृतः
छविकरं मुखचूर्णमृतुश्रियः।

लसेत्यादिना विनुण्प्रत्ययः। अरुणस्य अनूरोः रागम् आरक्ष्य निषेधन्ति तिरस्कुर्व्वन्ति इति अरुणरागनिषेधिनः तैः कुसुम्भादिरञ्जनात् तत्सदृशैः इत्यर्थः। "तमन्वेत्यनुबध्नाति तच्छीलन्तन्निषेधति। तस्येवानुकरोतीति शब्दाः साट्टश्यवाचकाः॥" इति दण्डी। अंशुकैः अम्बरैः श्रवणेषु कर्णेषु लब्धपदैः निवेशितैः इत्यर्थः। यवाङ्कुरैश्च परभृताविरुतैः कोकिलाकूजितैश्च इत्येतैः स्मरबलैः कामसैन्यैः अबलासु एकः एव रसः रागः येषां ते अबलैकरसाः स्त्रीपरतन्त्राः कृताः॥ ४३॥

उपचितेति। शुचिभिः शुभ्रैः कणैः रजोभिः उपचितावयवा पुष्टावयवा अलिकदम्बकयोगम् उपेयुषी प्राप्ता तिलकजा तिलकवृक्षोत्था मञ्जरी अलकेषु यत् जालकम् आभरणविशेषः तस्मिन् मौक्तिकैः सदृशकान्तिः अलक्ष्यत। भृङ्गसङ्गिनी शुभ्रा तिलकमञ्जरी नीलालकसक्तमुक्ताजालम् इव अलक्ष्यत इति वाक्यार्थः॥ ४४॥

ध्वजेति। अलिव्रजाः षट्पदनिवहाः धनुर्भृतः धानुष्कस्य

कुसुमकेशररेणुमलिव्रजाः
सपवनोपवनोत्थितमन्वयुः ॥ ४५ ॥

अनुभवन् नवदोलमृतूत्सवं
पटुरपि प्रियकण्ठजिघृक्षया ।
अनयदासनरज्जुपरिग्रहे
भुजलतां जडतामबलाजनः ॥ ४६ ॥

त्यजत मानमलं बत विग्रहैः
न पुनरेति गतं चतुरं वयः ।

मदनस्य कामस्य ध्वजपटं पताका तम् ऋतुश्रियः वसन्तलक्ष्म्याः छविकरं शोभाकरं मुखचूर्णं मुखालङ्कारचूर्णभूतं सपवनोपवनोत्थितं सपवनं पवनेन सहितं यत् उपवनं तस्मिन् उत्थितं कुसुमानां केशरेषु किञ्जल्केषु यः रेणुः तम् अन्वयुः अन्वगच्छन् । यातेर्लङ् ॥ ४५ ॥

अनुभवन्निति । नवा दोला प्रेङ्खा यस्मिन् तं नवदोलम् ऋतूत्सवम् अनुभवन् अबलाजनः पटुः अपि निपुणः अपि प्रियकण्ठस्य जिघृक्षया ग्रहीतुम् आलिङ्गितुम् इच्छया आसनरज्जुपरिग्रहे पीठरज्जुग्रहणे भुजलतां बाहुलतां जडतां शैथिल्यं, डलयोरभेदः, अनयत् दोलाक्रीड़ासु पतनभयनाटितकेन प्रियकण्ठमाश्लिष्यत् इत्यर्थः ॥ ४६ ॥

त्यजतेति । बतेति आमन्त्रणे । "खेदानुकम्पासन्तोषविस्मयामन्त्रणे बत" इत्यमरः । बत अङ्गना मानं कोपं त्यजत । तदुक्तम्, "स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये" इति ।

परभृताभिरितीव निवेदिते
स्मरमते रमते स्म वधूजनः ॥ ४७ ॥
अथ यथासुखमार्त्तवमुत्सवं
समनुभूय विलासवतीसखः ।
नरपतिश्चकमे मृगयारतिं
स मधुमन्मधुमन्मथसन्निभः ॥ ४८ ॥
परिचयं चललक्ष्यनिपातने
भयरुषोश्च तदिङ्गितबोधनम् ।

विग्रहैः विरोधैः अलं विग्रहो न कार्य्यः इत्यर्थः, गतम् अतीतं चतुरम् उपभोगक्षमं वयः यौवनं पुनः न ऐति न आगच्छति, इत्येवंरूपे स्मरमते स्मराभिप्राये। नपुंसके भावे क्तः। परभृताभिः कोकिलाभिः निवेदिते सति वधूजनः रमते स्म रेमे, कोकिलाकूजितोद्दीपितस्मरः स्त्रीजनः कामशासनभयादिवोच्छृङ्खलमखेलत् इत्यर्थः ॥ ४७ ॥

अथेति। अथ अनन्तरं मधुं मथ्नातीति मधुमत् विष्णुः। सम्पदादित्वात् क्विप्। मधुः वसन्तः मथातीति मथः। पचाद्यच्। मनसः मथः मन्मथः तेषां सन्निभः सदृशः मधुमन्मधुमन्मथसन्निभः सः नरपतिः दशरथः विलासवतीसखः स्त्रीसहचरः सन् ऋतुः प्राप्तोऽस्य आर्त्तवः तम् उत्सवं वसन्तोत्सवं यथासुखं समनुभूय मृगयारतिं मृगयाविहारं चकमे आचकाङ्क्ष ॥ ४८ ॥

व्यसनासङ्गदोषं परिहरन्नाह, परिचयमिति। असौ मृगया चललक्ष्याणि मृगगवयादीनि तेषां निपातने परिचयम् अभ्यासं करोति, भयरुषोः भयक्रोधयोः तदिङ्गितबोधनं तेषां चल-

श्रमजयात् प्रगुणाञ्च करोत्यसौ
तनुमतोऽनुमतः सचिवैर्ययौ ॥ ४९ ॥
मृगवनोपगमक्षमवेषभृत्
विपुलकण्ठनिषक्तशरासनः ।
गगनमश्वखुरोद्धतरेणुभिः
नृसविता स वितानमिवाकरोत् ॥ ५० ॥
ग्रथितमौलिरसौ वनमालया
तरुपलाशसवर्णतनुच्छदः ।

लक्ष्याणाम् इङ्गितस्य चेष्टितस्य भयादिलिङ्गभूतस्य बोधनं ज्ञानं च करोति, तनुं शरीरं श्रमस्य जयात् निरासात् प्रगुणां प्रकृष्ट-लाघवादिगुणवतीं च करोति । अतः हेतोः सचिवैः अनुमतः अनुमोदितः सन् ययौ । सर्व्वञ्चैतद् युद्धोपयोगीत्यतः तदपेक्षया मृगयाप्रवृत्तिर्न तु व्यसनितया इति भावः ॥ ४९ ॥

मृगेति । मृगाणां वनं तस्य उपगमः प्राप्तिः तस्य क्षमम् अर्हं वेषं बिभर्त्तीति सः तथोक्तः मृगयाविहारार्हवेषधारी इत्यर्थः । विपुलकण्ठे निषक्तशरासनः लग्नधन्वा, ना सविता इव नृसविता पुरुषश्रेष्ठः । उपमितसमासः । सः राजा अश्वखुरोद्धत-रेणुभिः गगनं वितानं तुच्छम् असत् इव अकरोत् गगनं नाल-क्ष्यत इत्यर्थः । "वितानं तुच्छमन्दयोः" इति विश्वः । अथवा सवितानम् इत्येकं पदं, सवितानम् उल्लोचसहितम् इव अकरोत् । "अस्त्री वितानमुल्लोचः" इत्यमरः ॥ ५० ॥

ग्रथितेति । वनमालया वनपुष्पस्रजा ग्रथितमौलिः बद्ध-

तुरगवल्गनचञ्चलकुण्डलो
विरुरुचे रुरुचेष्टितभूमिषु ॥ ५१ ॥
तनुलताविनिवेशितविग्रहाः
भ्रमरसंक्रमितेक्षणवृत्तयः।
ददृशुरध्वनि तं वनदेवताः
सुनयनं नयनन्दितकोशलम् ॥ ५२ ॥
श्वगणिवागुरिकैः प्रथमास्थितं
व्यपगतानलदस्यु विवेश सः।

धम्मिलः तरूणां पलाशैः पत्रैः सवर्णः समानः तनुच्छदः वर्म्म यस्य सः तथोक्तः इदं वर्म्मणः पलाशसावर्ण्याभिधानं मृगादीनां विश्वासार्थम्। तुरगस्य वल्गनेन गतिविशेषेण चञ्चलकुण्डलः असौ दशरथः रुरुभिः मृगविशेषैः चेष्टिताः चरिताः याः भूमयः तासु विरुरुचे विदिद्युते ॥ ५१ ॥

तन्विति। तनुषु लतासु विनिवेशितविग्रहाः संक्रमितदेहाः भ्रमरेषु संक्रमिताः ईक्षणवृत्तयः दृग्व्यापाराः यासां ताः वनदेवताः सुनयनं सुलोचनं नयेन नीत्या नन्दिताः तोषिताः कोशलाः येन तं दशरथम् अध्वनि ददृशुः। प्रसन्नपावनतया तं देवता अपि गूढहत्या ददृशुः इत्यर्थः ॥ ५२ ॥

श्वगणीति। सः दशरथः शुनां गणः सः एषामस्तीति श्वगणिनः श्वग्राहिणः तैः वागुरा मृगबन्धनरज्जुः। "वागुरा मृगबन्धनि" इत्यमरः। तया चरन्तीति वागुरिकाः जालिकाः। चरतीति ठक्प्रत्ययः। "द्वौ वागुरिकजालिकौ" इत्यमरः। तैश्च प्रथमम् आस्थितम् अधिष्ठितं व्यपगताः अनलाः दावाग्नयः

स्थिरतुरङ्गमभूमि निपानवत्
मृगवयोगवयोपचितं वनम् ॥ ५३ ॥
अथ नभस्य इव त्रिदशायुधं
कनकपिङ्गतडिद्गुणसंयुतम् ।
धनुरधिज्यमनाधिरुपाददे
नरवरो रवरोषितकेशरी ॥ ५४ ॥
तस्य स्तनप्रणयिभिर्मुहुरेणशावै-
र्व्याहन्यमानहरिणीगमनं पुरस्तात् ।

दस्यवः तस्कराश्च यस्मात् तथोक्तम् । "दस्युतस्करमोषकाः" इत्यमरः । "कारयेद् वनविशोधनमादौ मातुरन्तिकमपि प्रविविक्षुः । आप्तशस्त्ररनुगतः प्रविशेद् वा सङ्कटे च गहने न च तिष्ठेत् ॥" इति कामन्दकः । स्थिरा दृढ़ा पङ्कादिरहिता तुरङ्गमयोग्या भूमिः यस्य तत्, निपानवत् आहावयुक्तम् । "आहावस्तु निपानं स्यात् उपकूपजलाशये" इत्यमरः । मृगैः हरिणादिभिः वयोभिः पक्षिभिः गवयैः गोसदृशैः अरण्यपशुविशेषैश्च उपचितं समृद्धं वनं विवेश प्रविष्टवान् ॥ ५३ ॥

अथेति । अथ अनाधिः मनोव्यथारहितः नरवरः नरश्रेष्ठः रवेण धनुष्टङ्कारेण रोषिताः केशरिणः सिंहाः येन सः राजा कनकम् इव पिङ्गः पिशङ्गः यः तड़िदेव गुणः मौर्वी तेन संयुतं त्रिदशायुधम् इन्द्रचापं नभस्यः भाद्रपदमासः इव । "स्युर्नभस्यप्रौष्ठपदभाद्रभाद्रपदाः समाः" इत्यमरः । अधिज्यम् अधिगतमौर्वीकं धनुः उपाददे जग्राह ॥ ५४ ॥

तस्येति । स्तनप्रणयिभिः स्तनपायिभिः एणशावैः हरिण-

आविर्बभूव कुशगर्भमुखं मृगाणां
यूथं तदग्रसरगर्वितकृष्णसारम् ॥ ५५ ॥
तत् प्रार्थितं जवनवाजिगतेन राज्ञा
तूणीमुखोद्धृतशरेण विशीर्णपङ्क्ति ।
श्यामीचकार वनमाकुलदृष्टिपातै-
र्वातेरितोत्पलदलप्रकरैरिवार्द्रैः ॥ ५६ ॥

शिशुभिः । "पृथुकः शावकः शिशुः" इत्यमरः । मुहुः व्याहन्यमानं तद्वत्सलतया तद्गमनानुसारेण मुहुर्मुहुः प्रतिषिध्यमानं हरिणीनां गमनं गतिः यस्य तत्, कुशाः गर्भे येषां तानि मुखानि यस्य तत् कुशगर्भमुखं तस्य यूथस्य अग्रेसरः पुरःसरः गर्वितः दृप्तश्च कृष्णसारः यस्य तत् मृगाणां यूथम् कुलम् । "सजातीयैः कुलं यूथं तिरश्चां पुन्नपुंसकम्" इत्यमरः । तस्य दशरथस्य पुरस्तात् अग्रे आविर्बभूव । वसन्ततिलकं वृत्तम् ॥ ५५ ॥

तदिति । जवनः जवशीलः । जुचङ्क्रम्येत्यादिना युच् प्रत्ययः । "तरस्वी त्वरितो वेगी प्रजवी जवनो जवः" इत्यमरः । तं वाजिनम् अश्वं गतेन आरूढेन तूणी इषुधिः । बह्वादिभ्यश्चेति स्त्रियां ङीप् । तस्याः मुखात् विवरात् उद्धृतशरेण राज्ञा प्रार्थितम् अभियातम् । "याच्ञायामभियाने च प्रार्थना कथ्यते बुधैः" इति केशवः । अत एव विशीर्णा पङ्क्तिः सङ्घीभावः यस्य तत् मृगयूथं कर्तृ आर्द्रैः भयात् अश्रुसिक्तैः आकुला भयचकिता ये दृष्टिपाताः तैः वातेरितोत्पलदलप्रकरैः पवनकम्पितेन्दीवरदलवृन्दैः इव वनं श्यामीचकार ॥ ५६ ॥

लक्ष्यीकृतस्य हरिणस्य हरिप्रभावः
प्रेक्ष्य स्थितां सहचरीं व्यवधाय देहम् ।
आकर्णकृष्टमपि कामितया स धन्वी
बाणं कृपामृदुमनाः प्रतिसञ्जहार ॥ ५७ ॥

तस्यापरेष्वपि मृगेषु शरान् मुमुक्षोः
कर्णान्तमेत्य बिभिदे निविडोऽपि मुष्टिः ।
त्रासातिमात्रचटुलैः स्मरतः सुनेत्रैः
प्रौढप्रियानयनविभ्रमचेष्टितानि ॥ ५८ ॥

लक्ष्यीकृतेति । हरिः इन्द्रः विष्णुः वा तस्य इव प्रभावः सामर्थ्यं यस्य सः तथोक्तः धन्वी धनुष्मान् सः नृपः । लक्ष्यीकृतस्य वेद्धुमिष्टस्य हरिणस्य स्वप्रेयसः देहं व्यवधाय अनुरागात् अन्तर्धाय स्थितां सह चरतीति सहचरी । पचादिषु चरतेः टित् करणात् ङीप् । यथाह वामनः,"अनुचरीति चरेष्टित्वात्" इति । तां सहचरीं हरिणीं प्रेक्ष्य कामितया स्वयं कामुकत्वात् कृपामृदुमनाः करुणार्द्रचित्तः सन् आकर्णकृष्टम् अपि दुष्प्रतिसंहरमपि इत्यर्थः । बाणं प्रतिसंजहार नैपुण्यात् इत्यर्थः । नैपुण्यं तु धन्वीत्यनेन गम्यते ॥ ७५ ॥

तस्येति । त्रासात् भयात् अतिमात्रचटुलैः अत्यन्तचञ्चलैः सुनेत्रैः प्रौढप्रियानयनविभ्रमचेष्टितानि प्रगल्भकान्ताविलोचनविलासव्यापारान् सादृश्यात् स्मरतः अपरेषु अपि मृगेषु शरान् मुमुक्षोः मोक्तुमिच्छोः तस्य नृपस्य निविडः दृढः अपि मुष्टिः कर्णान्तम् एत्य विभिदे स्वयमेव भिद्यते स्म । भिदेः कर्म-

उत्तस्थुषः सपदि पल्वलपङ्कमध्यात्
मुस्ताप्ररोहकवलावयवानुकीर्णम् ।
जग्राह स द्रुतवराहकुलस्य मार्गं
सुव्यक्तमार्द्रपदपङ्क्तिभिरायताभिः ॥ ५९ ॥

तं वाहनादवनतोत्तरकायमीषत्
विध्यन्तमुद्धृतसटाः प्रतिहन्तुमीषुः ।
नात्मानमस्य विविदुः सहसा वराहाः
वृक्षेषु विद्धमिषुभिर्जघनाश्रयेषु ॥ ६० ॥

कर्त्तरि लिट् । कामिनस्तस्य प्रियाविभ्रमस्मृतिजनितक्षपातिरेकात् मुष्टिभेदो न त्वनैपुण्यादिति तात्पर्य्यार्थः ॥ ५८ ॥

उत्तस्थुष इति । सः नृपः मुस्ताप्ररोहाणां मुस्ताङ्कुराणां कवलाः ग्रासाः तेषाम् अवयवैः असविह्वतमुखभ्रंशिभिः शकलैः अनुकीर्णं व्याप्तम् आयताभिः दीर्घाभिः आर्द्रपदपङ्क्तिभिः सुव्यक्तं सपदि पल्वलपङ्कमध्यात् उत्तस्थुषः उत्थितस्य द्रुतवराहकुलस्य पलायितवराहयूथस्य मार्गं जग्राह अनुससार ॥ ५९ ॥

तमिति । वराहाः वाहनात् अश्वात् ईषत् अवनतोत्तरकायं किञ्चित् आनतपूर्व्वकायं विध्यन्तं प्रहरन्तं तं नृपम् उद्धृतसटाः ऊर्द्धकेसराः सन्तः । "सटा जटाकेशरयोः" इति केशवः । प्रतिहन्तुम् ईषुः प्रतिहर्त्तुम् ऐच्छन् अस्य इषुभिः सहसा जघनानाम् आश्रयेषु अवष्टम्भेषु विद्धम् आत्मानं न विविदुः । एतेन वराहाणां मनस्वित्वं नृपस्य हस्तलाघवं चोक्तम् ॥ ६० ॥

तेनाभिघातरभसस्य विकृष्य पत्त्री
वन्यस्य नेत्रविवरे महिषस्य मुक्तः ।
निर्भिद्य विग्रहमशोणितलिप्तपुङ्खः
तं पातयाम्प्रथममास पपात पश्चात् ॥ ६१ ॥
प्रायो विषाणपरिमोक्षलघूत्तमाङ्गान्
खङ्गांश्चकार नृपतिर्निशितैः क्षुरप्रैः ।

तेनेति । अभिघाते रभसः औत्सुक्यं यस्य तस्य अभिहन्तुमुद्यतस्य इत्यर्थः, वन्यस्य वने भवस्य महिषस्य नेत्रविवरे नेत्रमध्ये तेन नृपेण विकृष्य मुक्तः पत्त्री शरः विग्रहं महिषदेहं निर्भिद्य विदार्य्य शोणितलिप्तो न भवतीति अशोणितलिप्तः पुङ्खः यस्य सः तथोक्तः सन् तं महिषं प्रथमं पातयामास स्वयं पश्चात् पपात । कृञ्चानुप्रयुज्यते लिटीत्यत्र अनुशब्दस्य व्यवहितविपर्य्यस्तप्रयोगनिवृत्त्यर्थत्वात् 'पातयां प्रथममास' इत्यपप्रयोग इति पाणिनीयाः । यथाह वार्त्तिककारः—"विपर्य्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थञ्च" इति ॥ ६१ ॥

प्राय इति । नृपतिः निशितः क्षुरप्रैः शरविशेषैः खङ्गान् खङ्गाख्यान् मृगान् । "गण्डके खङ्गखङ्गिनौ" इत्यमरः । प्रायः बाहुल्येन विषाणपरिमोक्षेण शृङ्गभङ्गेन लघूनि अगुरूणि उत्तमाङ्गानि शिरांसि येषां तान् चकार नत्ववधीत् इत्यर्थः । कुतः ? दृप्तविनयाधिकृतः दुष्टनिग्रहनियुक्तः सः राजा परेषां प्रतिकूलानाम् अत्युच्छ्रितं शृङ्गं विषाणं प्राधान्यं च । "शृङ्गं प्राधान्यसान्वोश्च" इत्यमरः । न मम्रृषे न सेहे, दीर्घम् आयुः

शृङ्गं स दृप्तविनयाधिकृतः परेषाम्
अत्युच्छ्रितं न ममृषे न तु दीर्घमायुः ॥६२॥
व्याघ्रानभीरभिमुखोत्पतितान् गुहाभ्यः
फुल्लासनाग्रविटपानिव वायुरुग्णान् ।
शिक्षाविशेषलघुहस्ततया निमेषात्
तूणीचकार शरपूरितवक्त्ररन्ध्रान् ॥ ६३ ॥
निर्घातोग्रैः कुञ्जलीनान् जिघांसु-
र्ज्यानिर्घोषैः क्षोभयामास सिंहान् ।

जीवितकालम् । "आयुर्जीवितकालो ना" इत्यमरः । न ममृषे इति न, किन्तु ममृषे एव इत्यर्थः ॥ ६२ ॥

व्याघ्रानिति । अभीः निर्भीकः सः धन्वी गुहाभ्यः अभिमुखम् उत्पतितान् वायुना रुग्णान् भग्नान् फुल्लाः विकसिताः । अनुपसर्गात् फुल्लक्षीवकृशोल्लाघा इति निष्ठातकारस्य लत्वनिपातः । ये असनस्य सर्ज्जवृक्षस्य । "सर्ज्जकासनबन्धूकपुष्पप्रियकजीवकाः" इत्यमरः । अग्रविटपाः तान् इव स्थितान्, व्याघ्राणां चित्ररूपत्वात् उपमाने फुल्लविशेषणम् । शरैः पूरितानि वक्त्ररन्ध्राणि येषां तान् व्याघ्रान् शिक्षाविशेषेण अभ्यासातिशयेन लघुहस्ततया क्षिप्रहस्ततया निमेषात् तूणीचकार तूणं शरैः पूरितवान् इत्यर्थः ॥ ६३ ॥

निर्घातेति । कुञ्जेषु लीनान् । "निकुञ्जकुञ्जौ वा क्लीवे लतादिपिहितोदरे" इत्यमरः । सिंहान् जिघांसुः हन्तुमिच्छुः निर्घातः व्योमोत्थितः औत्पातिकः शब्दविशेषः तद्वत् उग्रैः

नूनं तेषामभ्यसूयापरोऽभूत्
वीर्य्योदग्रे राजशब्दे मृगेषु ॥ ६४ ॥

तान् हत्वा गजकुलबद्धतीव्रवैरान्
काकुत्स्थः कुटिलनखाग्रलग्नमुक्तान् ।
आत्मानं रणकृतकर्म्मणां गजाना-
मानृण्यं गतमिव मार्गणैरमंस्त ॥ ६५ ॥

चमरान् परितः प्रवर्त्तिताश्वः
क्वचिदाकर्णविकृष्टभल्लवर्षी ।

रौद्रैः ज्यानिर्घोषैः मौर्व्वीशब्दैः क्षोभयामास । अत्रोत्प्रेक्षते, तेषां सिंहानां सम्बन्धिनि वीर्य्येण उदग्रे उन्नते मृगेषु विषये यः राजशब्दः तस्मिन् अभ्यसूयापरः अभूत् नूनम्, अन्यथा कथमेतानन्विष्य हन्यात् इत्यर्थः । मृगाणामिति पाठे समासे गुणभूतत्वाद् राजशब्देन सम्बन्धो दुर्घटः । शालिनी वृत्तम् । "शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः" इति लक्षणात् ॥६४॥

तानिति । काकुत्स्थः दशरथः गजकुलेषु बद्धं तीव्रं वैरं यैः तान्, कुटिलेषु नखाग्रेषु लग्नाः मुक्ताः गजकुम्भमौक्तिकानि येषां तान्, तान् सिंहान् हत्वा आत्मानं रणेषु कृतकर्म्मणां कृतोपकाराणां गजानाम् आनृण्यम् अनृणत्वं मार्गणैः शरैः । "मार्गणो याचके शरे" इति विश्वः । गतं प्राप्तवन्तम् इव अमंस्त मेने ॥ ६५ ॥

चमरानिति । क्वचित् चमरान् परितः । अभितः समये-त्यादिना द्वितीया । प्रवर्त्तिताश्वः प्रधाविताश्वः आकर्णविकृष्ट-

नृपतीनिव तान् वियोज्य सद्यः
सितवालव्यजनैर्जगाम शान्तिम्॥ ६६॥

अपि तुरगसमीपादुत्पतन्तं मयूरं
न स रुचिरकलापं बाणलक्ष्यीचकार।
सपदि गतमनस्कश्चित्रमाल्यानुकीर्णे
रतिविगलितबन्धे केशपाशे प्रियायाः॥६७॥

तस्य कर्कशविहारसम्भवं
स्वेदमाननविलग्नजालकम्।
आचचाम सतुषारशीकरः
भिन्नपल्लवपुटो वनानिलः॥ ६८॥

भल्लान् इषुविशेषान् वर्षतीति तथोक्तः सः नृपः, नृपतीन् इव, तान् चमरान् सितवालव्यजनैः शुभ्रचामरैः वियोज्य विरहय्य सद्यः शान्तिं जगाम। शूराणां परकीयमैश्वर्य्यमेवासह्यं न तु जीवितम् इति भावः। औपच्छन्दसिकं वृत्तम्॥ ६६॥

अपीति। सः नृपः तुरगसमीपात् उत्पतन्तम् अपि सुप्रहारमपि इत्यर्थः रुचिरकलापं भासुरवर्हं मह्यां रौतीति मयूरः वर्ही तम्। पृषोदरादित्वात् साधुः। चित्रेण माल्येन अनुकीर्णे रतौ विगलितबन्धे प्रियायाः केशपाशे सपदि गतमनस्कः प्रवृत्तचित्तः। उरःप्रभृतिभ्यः कप् इति कप्प्रत्ययः। न बाणलक्ष्यीचकार न प्रजहार इत्यर्थः॥ ६७॥

तस्येति। कर्कशविहारात् अतिव्यायामात् सम्भवः यस्य तम् आनने विलग्नजालकं बद्धकदम्बकं तस्य नृपस्य स्वेदं

इति विस्मृतान्यकरणीयमात्मनः
सचिवावलम्बितधुरं धराधिपम्।
परिवृद्धरागमनुबन्धसेवया
मृगया जहार चतुरेव कामिनी ॥ ६९ ॥

स ललितकुसुमप्रवालशय्यां
ज्वलितमहौषधिदीपिकासनाथाम्।
नरपतिरतिवाहयाम्बभूव
क्वचिदसमेतपरिच्छदस्त्रियामाम् ॥ ७० ॥

सतुषारशीकरः शिशिराम्बुकणसहितः भिन्नाः निर्दलिताः पल्लवानां पुटाः कोशाः येन सः वनानिलः आचचाम जहार इत्यर्थः। रथोद्धता वृत्तमेतत् ॥ ६८ ॥

इतीति। इति पूर्व्वोक्ताकारेण आत्मनः विस्मृतम् अन्यत् करणीयं कार्य्यं येन तं विस्मृतात्मकार्य्यान्तरम् इत्यर्थः सचिवैः अवलम्बिता धृता धूः यस्य तम्। ऋक्पूरब्धूः पथामानक्ष इति समासान्तः अच्प्रत्ययः। अनुबन्धसेवया सन्ततसेवया परिवृद्धः रागः यस्य तं धराधिपं, मृग्यन्ते यस्यां मृगाः इति मृगया। मृगयादीनामुपसंख्यानमिति शप्रत्ययान्तो निपातः। चतुरा विदग्धा कामिनी इव, जहार आचकर्ष। "न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते॥" इति भावः ॥ ६९ ॥

स इति। सः नरपतिः ललितानि कुसुमानि प्रवालानि पल्लवानि शय्या यस्यां तां ज्वलिताभिः महौषधिभिः एव दीपि-

उषसि स गजयूथकर्णतालैः
पटुपटहध्वनिभिर्विनीतनिद्रः ।
अरमत मधुराणि तत्र शृण्वन्
विहगविकूजितवन्दिमङ्गलानि ॥ ७१ ॥

अथ जातु रुरोर्गृहीतवर्त्मा
विपिने पार्श्वचरैरलक्ष्यमाणः ।
श्रमफेनमुचा तपस्विगाढां
तमसां प्राप नदीं तुरङ्गमेण ॥ ७२ ॥

कुम्भपूरणभवः पटुरुच्चै-
रुच्चचार निनदोऽम्भसि तस्याः ।

काभिः सनाथां तत्प्रधानाम् इत्यर्थः । नियामां रात्रिं क्वचित् असमेतपरिच्छदः परिहृतपरिजनः सन् इत्यर्थः अतिवाहयाम्बभूव गमयामास । पुष्पिताग्रा वृत्तम् ॥ ७० ॥

उषसीति । उषसि प्रातः पटूनां पटहानाम् इव ध्वनिः, येषां तैः गजयूथानां कर्णैः एव तालैः वाद्यप्रभेदैः विनीतनिद्रः सः नृपः तत्र वने मधुराणि विहगानां विकूजितानि एव वन्दिनां मङ्गलानि मङ्गलगीतानि शृण्वन् अरमत ॥ ७१ ॥

अथेति । अथ जातु कदाचित् रुरोः मृगस्य गृहीतवर्त्मा स्वीकृतरुरुमार्गः विपिने वने पार्श्वचरैः अलक्ष्यमाणः तुरगवेगात् इत्यर्थः श्रमेण फेनमुचा सफेनं स्विद्यता इत्यर्थः तुरङ्गमेण तपस्विभिः गाढां सेवितां तमसां नाम नदीं प्राप ॥७२॥

कुम्भेति । तस्याः तमसायाः अम्भसि कुम्भपूरणेन भवः

तत्र स द्विरदबृंहितशङ्की

शब्दपातिनमिषुं विससर्ज्ज ॥ ७३ ॥

नृपतेः प्रतिषिद्धमेव तत्

कृतवान् पङ्क्तिरथो विलङ्घ्य यत् ।

अपथे पदमर्पयन्ति हि

श्रुतवन्तोऽपि रजोनिमीलिताः ॥ ७४ ॥

हा तातेति क्रन्दितमाकर्ण्य विषण्ण-

स्तस्यान्विष्यन् वेतसगूढं प्रभवं सः ।

उत्पन्नः । पचाद्यच् । पटुः मधुरः उच्चैः गम्भीरः निनदः ध्वनिः उच्चचार उदियाय, तत्र निनदे सः नृपः द्विरदबृंहितं शङ्कत इति द्विरदबृंहितशङ्की सन् शब्देन शब्दानुसारेण पततीति शब्दपातिनम् इषुं विससर्ज्ज । स्वागता वृत्तम् ॥ ७३ ॥

नृपतेरिति । तत् कर्म्म नृपतेः क्षत्रियस्य प्रतिषिद्धम् एव यत् एतत् कर्म्म गजवधरूपं पङ्क्तिरथः दशरथः विलङ्घ्य, "लक्ष्मीकामो युद्धादन्यत्र करिवधं न कुर्य्यात्" इति शास्त्रम् उल्लङ्घ्य, कृतवान् । ननु विदुषस्तस्य कथमीदृग्विचेष्टितम् अत आह, अपथ इति । श्रुतवन्तः अपि विद्वांसः अपि रजोनिमीलिताः रजोगुणावृताः सन्तः न पन्था इति अपथम् । पथो विभाषेति समासान्तः । अपथं नपुंसकमिति नपुंसकत्वम् । "अपन्थास्त्वपथं तुल्यम्" इत्यमरः । तस्मिन् अपथे अमार्गे पदम् अर्पयन्ति निक्षिपन्ति हि, प्रवर्त्तन्ते इत्यर्थः । वैतालीयं वृत्तम् ॥ ७४ ॥

हा तातेति । हा इति आर्त्तौ । तातः जनकः । "हा

शल्यप्रोतं प्रेक्ष्य सकुम्भं मुनिपुत्त्रं
तापादन्तःशल्य इवासीत् क्षितिपोऽपि ॥७५॥
तेनावतीर्य्य तुरगात् प्रथितान्वयेन
पृष्टान्वयः स जलकुम्भनिषण्णदेहः ।
तस्मै द्विजेतरतपस्विसुतं स्खलद्भि-
रात्मानमक्षरपदैः कथयाम्बभूव ॥ ७६ ॥

विषादशुगर्त्तिषु" इति, "तातस्तु जनकः पिता" इति च अमरः । हा तातः इति क्रन्दितं क्रोशनम् आकर्ण्य विषण्णः भग्नोत्साहः सन् तस्य क्रन्दितस्य वेतसैः गूढं छन्नं प्रभवति अस्मात् इति प्रभवः कारणं तम् अन्विष्यन् शल्येन शरेण प्रोतं स्यूतम् । "शल्यं शङ्कौ शरवंशे" इति विश्वः । सकुम्भं मुनिपुत्रं प्रेक्ष्य क्षितिपः अपि तापात् दुःखात् अन्तः शल्यं यस्य सः अन्तःशल्यः इव आसीत् । मत्तमयूरं वृत्तम् ॥ ७५ ॥

तेनेति । प्रथितान्वयेन प्रख्यातवंशेन । एतेन पापभीरुत्वं सूचितम् । तेन राज्ञा तुरगात् अवतीर्य्य पृष्टान्वया ब्रह्महत्या-शङ्कया पृष्टकुलः जलकुम्भनिषण्णदेहः सः मुनिपुत्रः तस्मै राज्ञे स्खलद्भिः अशक्तिवशाद्दीर्घोच्चरितैः इत्यर्थः अक्षरपदैः आत्मानं द्विजेतरश्चासौ तपस्विसुतश्च तं द्विजेतरतपस्विसुतं कथया-म्बभूव । न तावत् त्रैवर्णिक एवाहमस्मि किन्तु करणः । "वैश्यात् तु करणः शूद्रायाम्" इति याज्ञवल्क्यः । कुतो ब्रह्महत्या इत्यर्थः । तथा च रामायणे, "ब्रह्महत्याकृतं पापं हृदया-दपनीयताम् । न द्विजातिरहं राजन् ! मा भूत् ते मनसो व्यथा । शूद्रायामस्मि वैश्येन जातो जनपदाधिप ! ॥" इति ॥ ७६ ॥

तच्चोदितश्च तमनुद्धृतशल्यमेव
पित्रोः सकाशमवसन्नदृशोर्निनाय।
ताभ्यां तथागतमुपेत्य तमेकपुत्रम्
अज्ञानतः स्वचरितं नृपतिः शशंस ॥७७॥

तौ दम्पती वहु विलप्य शिशोः प्रहर्त्रा
शल्यं निखातमुदहारयतामुरस्तः।
सोऽभूत् परासुरथ भूमिपतिं शशाप
हस्तार्पितैर्नयनवारिभिरेव वृद्धः ॥ ७८ ॥

तदिति। तच्चोदितः तेन पुत्रेण चोदितः पितृसमीपं प्रापय इत्युक्तः सः नृपतिः अनुद्धृतशल्यम् अनुत्पाटितशरम् एव तं मुनिपुत्रम् अवसन्नदृशोः नष्टदृशोः अन्धयोः इत्यर्थः। पित्रोः मातापित्रोः। पितामात्रेत्येकशेषः। सकाशं समीपं निनाय। इदञ्च रामायणविरुद्धम्। तत्र—"अथाहमेकस्तं देशं नीत्वा तौ भृशदुःखितौ। अस्पर्शयमहं पुत्रं तं मुनिं सह भार्य्यया॥" इति नदीतीर एव मृतं पुत्रं प्रति पित्रोरानयनाभिधानात्। तथागतं वेतसगूढ़म् एकश्चासौ पुत्रश्च एकपुत्रः तम्। एकग्रहणं पित्रोरनन्यगतिकत्वसूचनार्थम्। उपेत्य सन्निकृष्य अज्ञानतः करिभ्रान्त्या स्वचरितं स्वकृतं ताभ्यां मातापितृभ्याम्। क्रियाग्रहणाच्चतुर्थी। शशंस कथितवान् ॥ ७७ ॥

ताविति तौ जाया च पतिश्च दम्पती। राजदन्तादिषु जायाशब्दस्य दम्भावोजम्भावश्च विकल्पेन निपातितः। "दम्पती जम्पती जायापती भार्य्यापती च तौ" इत्यमरः। वहु विलप्य भूरि परिदेव्य। "विलापः परिदेवनम्" इत्यमरः। शिशोः

दिष्टान्तमाप्स्यति भवानपि पुत्रशोकात्
अन्त्ये वयस्यहमिवेति तमुक्तवन्तम् ।
आक्रान्तपूर्व्वमिव मुक्तविषं भुजङ्गं
प्रोवाच कोशलपतिः प्रथमापराद्धः ॥ ७९ ॥
शापोऽप्यदृष्टतनयाननपद्मशोभे
सानुग्रहो भगवता मयि पातितोऽयम् ।

उरस्तः वक्षसः । पञ्चम्यास्तसिल् । निखातं शल्यं शरं प्रहर्त्ता राज्ञा उद्‌धारयताम् उद्धारयामासतुः, सः शिशुः परासुः गतप्राणः अभूत्, अथ वृद्धः हस्तार्पितैः नयनवारिभिः एव शापदानस्य जलपूर्व्वकत्वात् तैः एव भूमिपतिं शशाप ॥ ७८ ॥

दिष्टेति । हे राजन् ! भवान् अपि अन्त्ये वयसि अहम् इव पुत्रशोकात् दिष्टान्तं कालावसानं मरणम् इत्यर्थः । "दिष्टः काले च दैवे स्यात्" इति विश्वः । अप्स्यति प्राप्स्यति इत्युक्तवन्तम् । आक्रान्तः पादाहतः पूर्व्वं आक्रान्तपूर्व्वः । सुप्सुपेति समासः । तं प्रथममपकृतम् इत्यर्थः । मुक्तविषम् अपकारात् पश्चादुत्सृष्टविषं भुजङ्गम् इव स्थितं तं वृद्धं प्रति प्रथमापराद्धः प्रथमापराधी । कर्त्तरि क्तः । इदञ्च सहने कारणमुक्तम् । कोशलपतिः दशरथः शापदानात् पश्चात् अपि एनं मुनिं प्रोवाच ॥ ७९ ॥

शाप इति । अदृष्टा तनयाननपद्मशोभा येन तस्मिन् अपुत्रके मयि भगवता पातितः । वज्रप्रायत्वात् पातित इत्युक्तम् । अयं पुत्रशोकात् म्रियस्व इत्येवंरूपः शापः अपि सानुग्रहः इक्षुकुमारीवरन्यायेनेष्टावाप्तिरूपत्वात् सोपकारः एव ।

कृष्यां दहन्नपि खलु क्षितिमिन्धनेद्धः
वीजप्ररोहजननीं ज्वलनः करोति ॥ ८० ॥

इत्यङ्गते गतघृणः किलयं विधत्तां
बध्यस्तवेत्यभिहितो वसुधाधिपेन ।
एधान् हुताशनवतः स मुनिर्ययाचे
पुत्रं परासुमनुगन्तुमनाः सदारः ॥ ८१ ॥

प्राप्तानुगः सपदि शासनमस्य राजा
सम्पाद्य पातकविलुप्तधृतिर्निवृत्तः ।

निग्रहस्याप्यनुग्राहकत्वम् अर्थान्तरन्यासेनाह, कृष्यामिति । इन्धनैः काष्ठैः इद्धः प्रज्वलितः ज्वलनः अग्निः कृष्यां कर्षणार्हां क्षितिं दहन् अपि वीजप्ररोहाणां वीजाङ्कुराणां जननीम् उत्पादनक्षमां करोति ॥ ८० ॥

इत्थमिति । इत्थं गते प्रवृत्ते सति वसुधाधिपेन राज्ञा, गतघृणः निष्करुणः हन्तृत्वान्निष्कृपः इत्यर्थः । अत एव तव बध्यः वधार्हः अयं जनः । अयमिति राज्ञो निर्वेदादनादरेण स्वात्म-निर्देशः । किं विधत्ताम् इति अभिहितः मया किं विधेयमिति विज्ञापितः इत्यर्थः सः मुनिः सदारः सभार्य्यः परासुं गतासुं पुत्रम् अनुगन्तुं मनः यस्य सः अनुगन्तुमनाः सन् । तुं काम-मनसोरपीति मकारलोपः । हुताशनवतः साग्नीन् एधान् काष्ठानि ययाचे । न चात्रात्मघातदोषः, "अनुष्ठानासमर्थस्य वानप्रस्थस्य जीर्य्यतः । भृग्वग्निजलसङ्घातैः मरणं प्रविधीयते ॥" इत्युक्तेः ॥ ८१ ॥

प्राप्तेति । प्राप्तानुगः प्राप्तानुचरः राजा सपदि अस्य मुनेः

अन्तर्निविष्टपदमात्मविनाशहेतुं
शापं दधज्ज्वलनमौर्व्वमिवाम्बुराशिः ॥ ८२ ॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ
मृगयावर्णनो नाम नवमः सर्गः ।

---

शासन काष्ठसम्भरणरूपं प्राक् एकोऽपि सम्प्रति प्राप्तानुचरत्वात् सम्पाद्य पातकेन मुनिवधरूपेण विलुप्तधृतिः नष्टोत्साहः सन् अन्तर्निविष्टपदम् अन्तर्लब्धस्थानम् आत्मविनाशहेतुं शापम् अम्बुराशिः और्व्वं ज्वलनं वड़वानलम् इव। "और्व्वस्तु वाड़वो वड़वानलः" इत्यमरः दधत् धृतवान् सन् निवृत्तः वनात् इति शेषः ॥ ८२ ॥

इति श्रीमहामहोपाध्याय-कोलाचलमल्लिनाथसूरिविरचितायां
रघुवंशटीकायां सञ्जीवनी-समाख्यायां नवमः सर्गः ।

---

## दशमः सर्गः ।

पृथिवीं शासतस्तस्य पाकशासनतेजसः ।
किञ्चिदूनमनूनर्द्धेः शरदामयुतं ययौ ॥ १ ॥
न चोपलेभे पूर्व्वेषामृणनिर्मोक्षसाधनम् ।
सुताभिधानं स ज्योतिः सद्यः शोकतमोपहम् ॥२॥

आशंसे नित्यमानन्दं रामनामकथामृतम् ।
सद्भिः स्वश्रवणैर्नित्यं पेयं पापं प्रणोदितुम् ॥

पृथिवीमिति । पृथिवीं शासतः पालयतः पाकशासनतेजसः इन्द्रवर्चसः अनूनर्द्धेः महासमृद्धेः तस्य दशरथस्य किञ्चिदूनम् ईषन्न्यूनं शरदां वत्सराणाम् । "स्यादृतौ वत्सरे शरत्" इत्यमरः । अयुतं दशसहस्रं ययौ । "एकदशशतसहस्राण्ययुतं लक्षं तथा प्रयुतम् । कोट्यर्व्बुदञ्च पद्मं स्थानात् स्थानं दशगुणं स्यात् ॥" इत्यार्य्यभट्टः । इदञ्च मुनिशापात् परं वेदितव्यं न तु जननात् । "षष्टिवर्षसहस्राणि जातस्य मम कौशिक !। दुःखेनोत्पादितश्चायं न रामं नेतुमर्हसि ।" इति रामायणविरोधात् । नाप्यभिषेकात् परं तस्यापि, "सम्यग्विनीतमथ वर्म्महरं कुमारमादिश्य रक्षणविधौ विधिवत् प्रजानाम्" इति कौमारानुष्ठितत्वाभिधानात् स एव विरोधः इति ॥ १ ॥

न चेति । सः दशरथः पूर्व्वेषां पितॄणाम् ऋणनिर्मोक्षसाधनम् । "एष वा अनृणो यः पुत्री" इति श्रुतेः पितॄणाम् ऋणविमुक्तिकारणं सद्यः शोकः एव तमः तत् अपहन्तीति

अतिष्ठत् प्रत्ययापेक्ष-सन्ततिः स चिरं नृपः ।
प्राङ्मन्थादनभिव्यक्तरत्नोत्पत्तिरिवार्णवः ॥ ३ ॥
ऋष्यशृङ्गादयस्तस्य सन्तः सन्तानकाङ्क्षिणः ।
आरेभिरे जितात्मानः पुत्त्रीयामिष्टिमृत्विजः ॥४॥
तस्मिन्नवसरे देवाः पौलस्त्योपप्लुता हरिम् ।

शोकतमोपहम् । अत्राभयङ्कर इतिवदुपपदेऽपि तदन्तविधिमाश्रित्य अपक्लेशतमसोरिति डप्रत्ययः । सुताभिधानं सुताख्यं ज्योतिः न उपलेभे न प्राप च ॥ २ ॥

अतिष्ठदिति । प्रत्ययं हेतुम् अपेक्षते इति प्रत्ययापेक्षा सन्ततिः यस्य सः तथोक्तः । "प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु" इत्यमरः । सः नृपः, मन्थात् प्राक् मन्थनात् पूर्व्वम् अनभिव्यक्ता अदृष्टा रत्नोत्पत्तिः यस्य सः अर्णवः इव, चिरम् अतिष्ठत् । सामग्र्यभावाद्विलम्बो न तु वन्ध्यत्वात् इति भावः ॥३॥

ऋष्यशृङ्गेति । ऋष्यशृङ्गादयः ऋष्यशृङ्गो नाम कश्चित् ऋषिः तदादयः ऋतुसृतौ वा यजन्तीति ऋत्विजः याज्ञिकाः । ऋत्विग्दधृगित्यादिना क्विबन्तो निपातः । जितात्मानः जितान्तःकरणाः सन्तः सन्तानकाङ्क्षिणः पुत्रार्थिनः तस्य दशरथस्य पुत्त्रीयां पुत्त्रनिमित्ताम् । पुत्राच्छ च इति छप्रत्ययः । इष्टिं यागम् आरेभिरे प्रचक्रमिरे ॥ ४ ॥

तस्मिन्निति । तस्मिन् अवसरे पुत्रकामेष्टिप्रवृत्तिसमये देवाः पुलस्त्यस्य गोत्रापत्यं पुमान् पौलस्त्यः रावणः तेन उपप्लुताः पीड़िताः सन्तः निदाघार्त्ताः घर्म्मातुराः अध्वानं गच्छन्तीति अध्वगाः पान्थाः । अन्तात्यन्ताध्वदूरपारसर्व्वानन्तेषु ड इति

अभिजग्मुर्निदाघार्त्ताः छायावृक्षमिवाध्वगाः ॥५॥
ते च प्रापुरुदन्वन्तं बुबुधे चादिपूरुषः ।
अव्याक्षेपो भविष्यन्त्याः कार्य्यसिद्धेर्हि लक्षणम् ॥६॥
भोगिभोगासनासीनं ददृशुस्तं दिवौकसः ।
तत्फणामण्डलोदर्च्चिर्मणिद्योतितविग्रहम् ॥७॥

ङप्रत्ययः । छायाप्रधानं वृक्षं छायावृक्षम् इव । शाकपार्थिवादित्वात् समासः हरिं विष्णुम् अभिजग्मुः ॥ ५ ॥

त इति । ते देवाश्च उदन्वन्तं समुद्रम् । उदन्वानुदधौ चेति निपातः । प्रापुः, आदिपूरुषः विष्णुश्च बुबुधे योगनिद्रां जहौ इत्यर्थः । गमनप्रतिबोधयोरविलम्बार्थौ चकारौ । तथाहि, अव्याक्षेपः गम्यस्य अव्यासङ्गः अविलम्बः इति यावत् । भविष्यन्त्याः कार्य्यसिद्धेः लक्षणं लिङ्गं हि । उक्तञ्च, "अनन्यपरता चास्य कार्य्यसिद्धेस्तु लक्षणम्" इति ॥ ६ ॥

भोगीति । द्यौः ओकः येषां ते दिवौकसः देवाः । पृषोदरादित्वात् साधुः । यद्वा दिवशब्दोऽदन्तोऽप्यस्ति । तथा च बुद्धचरिते—"न शोभते तेन हि नो विना पुरं मरुत्वता वृत्रवधे यथा दिवम्" इति । तत्र दिवुक्रीड़ादाविति धातोरिगुपधेति कः, दिवम् ओकः येषाम् इति विग्रहः । भोगिनः शेषस्य भोगः शरीरम् । "भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः" इत्यमरः । स एव आसनं सिंहासनं तत्र आसीनम् उपविष्टम् । आसेः शानच्, ईदास इतीकारादेशः । तस्य भोगिनः फणामण्डले ये उदर्च्चिषः मणयः तैः द्योतितविग्रहं तं विष्णुं ददृशुः ॥ ७ ॥

श्रियः पद्मनिषण्णायाः क्षौमान्तरितमेखले।
अङ्के निक्षिप्तचरणमास्तीर्णकरपल्लवे ॥ ८ ॥
प्रबुद्धपुण्डरीकाक्षं बालातपनिभांशुकम्।
दिवसं शारदमिव प्रारम्भसुखदर्शनम् ॥ ९ ॥
प्रभानुलिप्तश्रीवत्सं लक्ष्मीविभ्रमदर्पणम्।
कौस्तुभाख्यमपां सारं बिभ्राणं बृहतोरसा ॥ १० ॥

श्रिय इति। कीदृशं विष्णुम्? पद्मे निषण्णायाः उपविष्टायाः श्रियः क्षौमान्तरिता दुकूलव्यवहिता मेखला यस्य तस्मिन्, आस्तीर्णौ करपल्लवौ यस्मिन्। विशेषणद्वयेनापि चरणयोः सौकुमार्य्यात् कटिमेखलास्पर्शासहत्वं सूच्यते। तस्मिन् अङ्के निक्षिप्तौ चरणौ येन तम्॥ ८ ॥

प्रबुद्धेति। पुनः कीदृशम्? प्रबुद्धे विकसिते पुण्डरीके इव अक्षिणी यस्य तं दिवसे तु पुण्डरीकम् एव अक्षि यस्य इति विग्रहः, बालातपनिभम् अंशुकं यस्य तं पीताम्बरधरम् इत्यर्थः। अन्यत्र बालातपव्याजांशुकम् इत्यर्थः। "निभो व्याजसदृशयोः" इति विश्वः। प्रकृष्टः आरम्भः योगः येषां ते प्रारम्भाः योगिनः तेषां सुखदर्शनम्। अन्यत्र प्रारम्भे आदौ सुखदर्शनं शारदं शरत्सम्बन्धिनं दिवसम् इव स्थितम्॥ ९ ॥

प्रभेति। पुनः किंविधम्? प्रभया अनुलिप्तम् अनुरञ्जितं श्रीवत्सं नाम लाञ्छनं येन तं लक्ष्म्याः विभ्रमदर्पणं कौस्तुभः इति आख्या यस्य तम् अपां सामुद्राणां सारं स्थिरांशं मणिम् इत्यर्थः। बृहता उरसा बिभ्राणम्॥ १० ॥

बाहुभिर्विटपाकारैर्दिव्याभरणभूषितैः ।
आविर्भूतमपां मध्ये पारिजातमिवापरम् ॥ ११ ॥
दैत्यस्त्रीगण्डलेखानां मदरागविलोपिभिः ।
हेतिभिश्चेतनावद्भिरुदीरितजयस्वनम् ॥ १२ ॥
मुक्तशेषविरोधेन कुलिशव्रणलक्ष्मणा ।
उपस्थितं प्राञ्जलिना विनीतेन गरुत्मता ॥ १३ ॥

बाहुभिरिति। विटपाकारैः शाखाकारैः दिव्याभरणभूषितैः बाहुभिः उपलक्षितम् अत एव अपां सैन्धवीनां मध्ये आविर्भूतम् अपरं द्वितीयं पारिजातम् इव स्थितम् ॥ ११ ॥

दैत्येति। दैत्यस्त्रीगण्डलेखानाम् असुराङ्गनागण्डस्थलीनां यः मदरागः तं विलुम्पन्ति हरन्तीति मदरागविलोपिनः तैः चेतनावद्भिः सजीवैः हेतिभिः सुदर्शनादिभिः शस्त्रैः। "रवेरर्चिश्च शस्त्रञ्च वह्निज्वाला च हेतयः" इत्यमरः उदीरितजयस्वनं जयशब्दमुद्घोषयन्तीभिः मूर्त्तिमतीभिः अस्त्रदेवताभिरुपास्यमानम् इत्यर्थः ॥ १२ ॥

मुक्तेति। मुक्तः भगवत्सन्निधानात् त्यक्तः शेषेण सह विरोधः सहजमपि वैरं येन तेन कुलिशव्रणाः अमृताहरणकाले इन्द्रयुद्धे ये वज्रप्रहाराः ते एव लक्ष्माणि यस्य सः तेन प्रबद्धः अञ्जलिः येन तेन प्राञ्जलिना प्रबद्धाञ्जलिना इत्यर्थः विनीतेन अनुद्धतेन गरुत्मता उपस्थितम् उपासितम्। पुरा किल तेन विष्णुना प्राञ्जलिप्रार्थितेन दुहितुर्गुणकेश्याः पत्युः कस्यचित् सर्पस्य गरुडादभयदाने कृते स्वविपक्षरक्षणक्षुभितं पक्षिराजं त्वद्वोढाहं त्वत्तो बलाढ्य इति गर्व्वितं स्ववामतर्ज्जनी-

योगनिद्रान्तविशदैः पावनैरवलोकनैः ।
भृग्वादीननुगृह्णन्तं सौखशायनिकानृषीन् ॥ १४ ॥
प्रणिपत्य सुरास्तस्मै शमयित्रे सुरद्विषाम् ।
अथैनं तुष्टुवुः स्तुत्यमवाङ्मनसगोचरम् ॥ १५ ॥
नमो विश्वसृजे पूर्व्वं विश्वं तदनु बिभ्रते ।
अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधा स्थितात्मने ॥ १६ ॥

भारेणैव भगवान् विनिनायेति महाभारतीयां कथां सूचयति विनीतेनेत्यनेन ॥ १३ ॥

योगेति । योगः मनसो विषयान्तरव्यावृत्तिः तद्रूपा या निद्रा तस्याः अन्ते अवसाने विशदैः प्रसन्नैः पावनैः शोधनैः अवलोकनैः सुखशयनं पृच्छन्तीति सौखशायनिकाः तान् । पृच्छतौ सुस्नातादिभ्य इत्युपसंख्यानाट्ठक्प्रत्ययः । भृग्वादीन् ऋषीन् अनुगृह्णन्तम् ॥ १४ ॥

प्रणिपत्येति । अथ दर्शनानन्तरं सुराः सुरद्विषाम् असुराणां शमयित्रे विनाशकाय तस्मै विष्णवे प्रणिपत्य स्तुत्यं स्तोतव्यम् । एतिस्तु शास्वृदृजुषः क्यप् इति क्यप्प्रत्ययः । वाक् च मनश्च वाङ्मनसे । अचतुरेत्यच्प्रत्ययान्तो निपातः । तयोः गोचरो विषयो न भवतीति अवाङ्मनसगोचरः तम् एनं विष्णुं तुष्टुवुः ॥ १५ ॥

नम इति । पूर्व्वम् आदौ विश्वसृजे विश्वस्रष्ट्रे तदनु सर्गानन्तरं विश्वं बिभ्रते अथ विश्वस्य संहर्त्रे एवं त्रेधा सृष्टिस्थितिसंहारकर्तृत्वेन स्थितः आत्मा स्वरूपं यस्य तस्मै ब्रह्मविष्णुहरात्मने तुभ्यं नमः ॥ १६ ॥

रसान्तराण्येकरसं यथा दिव्यं पयोऽश्नुते।
देशे देशे गुणेष्वेवमवस्थास्त्वमविक्रियः॥ १७॥
अमेयो मितलोकस्त्वमनर्थी प्रार्थनावहः।
अजितो जिष्णुरत्यन्तमव्यक्तो व्यक्तकारणम्॥ १८॥
हृदयस्थमनासन्नमकामं त्वां तपस्विनम्।
दयालुमनघस्पृष्टं पुराणमजरं विदुः॥ १९॥

ननु कूटस्थस्य कथं नैरूप्यमित्याशङ्क्यौपाधिकमित्याह, रसान्तराणीति। एकरसं मधुरैकरसं दिवि भवं दिव्यं पयः वर्षोदकं देशे देशे ऊषरादिदेशे अन्यान् रसान् रसान्तराणि लवणादीनि यथा अश्नुते प्राप्नोति एवम् अविक्रियः निर्विकारः एकरूपः इत्यर्थः। त्वं गुणेषु सत्त्वादिषु अवस्थाः स्रष्टृत्वादिरूपा अश्नुषे॥ १७॥

अमेय इति। हे देव! त्वम् अमेयः लोकैरियत्तया न परिच्छेद्यः, मितलोकः परिच्छिन्नलोकः, अनर्थी निःस्पृहः। आवहतीति आवहः। पचाद्यच्। प्रार्थनानाम् आवहः कामदः अजितः अन्यैः न जितः जिष्णुः जयशीलः, अत्यन्तम् अव्यक्तः अतिसूक्ष्मरूपः, व्यक्तस्य स्थूलस्य कारणम्॥ १८॥

हृदयेति। हे देव! त्वां हृदयस्थं सर्वान्तर्यामितया नित्यसन्निहितं तथापि अनासन्नम् अगम्यरूपत्वात् विप्रकृष्टञ्च विदुः, तथा अकामं न कामः अभिलाषः अस्य तं परिपूर्णत्वात् निस्पृहत्वाच्च निष्कामं तथापि तपस्विनं प्रशस्ततपोयुक्तं विदुः, यो निष्कामः स कथं तपः कुरुते इति विरोधः। परिहारस्तु ऋषिरूपेण दुस्तरं तपः तप्यते, दयालुं परदुःखप्रहरणपरं तथापि

सर्वज्ञस्त्वमविज्ञातः सर्वयोनिस्त्वमात्मभूः ।
सर्वप्रभुरनीशस्त्वमेकस्त्वं सर्वरूपभाक् ॥ २० ॥
सप्तसामोपगीतं त्वां सप्तार्णवजलेशयम् ।
सप्तार्च्चिर्मुखमाचख्युः सप्तलोकैकसंश्रयम् ॥ २१ ॥

अनघस्पृष्टं नित्यानन्दस्वरूपत्वात् अदुःखिनं विदुः । "अघं दुरितदुःखयोः" इति विश्वः । दयालुरदुःखी चेति विरोधः । "ईर्ष्यी घृणी त्वसन्तुष्टः क्रोधनो नित्यशङ्कितः । परभाग्योपजीवी च षडेते नित्यदुःखिताः ॥" इति महाभारते । पुराणम् अनादिम् अजरं निर्विकारत्वात् अजरं विदुः, चिरन्तनं न जीर्य्यते इति विरोधालङ्कारः । उक्तञ्च, "आभासत्वे विरोधस्य विरोधालङ्कृतिर्मता" इति । विरोधेन चालौकिकमहिमत्वं व्यज्यते ॥ १९ ॥

सर्वज्ञ इति । त्वं सर्वं जानातीति सर्वज्ञः । इगुपधेति कप्रत्ययः । अविज्ञातः न केनापि विज्ञातः इत्यर्थः । त्वं सर्वस्य योनिः कारणं त्वम् आत्मन एव भवतीति आत्मभूः न ते किञ्चित् कारणमस्ति इत्यर्थः । त्वं सर्वस्य प्रभुः त्वम् अनीशः त्वम् एकः सर्वरूपभाक् त्वमेक एव सर्वात्मना वर्त्तसे ॥ २० ॥

सप्तेति । हे देव ! त्वां सप्तभिः सामभिः रथन्तरादिभिः उपगीतम् । तद्धितार्थेत्युत्तरपदसमासः । सप्तानाम् अर्णवानां जलं सप्तार्णवजलम् । पूर्व्ववत् समासः । तत्र शेते यः सः सप्तार्णवजलेशयः तम् । शयवासवासिष्वकालादित्यलुक् । सप्तार्च्चिः मुखं यस्य तम् । "अग्निमुखा वै देवाः" इति श्रुतेः । सप्तानां लोकानां भूर्भुवःस्वरादीनाम् एकसंश्रयम् एवम्भूतम् आचख्युः ॥ २१ ॥

चतुर्वर्गफलं ज्ञानं कालावस्थाश्चतुर्युगाः।
चतुर्वर्णमयो लोकस्त्वत्तः सर्वं चतुर्मुखात् ॥ २२ ॥
अभ्यासनिगृहीतेन मनसा हृदयाश्रयम्।
ज्योतिर्मयं विचिन्वन्ति योगिनस्त्वां विमुक्तये ॥२३॥
अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः।
स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव ॥ २४ ॥

चतुरिति। चतुर्णां धर्मार्थकाममोक्षाणां वर्गः चतुर्वर्गः। "त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः" इत्यमरः। तत्फलकं यत् ज्ञानं, चत्वारि युगानि कृतत्रेतादीनि यासु ताः चतुर्युगाः कालावस्थाः कालपरिमाणं चत्वारः वर्णाः प्रकृताः उच्यन्ते यस्मिन्निति चतुर्वर्णमयः चातुर्वर्ण्यप्रचुरः इत्यर्थः। तत्प्रकृतवचने मयट्। तद्धितार्थेति तद्धितार्थे विषये तत्पुरुषः। सः लोकः इत्येवं रूपं सर्वं चतुर्मुखात् चतुर्मुखरूपिणः त्वत्तः जातम् इति शेषः। "इदं सर्वमसृजत यदिदं किञ्चित्" इति श्रुतिः॥ २२ ॥

अभ्यासेति। अभ्यासेन निगृहीतं विषयान्तरेभ्यः निवर्त्तितं तेन मनसा योगिनः हृदयाश्रयं हृत्पद्मस्थं ज्योतिर्मयं त्वां विमुक्तये मोक्षार्थं विचिन्वन्ति अन्विष्यन्ति ध्यायन्ति इत्यर्थः॥२३॥

अजस्येति। न जायते इति अजः। अन्येष्वपि दृश्यत इति डप्रत्ययः। तस्य अजस्य जन्मशून्यस्यापि जन्म गृह्णतः मत्स्यादि-रूपेण जायमानस्य निरीहस्य चेष्टारहितस्यापि हतद्विषः शत्रु-घातिनः जागरूकस्य सर्वसाक्षितया नित्यप्रबुद्धस्यापि स्वपतः योगनिद्रामनुभवतः इत्थं विरुद्धचेष्टस्य तव याथार्थ्यं कः वेद वेत्ति। विदो लटो वेति णलादेशः॥ २४ ॥

शब्दादीन् विषयान् भोक्तुं चरितुं दुश्चरं तपः।
पर्य्याप्तोऽसि प्रजाः पातुमौदासीन्येन वर्त्तितुम् ॥२५॥
बहुधाप्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः।
त्वय्येव निपतन्त्योघाः जाह्नवीया इवार्णवे ॥ २६ ॥
त्वय्यावेशितचित्तानां त्वत्समर्पितकर्म्मणाम्।
गतिस्त्वं वीतरागाणामभूयःसन्निवृत्तये ॥ २७ ॥

शब्दादीनिति। शब्दादीन् विषयान् भोक्तुं नरनारायणादिरूपेण दुश्चरं तपः चरितुं तथा दैत्यमर्द्दनेन प्रजाः पातुम् औदासीन्येन ताटस्थेन वर्त्तितुञ्च पर्य्याप्तः समर्थः असि। भोगतपसोः पालनौदासीन्ययोश्च परस्परविरुद्धयोराचरणे त्वदन्यः कः समर्थः इत्यर्थः॥ २५ ॥

बहुधेति। आगमैः त्रयीसांख्यादिभिः दर्शनैः बहुधा भिन्नाः अपि सिद्धिहेतवः पुरुषार्थसाधकाः पन्थानः उपायाः, जाह्नव्याः इमे जाह्नवीयाः गाङ्गाः। वृद्धाच्छ इति छप्रत्ययः। ओघाः प्रवाहाः ते अपि आगमैः आगतिभिर्बहुधा भिन्नाः सिद्धिहेतवश्च, अर्णवे इव त्वयि एव निपतन्ति प्रविशन्ति येन केनापि रूपेण त्वामेवोपयान्ति इत्यर्थः। यथाहुराचार्य्याः—"किं बहुना कारवोऽपि विश्वकर्म्माणमुपासते" ॥ २६ ॥

त्वयीति। त्वयि आवेशितं निवेशितं चित्तं यैः तेषां तुभ्यं समर्पितानि कर्म्माणि यैः तेषाम्, "मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु। मामेवैष्यसि कौन्तेय! प्रतिजाने प्रियोऽसि मे ॥" इति भगवद्वचनात्। वीतरागाणां विरक्तानाम् अभूयःसन्निवृत्तये अपुनरावृत्तये मोक्षाय इत्यर्थः त्वम् एव गतिः साधनम्,

प्रत्यक्षोऽप्यपरिच्छेद्यः मह्यादिर्महिमा तव।
आप्तवागनुमानाभ्यां साध्यं त्वां प्रति का कथा॥२८॥
केवलं स्मरणेनैव पुनासि पुरुषं यतः।
अनेन वृत्तयः शेषाः निवेदितफलास्त्वयि॥ २९॥
उदधेरिव रत्नानि तेजांसीव विवस्वतः।
स्तुतिभ्यो व्यतिरिच्यन्ते दूराणि चरितानि ते॥३०॥

"तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति श्रुतेः इत्यर्थः॥ २७॥

प्रत्यक्ष इति। प्रत्यक्षः प्रत्यक्षप्रमाणगम्यः अपि तव मह्यादिः पृथिव्यादिः महिमा ऐश्वर्य्यम् परिच्छेद्यः इयत्तया न अवधार्य्यः, आप्तवाक् वेदः "यतो वा इमानि" इत्यादि श्रुतिः। अनुमानं क्षित्यादिकं सकर्तृकं कार्य्यत्वात् घटवदित्यादि, ताभ्यां साध्यं गम्यं त्वां प्रति का कथा प्रत्यक्षमपि त्वत्कृतं जगदपरिच्छेद्यं तत्कारणमप्रत्यक्षस्त्वम् अपरिच्छेद्य इति किमु वक्तव्यम् इत्यर्थः॥ २८॥

केवलमिति। स्मरणेन केवलं कृत्स्नम्। "केवलः कृत्स्न एकश्च" इति शाश्वतः। पुरुषं स्मर्त्तारं जनं पुनासि यतः यत् इत्यर्थः, अनेन एव स्मृतिकार्य्येण एव त्वयि त्वद्विषये याः अवशिष्टाः वृत्तयः दर्शनस्पर्शनादयो व्यापाराः ताः निवेदितफलाः ज्ञापितकार्य्याः। तव स्मरणस्यैव एतत् फलं दर्शनादीनां तु कियदिति नावधारयामः इति भावः॥ २९॥

उदधेरिति। उदधेः रत्नानि इव विवस्वतः तेजांसि इव

अनवाप्तमवाप्तव्यं न ते किञ्चन विद्यते।
लोकानुग्रह एवैकः हेतुस्ते जन्मकर्म्मणोः ॥ ३१ ॥
महिमानं यदुत्कीर्त्त्य तव संह्रियते वचः।
श्रमेण तदशक्त्या वा न गुणानामियत्तया ॥ ३२ ॥
इति प्रसादयामासुः ते सुरास्तमधोक्षजम्।
भूतार्थव्याहृतिः सा हि न स्तुतिः परमेष्ठिनः ॥३३॥

दूराणि अवाङ्मनसगोचराणि ते चरितानि स्तुतिभ्यः व्यतिरिच्यन्ते निःशेषं स्तोतुं न शक्यन्ते इत्यर्थः ॥ ३० ॥

अनवाप्तमिति। अनवाप्तम् अप्राप्तम् अवाप्तव्यं ते तव किञ्चन किञ्चित् अपि न विद्यते नित्यपरिपूर्णत्वात् इति भावः। तर्हि किं निबन्धने जन्मकर्म्मणी? तत्राह, लोकेति। एकः लोकानुग्रहः एव ते जन्मकर्म्मणोः हेतुः परमकारुणिकस्य ते परार्थैव प्रवृत्तिर्न स्वार्था इत्यर्थः ॥ ३१ ॥

महिमानमिति। तव महिमानम् उत्कीर्त्त्य वचः संह्रियते इति यत् तत् वचःसंहरणं श्रमेण वाग्व्यापारश्रान्त्या अशक्त्या कात्स्न्र्येन वक्तुमशक्यत्वाद्वा गुणानाम् इयत्तया एतावन्मात्रतया न तेषामानन्त्यात् इति भावः ॥ ३२ ॥

इतीति। इति ते सुराः तम् अधोभूतम् अक्षजम् इन्द्रियजं ज्ञानं यस्मिन् तम् अधोक्षजं विष्णुं प्रसादयामासुः प्रसन्नं चक्रुः। हि यस्मात् परमेष्ठिनः सर्व्वोत्तमस्य तस्य देवस्य सा देवैः कृता भूतार्थव्याहृतिः भूतस्य सत्यस्य अर्थस्य व्याहृतिः उक्तिः। "युक्ते क्ष्मादावृते भूतम्" इत्यमरः। न स्तुतिः न प्रशंसामात्रम्। महान्तो हि यथाकथञ्चित्र सुलभाः इति भावः। परमे स्थाने

तस्मै कुशलसंप्रश्नव्यञ्जितप्रीतये सुराः ।
भयमप्रलयोद्वेलादाचख्युर्नैर्ऋतोदधेः ॥ ३४ ॥
अथ वेलासमासन्न-शैलरन्ध्रानुनादिना ।
स्वरेणोवाच भगवान् परिभूतार्णवध्वनिः ॥ ३५ ॥
पुराणस्य कवेस्तस्य वर्णस्थानसमीरिता ।
बभूव कृतसंस्कारा चरितार्थैव भारती ॥ ३६ ॥

तिष्ठतीति परमेष्ठी। परमे कितिदित्युणादिसूत्रेण तिष्ठतेरिनिः, तत्पुरुषे कृति बहुलमिति सप्तम्या अलुक्, स्थास्थिन् स्थृणामिति वक्तव्यात् षत्वम् ॥ ३३ ॥

तस्मा इति। सुराः देवाः कुशलस्य संप्रश्नेन व्यञ्जिता प्रकटीकृता प्रीतिः यस्य तस्मै लक्षितप्रसादाय इत्यर्थः। अन्यथा अनवसरविज्ञप्तिर्मुखराणामिव निष्फला स्यात् इति भावः। तस्मै विष्णवे अप्रलये प्रलयाभावे अपि उद्वेलात् उन्मर्य्यादात् नैर्ऋतः राक्षसः सः एव उदधिः तस्मात् भयम् आचख्युः कथितवन्तः ॥ ३४ ॥

अथेति। अथ वेलायाम् अब्धिकूले समासन्नानां सन्निकृष्टानां शैलानां रन्ध्रेषु गह्वरेषु अनुनादिना प्रतिध्वनिमता स्वरेण परिभूतार्णवध्वनिः तिरस्कृतसमुद्रघोषः भगवान् उवाच ॥ ३५॥

पुराणस्येति। पुराणस्य चिरन्तनस्य कवेः तस्य भगवतः वर्णस्थानेषु उरःकण्ठादिषु समीरिता सम्यक् उच्चारिता अत एव कृतः सम्पादितः संस्कारः साधुत्वस्पृष्टतादिप्रयत्नः यस्याः सा भारती वाणी चरितार्था कृतार्था बभूव एव। एवकारस्त्वसम्भावनाविपरीतभावनाव्युदासार्थः ॥ ३६ ॥

बभौ सदशनज्योत्स्ना सा विभोर्वदनोद्गता।
निर्यातशेषा चरणात् गङ्गेवोर्द्ध्वप्रवर्त्तिनी॥ ३७॥
जाने वो रक्षसाक्रान्तौ अनुभावपराक्रमौ।
अङ्गिनां तमसेवोभौ गुणौ प्रथममध्यमौ॥ ३८॥
विदितं तप्यमानञ्च तेन मे भुवनत्रयम्।
अकामोपनतेनेव साधोर्हृदयमेनसा॥ ३९॥

बभाविति। विभोः विष्णोः वदनात् उद्गता निःसृता सदशनज्योत्स्ना दन्तकान्तिसहिता, इदञ्च विशेषणं धावल्यातिशयार्थम्, अत एव सा भारती चरणात् अङ्घ्रेः निर्याता चासौ शेषा च निर्यातशेषा निःसृतावशिष्टा इत्यर्थः। स्त्रियाः पुंवदित्यनुवर्त्त्य पुंवत् कर्म्मधारयेति पुंवद्भावः। निर्यातशब्दस्य या निर्याता सावशेषा सा गङ्गेवेति सामानाधिकरण्यनिर्वाहः, निर्यातायाः शेषेति विग्रहे पुंवद्भावः दुर्घट एव। ऊर्द्ध्वप्रवर्त्तिनी ऊर्द्ध्ववाहिनी गङ्गा इव बभौ इत्युत्प्रेक्षा॥ ३७॥

यदाह भगवान् तदाह, जाने इति। हे देवाः! वः युष्माकम् अनुभावपराक्रमौ महिमपुरुषकारौ रक्षसा रावणेन, अङ्गिनां शरीरिणां प्रथममध्यमौ उभौ गुणौ सत्त्वरजसौ तमसा इव तमोगुणेन इव, आक्रान्तौ जाने। वाक्यार्थः कर्म्म॥ ३८॥

विदितमिति। किञ्च, अकामेन अनिच्छया उपनतेन प्रमादात् आगतेन एनसा पापेन साधोः सज्जनस्य हृदयम् इव, तेन रक्षसा तप्यमानं सन्तप्यमानम्। तपेर्भौवादिकात् कर्म्मणि शानच्। भुवनत्रयं मे विदितं मया ज्ञायते इत्यर्थः। गतिबुद्धीत्यादिना वर्त्तमाने क्तः, क्तस्य च वर्त्तमान इति षष्ठी॥३९॥

कार्य्येषु चैककार्य्यत्वादभ्यर्थ्योऽस्मि न वज्रिणा ।
स्वयमेव हि वातोऽग्नेः सारथ्यं प्रतिपद्यते ॥ ४० ॥
स्वासिधारापरिहृतः कामं चक्रस्य तेन मे ।
स्थापितो दशमो मूर्द्धा लभ्यांश इव रक्षसा ॥ ४१ ॥
स्रष्टुर्वरातिसर्गात्तु मया तस्य दुरात्मनः ।
अत्यारूढं रिपोः सोढं चन्दनेनेव भोगिनः ॥ ४२ ॥

कार्य्येष्विति । किञ्च, एककार्य्यत्वात् आवयोः एककार्य्यकत्वात् हेतोः कार्य्येषु कर्त्तव्यार्थेषु विषयेषु वज्रिणा इन्द्रेण अभ्यर्थ्यः इदं कुर्व्विति प्रार्थनीयः न अस्मि, तथा हि वातः स्वयमेव अग्नेः सारथ्यं साहाय्यं प्रतिपद्यते प्राप्नोति न तु वह्निप्रार्थनया इत्येवकारार्थः । प्रेक्षावतां स्वार्थेषु स्वत एव प्रवृत्तिः न तु परप्रार्थनया स्वार्थश्चायं ममापि इत्यर्थः ॥ ४० ॥

पुरा किल त्रिपुरारिप्रीणनाय स्वशिरांसि छिन्दता दशकन्धरेण यद्दशमं शिरोऽवशेषितं तन्मच्चक्रार्थमित्याह, स्वेति । स्वासिधारया स्वखड्गधारया परिहृतः अच्छिन्नः इत्यर्थः दशमः मूर्द्धा मे मम चक्रस्य कामं पर्य्याप्तः लभ्यांशः प्राप्तव्यभागः इव तेन रक्षसा स्थापितः । सर्व्वथा तमहं हनिष्यामि इत्यर्थः ॥ ४१ ॥

तर्हि किं प्रागुपेक्षितमत आह, स्रष्टुरिति । किन्तु स्रष्टुः ब्रह्मणः वरातिसर्गात् वरदानात् हेतोः मया तस्य दुरात्मनः रिपोः रावणस्य अत्यारूढम् अत्यारोहणम् अतिवृद्धिः इत्यर्थः । नपुंसके भावे क्तः । भोगिनः सर्पस्य अत्यारूढं

धातारं तपसा प्रीतं ययाचे स हि राक्षसः।
दैवात् सर्गादवध्यत्वं मर्त्त्येष्वास्थापराङ्मुखः॥ ४३॥
सोऽहं दाशरथिर्भूत्वा रणभूमेर्बलिक्षमम्।
करिष्यामि शरैस्तीक्ष्णैस्तच्छिरःकमलोच्चयम्॥४४॥
अचिराद्यज्वभिर्भागं कल्पितं विधिवत् पुनः।
मायाविभिरनालीढमादास्यध्वे निशाचरैः॥ ४५॥

चन्दनेन इव, सोढ़म्। चन्दनस्यापि तथा सहनं स्रष्टुर्नियतेरिति द्रष्टव्यम्॥ ४२॥

सम्प्रति वरस्वरूपमाह, धातारमिति। सः राक्षसः तपसा प्रीतं सन्तुष्टं धातारं ब्रह्माणं मर्त्त्येषु विषये आस्थापराङ्मुखः आदरविमुखः सन् मर्त्त्याननादृत्य इत्यर्थः दैवात् अष्टविधात् सर्गात् देवसृष्टेः अवध्यत्वं ययाचे हि॥ ४३॥

तर्हि का गतिरित्याशङ्क्य मनुष्यावतारेण हनिष्यामीत्याह, सोऽहमिति। सः अहं दशरथस्य अपत्यं पुमान् दाशरथिः। अत इञ् इति इञ्प्रत्ययः। रामः भूत्वा तीक्ष्णैः शरैः तस्य रावणस्य शिरांसि एव कमलानि तेषाम् उच्चयं राशिं रणभूमेः बलिक्षमं पूजार्हं करिष्यामि। पुष्पविषदा हि पूजा इति भावः॥ ४४॥

अचिरादिति। हे देवाः! यज्वभिः याज्ञिकः विधिवत् कल्पितम् उपहृतं भागं हविर्भागं मायाविभिः मायावद्भिः। अस्मायामेधास्रजो विनिरिति विनिप्रत्ययः। निशाचरैः रक्षोभिः अनालीढम् अनास्वादितं यथा तथा अचिरात् पुनः आदास्यध्वे ग्रहीष्यध्वे॥ ४५॥

वैमानिकाः पुण्यकृतस्त्यजन्तु मरुतां पथि।
पुष्पकालोकसंक्षोभं मेघावरणतत्पराः॥ ४६॥
मोक्ष्यध्वे स्वर्गवन्दीनां वेणीबन्धानदूषितान्।
शापयन्त्रितपौलस्त्य-बलात्कारकचग्रहैः॥ ४७॥
रावणावग्रहक्लान्तमिति वागमृतेन सः।
अभिवृष्य मरुत्सस्यं कृष्णमेघस्तिरोदधे॥ ४८॥

वैमानिका इति। मरुतां देवानां पथि व्योम्नि वैमानिकाः विमानैश्चरन्ति इति। चरतीति ठक्प्रत्ययः। मेघावरणतत्पराः रावणभयात् मेघेषु अन्तर्द्धानतत्पराः पुण्यकृतः सुकृतिनः पुष्पकालोकेन यदृच्छया रावणविमानदर्शनेन यः संक्षोभः भयचकितं तं त्यजन्तु। "संक्षोभो भयचकितम्" इति शब्दार्णवः॥४६॥

मोक्ष्यध्वे इति। हे देवाः! यूयं शापेन नलकूवरशापेन यन्त्रिताः प्रतिबद्धाः पौलस्त्यस्य रावणस्य बलात्कारेण ये कचग्रहाः केशाकर्षाः तैः अदूषितान् अनुपहतान् स्वर्गवन्दीनां हृतस्वर्गाङ्गनानां वेणीबन्धान् मोक्ष्यध्वे। पुरा किल नलकूवरेण आत्मानम् अभिसरन्त्या रम्भाया बलात्कारेण सम्भोगात् क्रुद्धेन दुरात्मा रावणः शप्तः स्त्रीणां बलाद्ग्रहणे मूर्द्धा ते शतधा भविष्यतीति भारतीया कथानुसन्धेया॥ ४७॥

रावणेति। सः कृष्णः विष्णुः सः एव मेघः नीलमेघश्च, विश्रवसः अपत्यं पुमान् इति विग्रहे रावणः। विश्रवःशब्दात् शिवादित्वादणि विश्रवसो विश्रवणरवणावित्यन्तर्गणसूत्रेण विश्रवःशब्दस्य वृत्तिविषये रवणादेशे रावण इति सिद्धम्। सः एव अवग्रहः वर्षप्रतिबन्धः तेन क्लान्तं म्लानं मरुतः देवाः

पुरुहूतप्रभृतयः सुरकार्य्योद्यतं सुराः।
अंशैरनुययुर्विष्णुं पुष्पैर्वायुमिव द्रुमाः॥ ४९॥
अथ तस्य विशाम्पत्युरन्ते काम्यस्य कर्म्मणः।
पुरुषः प्रबभूवाग्नेः विस्मयेन सहर्त्विजाम्॥ ५०॥
हेमपात्रगतं दोर्भ्यामादधानः पयश्चरुम्।
अनुप्रवेशादाद्यस्य पुंसस्तेनापि दुर्वहम्॥ ५१॥

एव शस्य तत् इति एवंरूपेण वागमृतेन वाक्सलिलेन। "अमृतं यज्ञशेषे स्यात् पीयूषे सलिलेऽमृतम्" इति विश्वः। अभिवृष्य अभिषिच्य तिरोदधे अन्तर्दधे॥ ४८॥

पुरुहूतेति। पुरुहूतप्रभृतयः इन्द्राद्याः सुराः सुरकार्य्ये रावणवधरूपे उद्यतं विष्णुम् अंशैः मात्राभिः, द्रुमाः पुष्पैः स्वांशैः वायुम् इव, अनुययुः। सुग्रीवादिरूपेण वानर-योनिषु जाता इत्यभिप्रायः॥ ४९॥

अथेति। अथ तस्य विशांपत्युः दशरथस्य सम्बन्धिनः काम्यस्य कर्म्मणः पुत्रकामेष्टेः अन्ते अवसाने अग्नेः पावकात् पुरुषः कश्चित् दिव्यः पुमान् ऋत्विजां विस्मयेन सह प्रबभूव प्रादुर्बभूव तदाविर्भावात् तेषामपि विस्मयोऽभूत् इत्यर्थः॥ ५०॥

तमेव पुरुषं विशिनष्टि, हेमपात्रेति। आद्यस्य पुंसः अनुप्रवेशात् अधिष्ठानात् हेतोः तेन दिव्यपुरुषेणापि दुर्वहं चतुर्द्दशभुवनोदरस्य भगवतः हरेः अतिगरीयस्त्वात् वोढुम् अशक्यं हेमपात्रगतं पयसि पक्वं चरुं पयश्चरुं पायसान्नं दोर्भ्याम् आदधानः वहन्। "अन्नाग्निभिरूष्मपक्व ओदनश्चरुः" इति याज्ञिकाः। ५१॥

प्राजापत्योपनीतं तदन्नं प्रत्यग्रहीन्नृपः ।
वृषेव पयसां सारमाविष्कृतमुदन्वता ॥ ५२ ॥

अनेन कथिता राज्ञो गुणास्तस्यान्यदुर्लभाः ।
प्रसूतिं चकमे तस्मिन् त्रैलोक्यप्रभवोऽपि यत् ॥५३॥

स तेजो वैष्णवं पत्न्योः विभेजे चरुसंज्ञितम् ।
द्यावापृथिव्योः प्रत्यग्रमहर्पतिरिवातपम् ॥ ५४ ॥

प्राजापत्येति। नृपः दशरथः प्राजापत्येन प्रजापतिसम्बन्धिना पुरुषेण उपनीतं न तु वशिष्ठेन, "प्राजापत्यं नरं विद्धि मामिहाभ्यागतं नृप" इति रामायणात्। तदन्नं पायसान्नम् उदन्वता उदधिना आविष्कृतं प्रकाशितं पयसां सारम् अमृतं वासवः इव। "वासवो वृत्रहा वृषा" इत्यमरः प्रत्यग्रहीत् स्वीचकार ॥ ५२ ॥

अनेनेति। तस्य राज्ञः दशरथस्य अन्यैः दुर्लभाः असाधारणाः गुणाः अनेन कथिताः यत् यस्मात् त्रयः लोकाः त्रैलोक्यं, चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्। तस्य प्रभवः कारणं विष्णुरपि तस्मिन् राज्ञि प्रसूतिम् उत्पत्तिं चकमे कामितवान्। त्रिभुवनकारणस्यासि कारणमिति परमावधिगुणसमाश्रयः इत्यर्थः ॥५३॥

स इति। सः नृपः चरुसंज्ञास्य सञ्जाता चरुसंज्ञितं वैष्णवं तेजः पत्न्योः कौसल्याकैकेय्योः द्यौश्च पृथिवी च द्यावापृथिव्यौ। दिवसश्च पृथिव्यामिति चकाराद्दिवशब्दस्य द्यावादेशः। तयोः द्यावापृथिव्योः अह्नः पतिः अहर्पतिः। अहरादीनां पत्यादिषु वा रेफः इत्युपसंख्यानाद्वैकल्पिको रेफस्य रेफादेशो विसर्गाप-

अर्च्चिता तस्य कौसल्या प्रिया केकयवंशजा ।
अतः सम्भाविताां ताभ्यां सुमित्रामैच्छदीश्वरः ॥५५॥
ते बहुज्ञस्य चित्तज्ञे पत्नौ पत्युर्महीक्षितः ।
चरोरर्द्धार्द्धभागाभ्यां तामयोजयतामुभे ॥ ५६ ॥

वादः । प्रत्यग्रम् आतपं वालातपम् इव विभेजे विभज्य ददौ इत्यर्थः ॥ ५४ ॥

पत्नीत्रये सति द्वयोरेव विभागे कारणमाह, अर्च्चितेति । तस्य राज्ञः, कौ पृथिव्यां सलति गच्छतीति कोसलः । सलगतौ पचाद्यच्, कुशब्दस्य पृषोदरादित्वाद्गुणः । कोसलस्य राज्ञोऽपत्यं स्त्री कौसल्या । वृद्धेत्कोसलाजादाञ्ञ्यङ् इति ञ्यङ्, यङ-श्चापिति चाप् । अत एव सूत्रे निर्देशात् कोसलशब्दो दन्त्य-सकारमध्यमः । अर्च्चिता ज्येष्ठा मान्या, केकयवंशजा कैकयी प्रिया इष्टा अतः हेतोः ईश्वरः भर्त्ता नृपः सुमित्रां ताभ्यां कौसल्या-कैकयीभ्यां सम्भाविताां भागदानेन मानिताम् ऐच्छत् इच्छति स्म । एवञ्च सामान्यं तिसृणाञ्च भागप्रापणमिति राज्ञि उचित-ज्ञता कौशलञ्च लभ्यते ॥ ५५ ॥

ते इति । बहुज्ञस्य सर्व्वज्ञस्य उचितज्ञस्य इत्यर्थः पत्युः महीक्षितः क्षितीश्वरस्य । विशेषणत्रयेण राज्ञोऽनुसरणीयता-माह । चित्तज्ञे अभिप्रायज्ञे ते उभे पत्नौ कौसल्याकैकय्यौ चरोः यौ अर्द्धभागौ समभागौ तयोः यौ अर्द्धौ तौ च तौ भागौ च इत्यर्द्धभागौ एकदेशौ ताभ्याम् अर्द्धार्द्धभागाभ्याम् । पुंस्यर्द्धोऽर्द्धं समेऽंशके" इत्यमरः । तां सुमित्राम् अयोजयतां युक्तां चक्रतुः । अयञ्च विभागो न रामायणसंवादी । तत्र चरोरर्द्धं कौसल्यायै

सा हि प्रणयवत्यासीत् सपत्न्योरुभयोरपि ।
भ्रमरी वारणस्येव मदनिस्यन्दरेखयोः ॥ ५७ ॥
ताभिर्गर्भः प्रजाभूत्यै दध्रे देवांशसम्भवः ।
सौरीभिरिव नाडीभिरमृताख्याभिरम्मयः ॥ ५८ ॥

अवशिष्टार्द्धं केकय्यै शिष्टं पुनः सुमित्राया इत्यभिधानात् । किन्तु पुराणान्तरसंवादो द्रष्टव्यः । उक्तञ्च नारसिंहे—"ते पिण्डप्राशने काले सुमित्रायै महीपतेः । पिण्डाभ्यामल्पमल्पन्तु स्वभगिन्यै प्रयच्छतः ॥" इति । एवमन्यत्रापि विरोधे पुराणान्तरात् समाधातव्यम् ॥ ५६ ॥

नचैवं सत्यपीर्ष्या स्यादित्याह, सा हीति । सा सुमित्रा उभयोरपि समानः एकः पतिः ययोः तयोः सपत्न्योः । नित्यं सपत्न्यादिष्विति ङीप् नकारादेशश्च । भ्रमरी भृङ्गाङ्गना वारणस्य गजस्य मदनिस्यन्दरेखयोरिव, गण्डद्वयगतयोः इति भावः । प्रणयवती प्रेमवती आसीत् । सपत्न्योरित्यत्र समासान्तर्गतस्य पत्युरुपमानं वारणस्येति ॥ ५७ ॥

ताभिरिति । ताभिः कौसल्यादिभिः प्रजानां भूत्यै अभ्युदयाय देवस्य विष्णोः अंशः सम्भवः कारणं यस्य सः गर्भः, सूर्य्यस्य इमाः सौर्य्यः ताभिः सौरीभिः। सूर्य्यतिष्येत्युपधायकारस्य लोपः । अमृता इत्याख्या यासां ताभिः जलवहनसाम्यात् नाडीभिरिव नाडीभिः हृष्टिविसर्ज्जनोभिः दीधीतिभिः अपां विकारः अम्मयः जलमयः गर्भः इव दध्रे धृतः । जातावेकवचनं गर्भा दधिरे इत्यर्थः । अत्र यादवः—"तासां शतानि चत्वारि रश्मीनां हृष्टिसर्ज्जने । शतत्रयं हिमोत्सर्गे तावद्गर्भस्य सर्ज्जने ।

सममापन्नसत्त्वास्ताः रेजुरापाण्डुरत्विषः।
अन्तर्गतफलारम्भाः शस्यानामिव सम्पदः॥ ५८॥

गुप्तं ददृशुरात्मानं सर्व्वाः स्वप्नेषु वामनैः।
जलजासिगदाशार्ङ्ग-चक्रलाञ्छितमूर्त्तिभिः॥ ६०॥

हेमपक्षप्रभाजालं गगणे च वितन्वता।
उह्यन्ते स्म सुपर्णेन वेगाकृष्टपयोमुचा॥ ६१॥

बिभ्रत्या कौस्तुभन्यासं स्तनान्तरविलम्बिनम्।

आनन्दाय हि मेध्याय भूतनाः पूतना इति। चतुःशतं वृष्टि-वाहास्ताः सर्व्वा अमृताः स्त्रियः॥" इति॥ ५८॥

सममिति। समं युगपत् आपन्नाः गृहीताः सत्त्वाः याभिः ताः आपन्नसत्त्वाः गर्भिण्यः। "आपन्नसत्त्वा स्याद् गुर्व्विण्यन्तर्वत्नी च गर्भिणी" इत्यमरः। अत एव आपाण्डुरत्विषः पाण्डुरवर्णाः ताः राजपत्न्यः अन्तर्गताः फलारम्भाः फलप्रादुर्भावाः यासां ताः, शस्यानां सम्पदः इव, रेजुः बभुः॥ ५९॥

सम्प्रति तासां स्वप्नदर्शनान्याह, गुप्तमिति। सर्व्वाः ताः स्वप्नेषु जलजः शङ्खः, जलजासिगदाशार्ङ्गचक्रैः लाञ्छिताः मूर्त्तयः येषां तैः वामनैः ह्रस्वैः पुरुषैः गुप्तं रक्षितम् आत्मानं स्वरूपं ददृशुः॥ ६०॥

हेमेति। किञ्चेति चार्थः। हेम्नः सुवर्णस्य पक्षाणां प्रभा-जालं कान्तिपुञ्जं वितन्वता विस्तारयता वेगेन आकृष्टाः पयो-मुचः मेघाः येन तेन सुपर्णेन गरुत्मता गगणे ताः उह्यन्ते स्म ऊढ़ाः॥ ६१॥

बिभ्रत्येति। किञ्च, स्तनयोः अन्तरे मध्ये विलम्बिनं लम्ब

पर्य्युपास्यन्त लक्ष्म्या च पद्मव्यजनहस्तया ॥ ६२ ॥
कृताभिषेकैर्दिव्यायां त्रिस्रोतसि च सप्तभिः।
ब्रह्मर्षिभिः परं ब्रह्म गृणद्भिरुपतस्थिरे ॥ ६३ ॥
ताभ्यस्तथाविधान् स्वप्नान् श्रुत्वा प्रीतो हि पार्थिवः।
मेने परार्द्ध्यमात्मानं गुरुत्वेन जगद्गुरोः ॥ ६४ ॥
विभक्तात्मा विभुस्तासामेकः कुक्षिष्वनेकधा।
उवास प्रतिमाचन्द्रः प्रसन्नानामपामिव ॥ ६५ ॥

मानं न्यस्यते इति न्यासः कौस्तुभः एव न्यासः तं पत्या न्यस्तं कौस्तुभम् इत्यर्थः बिभ्रत्या पद्ममेव व्यजनं हस्ते यस्याः तया लक्ष्म्या पर्य्युपास्यन्त उपासिताः ॥ ६२ ॥

कृतेति। किञ्च, दिवि भवायां दिव्यायां त्रिस्रोतसि आकाशगङ्गायां कृताभिषेकैः कृतावगाहैः परं ब्रह्म वेदरहस्यं गृणद्भिः पठद्भिः सप्तभिः ब्रह्मर्षिभिः कश्यपप्रभृतिभिः उपतस्थिरे उपासाञ्चक्रिरे ॥ ६३ ॥

ताभ्य इति। पार्थिवः दशरथः ताभ्यः पत्नीभ्यः। आख्यातोपयोग इत्यपादानत्वात् पञ्चमी। तथाविधान् उक्तप्रकारान् स्वप्नान् श्रुत्वा प्रीतः सन् आत्मानं जगद्गुरोः विष्णोः अपि गुरुत्वेन हेतुना परार्द्ध्यं सर्व्वोत्कृष्टं मेने हि ॥ ६४ ॥

विभक्तेति। एकः एकरूपः विभुः विष्णुः तासां राजपत्नीनां कुक्षिषु गर्भेषु, प्रसन्नानां निर्म्मलानाम् अपां कुक्षिषु प्रतिमाचन्द्रः प्रतिबिम्बचन्द्रः इव अनेकधा विभक्तात्मा सन् उवास ॥ ६५ ॥

अथाग्रमहिषी राज्ञः प्रसूतिसमये सती।
पुत्त्रं तमोपहं लेभे नक्तं ज्योतिरिवौषधिः॥ ६६॥
राम इत्यभिरामेण वपुषा तस्य चोदितः।
नामधेयं गुरुश्चक्रे जगत्प्रथममङ्गलम्॥ ६७॥
रघुवंशप्रदीपेन तेनाप्रतिमतेजसा।
रक्षागृहगता दीपाः प्रत्यादिष्टा इवाभवन्॥ ६८॥
शय्यागतेन रामेण माता शातोदरी बभौ।

अथेति। अथ राज्ञः दशरथस्य सती पतिव्रता अग्रा चासौ महिषी च अग्रमहिषी कौसल्या प्रसूतिसमये प्रसूतिकाले, ओषधिः नक्तं रात्रिसमये तमः अपहन्तीति तमोपहम्। अपे क्लेशतमसोरिति डप्रत्ययः। ज्योतिः इव, तमोपहं तमोनाशकरं पुत्रं लेभे प्राप॥ ६६॥

राम इति। अभिरमते अत्र इति अभिरामं मनोहरम्। अधिकरणार्थे घञ्। तेन वपुषा चोदितः प्रेरितः गुरुः पिता दशरथः तस्य पुत्रस्य जगतां प्रथमं मङ्गलं सुलक्षणं रामः इति नामधेयं चक्रे। अभिरामत्वमेव रामशब्दप्रवृत्तिनिमित्तम् इत्यर्थः॥ ६७॥

रघ्विति। रघुवंशस्य प्रदीपेन प्रकाशकेन अप्रतिमतेजसा तेन रामेण रक्षागृहगताः सूतिकागृहगताः दीपाः प्रत्यादिष्टाः प्रतिबद्धा इव अभवन्। महादीपसमीपे नाल्पाः स्फुरन्ति इति भावः॥ ६८॥

शय्येति। शातोदरी गर्भमोचनात् कृशोदरी माता शय्-

सैकताम्भोजबलिना जाह्नवीव शरत्कृशा ॥ ६९ ॥
कैकेय्यास्तनयो जज्ञे भरतो नाम शीलवान्।
जनयित्रीमलञ्चक्रे यः प्रश्रय इव श्रियम् ॥ ७० ॥
सुतौ लक्ष्मणशत्रुघ्नौ सुमित्रा सुषुवे यमौ।
सम्यगाराधिता विद्या प्रबोधविनयाविव ॥ ७१ ॥
निर्दोषमभवत् सर्व्वमाविष्कृतगुणं जगत्।
अन्वगादिव हि स्वर्गः गां गतं पुरुषोत्तमम् ॥ ७२ ॥

गतेन रामेण, सैकते पुलिने यः अम्भोजवलिः पद्मोपहारः तेन शरदि कृशा जाह्नवी गङ्गा इव, बभौ ॥ ६९ ॥

कैकेय्या इति। केकयस्य राज्ञः अपत्यं स्त्री कैकेयी। तस्यापत्यमित्यणि कृते केकयमित्रयुप्रलयानां यादेरिय इतीयादेशः। तस्याः भरतः नाम शीलवान् तनयः यज्ञे जातः, यः तनयः, प्रश्रयः विनयः श्रियम् इव, जनयित्रीं मातरम् अलञ्चक्रे ॥ ७० ॥

सुताविति। सुमित्रा लक्ष्मणशत्रुघ्नौ नाम यमौ युग्मजातौ सुतौ पुत्रौ, सम्यगाराधिता स्वभ्यस्ता विद्या प्रबोधविनयौ तत्त्वज्ञानेन्द्रियजयौ इव सुषुवे ॥ ७१ ॥

निर्दोषमिति। सर्व्वं जगत् भूलोकः निर्दोषं दुर्भिक्षादिदोषरहितम् आविष्कृतगुणं प्रकटीकृतारोग्यादिगुणं च अभवत्। अत्रोत्प्रेक्ष्यते, गां भुवं गतम् अवतीर्णं पुरुषोत्तमं विष्णुं स्वर्गः अपि अन्वगात् इव, स्वर्गो हि गुणवान् निर्दोषश्चेत्यागमः, स्वर्गतुल्यमभूत् इत्यर्थः ॥ ७२ ॥

तस्योदये चतुर्मूर्त्तेः पौलस्त्यचकितेश्वराः।
विरजस्कैर्नभस्वद्भिर्दिश उच्छ्वसिता इव ॥ ७३ ॥
कृशानुरपधूमत्वात् प्रसन्नत्वात् प्रभाकरः।
रक्षोविप्रकृतावास्तामपविद्धशुचाविव ॥ ७४ ॥
दशाननकिरीटेभ्यस्तत्क्षणं राक्षसश्रियः।
मणिव्याजेन पर्य्यस्ताः पृथिव्यामश्रुविन्दवः ॥ ७५ ॥
पुत्रजन्मप्रवेश्यानां तूर्य्याणां तस्य पुत्रिणः।

तस्येति। चतुर्मूर्त्तेः रामादिरूपेण चतूरूपस्य सतः तस्य हरेः उदये सति पौलस्त्यात् रावणात् चकिताः भीताः ईश्वराः नाथाः इन्द्रादयः यासां ताः दिशः चतस्रः विरजस्कैः अपधूलिभिः नभस्वद्भिः वायुभिः मिषेण उच्छ्वसिताः इव इत्युत्प्रेक्षा श्वसेः कर्त्तरि क्तः। स्वनाथशरणलाभसन्तुष्टानां दिशामुच्छ्वासवाता इव वाता ववुः इत्यर्थः। चतुर्दिगीशरक्षणं मूर्त्तिचतुष्टयप्रयोजनम् इति भावः ॥ ७३ ॥

कृशानुरिति। रक्षसा रावणेन विप्रकृतौ पीड़ितौ इत्यर्थः कृशानुः अग्निः प्रभाकरः सूर्य्यश्च यथासङ्ख्यम् अपधूमत्वात् प्रसन्नत्वाच्च अपविद्धशुचौ निरस्तदुःखौ इव आस्ताम् अभवताम् ॥ ७४ ॥

दशाननेति। तत्क्षणं तस्मिन् क्षणे रामोत्पत्तिसमये राक्षसश्रियः अश्रुविन्दवः दशाननकिरीटेभ्यः मणीनां व्याजेन मिषेण पृथिव्यां पर्य्यस्ताः पतिताः रामोदये सति तद्वध्यस्य रावणस्य किरीटमणिभ्रंशलक्षणं दुर्निमित्तमभूत् इत्यर्थः ॥ ७५

पुत्रेति। पुत्रिणः जातपुत्रस्य तस्य दशरथस्य . .न

आरम्भं प्रथमं चक्रुर्देवदुन्दुभयो दिवि ॥ ७६ ॥
सन्तानकमयी वृष्टिर्भवने चास्य पेतुषी ।
सन्मङ्गलोपचाराणां सैवादिरचनाऽभवत् ॥ ७७ ॥
कुमाराः कृतसंस्कारास्ते धात्रीस्तन्यपायिनः ।
आनन्देनाग्रजेनेव समं ववृधिरे पितुः ॥ ७८ ॥
स्वाभाविकं विनीतत्वं तेषां विनयकर्म्मणा ।
मुमूर्च्छ सहजं तेजो हविषेव हविर्भुजाम् ॥ ७९ ॥

प्रवेश्यानां प्रवेशयितव्यानां वादनीयानाम् इत्यर्थः तूर्य्याणां वाद्यानाम् आरम्भम् उपक्रमं प्रथमं दिवि देवदुन्दुभयः चक्रुः पितुर्दशरथादपि देवा अधिकं प्रहृष्टाः इत्यर्थः ॥ ७६ ॥

सन्तानकेति । अस्य राज्ञः भवने सन्तानकानां कल्पवृक्ष-कुसुमानां विकारः सन्तानकमयी वृष्टिश्च पेतुषी पपात । क्वसुश्चेति क्वसुप्रत्ययः उगितश्चेति ङीप् । सा वृष्टिः एव सन्तः पुत्रजन्मनि आवश्यकाः ये मङ्गलोपचाराः तेषाम् आदिरचना प्रथमक्रिया अभवत् ॥ ७७ ॥

कुमारा इति । कृताः संस्काराः जातकर्म्मादयः येषां ते धात्रीनाम् उपमातृणां स्तन्यानि पयांसि पिवन्तीति तथोक्ताः ते कुमाराः अग्रजेन ज्येष्ठेन इव स्थितेन पितुः आनन्देन समं ववृधिरे कुमारवृद्ध्या पिता महान्तमानन्दमवाप इत्यर्थः । कुमारजन्मनः प्रागेव जातत्वादग्रजत्वोक्तिरानन्दस्य ॥ ७८ ॥

स्वाभाविकमिति । तेषां कुमाराणां सम्बन्धि स्वाभाविकं सहजं विनीतत्वं विनयकर्म्मणा शिक्षया हविर्भुजाम् अग्नीनां

परस्पराविरुद्धास्ते तद्रघोरनघं कुलम् ।
अलमुद्योतयामासुर्देवारण्यमिवर्त्तवः ॥ ८० ॥
समानेऽपि हि सौभ्रात्रे यथोभौ रामलक्ष्मणौ ।
तथा भरतशत्रुघ्नौ प्रीत्या द्वन्द्वं वभूवतुः ॥ ८१ ॥
तेषां द्वयोर्द्वयोरैक्यं विभिदे न कदाचन ।
यथा वायुविभावस्वोर्यथा चन्द्रसमुद्रयोः ॥ ८२ ॥

सहजं तेजः हविषा आज्यादिकेन इव मुमूर्च्छे वद्द्धे निसर्गसंस्काराभ्यां विनीताः इत्यर्थः ॥ ७९ ॥

परस्परेति। परस्परम् अविरुद्धाः अविद्विष्टाः सौभ्रात्रगुणवन्तः इत्यर्थः ते कुमाराः तत्प्रसिद्धम् अनघं निष्पापं रघोः कुलम्, ऋतवः वसन्तादयः देवारण्यं नन्दनम् इव। सहजविरोधिनामपि ऋतूनां सहावस्थानसम्भावनार्थं देवविशेषणम्। अलम् अत्यन्तम् उद्योतयामासुः प्रकाशयामासुः। सौभ्रात्रवन्तः कुलभूषणायन्ते इति भावः ॥ ८० ॥

समान इति। शोभनाः स्निग्धाः भ्रातरः येषां ते सुभ्रातरः। नद्यृतश्चेति कप् न भवति वन्दिते भ्रातुरिति निषेधात्। तेषां भावः सौभ्रात्रम्। युवादित्वादण्। तस्मिन् समाने चतुर्णां तुल्येऽपि यथा उभौ रामलक्ष्मणौ प्रीत्या द्वन्द्वं बभूवतुः तथा भरतशत्रुघ्नौ प्रीत्या द्वन्द्वं द्वौ द्वौ साहचर्येणाभिव्यक्तौ। द्वन्द्वं रहस्यमर्यादेति निपातः। क्वचित् कस्यचित् स्नेहोऽतिरिच्यते इति भावः ॥ ८१ ॥

तेषामिति। तेषां चतुर्णां मध्ये द्वयोः द्वयोः रामलक्ष्मणयो र्भरतशत्रुघ्नयोश्च इत्यर्थः। यथा वायुविभावस्वोः

ते प्रजानां प्रजानाथास्तेजसा प्रश्रयेण च ।
मनो जह्रुर्निदाघान्ते श्यामाभ्रा दिवसा इव ॥ ८३ ॥
स चतुर्द्धा बभौ व्यस्तः प्रसवः पृथिवीपतेः ।
धर्म्मार्थकाममोक्षाणामवतार इवाङ्गवान् ॥ ८४ ॥
गुणैराराधयामासुस्ते गुरुं गुरुवत्सलाः ।
तमेव चतुरन्तेशं रत्नैरिव महार्णवाः ॥ ८५ ॥

इव, यथा चन्द्रसमुद्रयोः इव, ऐक्यम् ऐकमत्यं कदाचन न विभिदे। एककार्य्यत्वं समानसुखदुःखत्वञ्च क्रमादुपमाद्वयाल्लभ्यते, सहजः सहकारी हि वह्नेर्वायुः चन्द्रवृद्धौ हि वर्द्धते सिन्धुः तत्क्षये च क्षीयते इति ॥ ८२ ॥

त इति । प्रजानाथाः ते कुमाराः तेजसा प्रभावेण प्रश्रयेण विनयेन च, निदाघान्ते ग्रीष्मान्ते श्यामानि अभ्राणि येषां ते श्यामाभ्राः नातिशीतोष्णाः इत्यर्थः दिवसाः इव, प्रजानां मनः जह्रुः ॥ ८३ ॥

स इति । सः चतुर्द्धा । संख्याया विधार्थे इत्यनेन धाच्प्रत्ययः । व्यस्तः विभक्तः पृथिवीपतेः दशरथस्य प्रसवः सन्तानः, चतुर्द्धा अङ्गवान् मूर्त्तिमान् धर्म्मार्थकाममोक्षाणाम् अवतारः इव, बभौ ॥ ८४ ॥

गुणैरिति । गुरुवत्सलाः पितृभक्ताः ते कुमाराः गुणैः विनयादिभिः गुरुं पितरम्, चतुरन्तानां दिगन्तानाम् ईशं चतुरन्तेशम् । तद्धितार्थेत्यादिना उत्तरपदसमासः । तं दशरथम् एव, महार्णवाः चत्वारः रत्नैः इव, आराधयामासुः ॥ ८५ ॥

सुरगज इव दन्तैर्भग्नदैत्यासिधारै
र्नय इव पणबन्धव्यक्तयोगैरुपायैः ।
हरिरिव युगदीर्घैर्दोर्भिरंशैस्तदीयैः
पतिरवनिपतीनां तैश्चकाशे चतुर्भिः ॥८६॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ
रामावतारो नाम दशमः सर्गः ।

---

सुरगज इति। भग्नाः दैत्यानाम् असिधाराः यैः तैः चतुर्भिः दन्तैः सुरगजः ऐरावतः इव, पणबन्धेन फलसिद्धा व्यक्तयोगैः अनुमितप्रयोगैः उपायैः चतुर्भिः सामादिभिः नयः नीतिः इव, युगवत् दीर्घैः चतुर्भिः दोर्भिः भुजैः हरिः विष्णुः इव, तदीयैः हरिसम्बन्धिभिः अंशैः अंशभूतैः चतुर्भिः तैः पुत्रैः अवनिपतीनां पतिः राजराजः दशरथः चकाशे दिदियुते ॥ ८६ ॥

इति श्रीमहामहोपाध्याय-कोलाचलमल्लिनाथसूरिविरचितायां
रघुवंशटीकायां सञ्जीवनी-समाख्यायां दशमः सर्गः ।

---

## एकादशः सर्गः ।

कौशिकेन स किल क्षितीश्वरः
रामसध्वरविघातशान्तये ।
काकपक्षधरमेत्य याचित
स्तेजसां हि न वयः समीक्ष्यते ॥ १ ॥
कृच्छ्रलब्धमपि लब्धवर्णभाक्
तं दिदेश मुनये सलक्ष्मणम् ।

रामचन्द्रचरणारविन्दयोरन्तरङ्गचरभृङ्गलीलया ।
तत्र सन्ति हि रसाश्चतुर्विधास्तान् यथारुचि सदैव निर्विश ॥

कौशिकेनेति । कौशिकेन कुशिकापत्येन विश्वामित्रेण एत्य अभ्यागत्य सः क्षितीश्वरः दशरथः अध्वरविघातशान्तये यज्ञविघ्नविध्वंसाय काकपक्षधरं बालकोचितशिखाधरम् । "बाला नान्तु शिखा प्रोक्ता काकपक्षः शिखण्डकः" इति हलायुधः । रामं याचितः किल प्रार्थितः खलु । याचेर्द्विकर्मकादप्रधाने कर्मणि क्तः अप्रधाने दुहादीनामिति वचनात् । नायं बालाधिकार इत्याशङ्क्याह, तेजसां तेजस्विनां वयः बाल्यादि न समीक्ष्यते हि, अप्रयोजकम् इत्यर्थः । अत्र सर्गे रथोद्धता वृत्तम् । उक्तञ्च, "रान्नराविह रथोद्धता लगौ" इति ॥ १ ॥

कृच्छ्रलब्धमिति । लब्धाः वर्णाः प्रसिद्धयः यैः ते लब्धवर्णाः विचक्षणाः । "लब्धवर्णो विचक्षणः" इत्यमरः । तान् भजते

अप्यसुप्रणयिनां रघोः कुले
न व्यहन्यत कदाचिदर्थिता ॥ २ ॥
यावदादिशति पार्थिवस्तयो
र्निर्गमाय पुरमार्गसंस्क्रियाम् ।
तावदाशु विदधे मरुत्सखैः
सा सपुष्पजलवर्षिभिर्घनैः ॥ ३ ॥
तौ निदेशकरणोद्यतौ पितु
र्धन्विनौ चरणयोर्निपेततुः ।

इति लब्धवर्णभाक् विद्वत्सेवी इत्यर्थः सः राजा कृच्छ्रलब्धम् अपि सलक्ष्मणं तं रामं मुनये दिदेश अतिसृष्टवान्। तथाहि, असुप्रणयिनां प्राणार्थिनाम् अपि अर्थिता याच्ञा रघोः कुले कदाचित् न व्यहन्यत न विहता न विफलीकृता इत्यर्थः। यैरर्थिभ्यः प्राणा अपि समर्प्यन्ते तेषां पुत्रादित्यागो न विस्मयावहः इति भावः ॥ २ ॥

यावदिति। पार्थिवः पृथिवीश्वरः तयोः रामलक्ष्मणयोः निर्गमाय निष्क्रमाय पुरमार्गसंस्क्रियां धूलिसंमार्ज्जनगन्धोदकसेचनपुष्पोपहाररूपसंस्कारं यावत् आदिशति आज्ञापयति तावत् मरुत्सखैः वायुसखैः, अनेन धूलिसंमार्ज्जनं गम्यते, सपुष्पजलवर्षिभिः पुष्पसहितजलवर्षिभिः घनैः सा मार्गसंस्क्रिया आशु विदधे विहिता। एतेन देवकार्य्यप्रवृत्तयोर्दैवानुकूल्यं सूचितम् ॥ ३ ॥

ताविति। निदेशकरणोद्यतौ पित्राज्ञाकरणोद्युक्तौ धन्विनौ धनुष्मन्तौ तौ कुमारौ पितुः चरणयोः निपेततुः प्रणतौ इत्यर्थः।

भूपतेरपि तयोः प्रवत्स्यतो
र्नम्रयोरुपरि वाष्पबिन्दवः ॥ ४ ॥
तौ पितुर्नयनजेन वारिणा
किञ्चिदुक्षितशिखण्डकावुभौ ।
धन्विनौ तमृषिमन्वगच्छतां
पौरदृष्टिकृतमार्गतोरणौ ॥ ५ ॥
लक्ष्मणानुचरमेव राघवं
नेतुमैच्छदृषिरित्यसौ नृपः ।
आशिषं प्रयुयुजे न वाहिनीं
सा हि रक्षणविधौ तयोः क्षमा ॥ ६ ॥

भूपतेः अपि वाष्पबिन्दवः प्रवत्स्यतोः प्रवासं करिष्यतोः अत एव नम्रयोः प्रणतयोः । नमिकम्पीति रप्रत्ययः । तयोः उपरि निपेतुः पतिताः ॥ ४ ॥

ताविति । पितुः नयनजेन वारिणा किञ्चिदुक्षितशिखण्डकौ ईषत्सिक्तचूडौ । "शिखा चूडा शिखण्डः स्यात्" इत्यमरः । शेषाद्विभाषेति कप्प्रत्ययः धन्विनौ तौ उभौ पौरदृष्टिभिः कृतानि मार्गतोरणानि सम्पाद्यानि कुवलयानि ययोः तौ तथोक्तौ संघशो निरीक्ष्यमाणौ इत्यर्थः तम् ऋषिम् अन्वगच्छताम् ॥ ५ ॥

लक्ष्मणेति । ऋषिः लक्ष्मणानुचरम् एव लक्ष्मणमात्रानुचरं तं राघवं नेतुम् ऐच्छत् इति हेतोः असौ नृपः आशिषं प्रयुयुजे प्रयुक्तवान् वाहिनीं सेनां न प्रयुयुजे न प्रेषितवान्, हि यस्मात् सा आशीः एव तयोः कुमारयोः रक्षणविधौ क्षमा शक्ता ॥ ६ ॥

मातृवर्गचरणस्पृशौ मुने
स्तौ प्रपद्य पदवीं महौजसः ।
रेजतुर्गतिवशात् प्रवर्त्तिनौ
भास्करस्य मधुमाधवाविव ॥ ७ ॥

वीचिलोलभुजयोस्तयोर्गतं
शैशवाच्चपलमप्यशोभत ।
तोयदागम इवोद्ध्यभिद्ययोः
नामधेयसदृशं विचेष्टितम् ॥ ८ ॥

मातृवर्गेति । मातृवर्गस्य चरणान् स्पृशतः इति मातृवर्गचरणस्पृशौ कृतमातृवर्गनमस्कारौ इत्यर्थः । स्पृशोऽनुदके क्विन्निति क्विन्प्रत्ययः । तौ महौजसः मुनेः पदवीं प्रपद्य, महौजसः भास्करस्य गतिवशात् मेषादिराशिसंक्रान्त्यनुसारात् प्रवर्त्तिनौ मधुमाधवौ इव चैत्रवैशाखौ इव, रेजतुः । फणाञ्च सप्तानामिति वैकल्पिकावेत्वाभ्यासलोपौ । "स्याच्चैत्रे चैत्रिको मधुः" इति, "वैशाखे माधवो राधः" इति च अमरः ॥ ७ ॥

वीचीति । वीचिलोलभुजयोः तरङ्गचञ्चलबाह्वोः । इदं विशेषणं नदोपमानसिद्ध्यर्थं वेदितव्यम् । तयोः चपलं चञ्चलम् अपि गतं गतिः शैशवात् हेतोः अशोभत । किमिव ? तोयदागमे वर्षासमये उज्झति उदकम् इति उद्ध्यः, भिनत्ति कूलम् इति भिद्यः । भिद्योद्ध्यौ नदे इति क्यबन्तौ निपात्यौ । उद्ध्यभिद्ययोः नदविशेषयोः नामधेयसदृशं नामानुरूपं विचेष्टितम् इव उदकोज्झनकूलभेदनरूपव्यापारः इव । समयोत्पन्नं चापल्यमपि शोभते इति भावः ॥ ८ ॥

तौ बलातिबलयोः प्रभावतो
विद्ययोः पथि मुनिप्रदिष्टयोः ।
मम्लतु न मणिकुट्टिमोचितौ
मातृपार्श्वपरिवर्त्तिनाविव ॥ ९ ॥

पूर्व्ववृत्तकथितैः पुराविदः
सानुजः पितृसखस्य राघवः ।
उह्यमान इव वाहनोचितः
पादचारमपि न व्यभावयत् ॥ १० ॥

तौ सरांसि रसवद्भिरम्बुभिः
कूजितैः श्रुतिसुखैः पतत्त्रिणः ।

तौविति । मणिकुट्टिमोचितौ मणिबद्धभूमिसञ्चारोचितौ तौ मुनिप्रदिष्टयोः कौशिकेन उपदिष्टयोः बलातिबलयोः विद्ययोः बलातिबलाख्ययोः मन्त्रयोः प्रभावतः सामर्थ्यात् मातृपार्श्वपरिवर्त्तिनौ इव पथि न मम्लतुः न म्लानौ इत्यर्थः । अत्र रामायणश्लोकः, "क्षुत्पिपासे न ते राम भविष्येते नरोत्तम । बलामतिबलाञ्चैव पठतः पथि राघव ! ॥ ९ ॥

पूर्व्वेति । वाहनोचितः सानुजः राघवः पुराविदः पूर्व्ववृत्ताभिज्ञस्य पितृसखस्य मुनेः पूर्व्ववृत्तकथितैः पुरावृत्तकथाभिः उह्यमानः इव वाहनेन प्राप्यमाणः इव । वहेर्धातोः कर्म्मणि शानच् । पादचारमपि न व्यभावयत् न ज्ञातवान् ॥ १० ॥

ताविति । तौ राघवौ कर्म्मभूतौ सरांसि कर्त्तॄणि रसवद्भिः मधुरैः अम्बुभिः सिषेविरे, पतत्त्रिणः पक्षिणः सुखयन्तीति

वायवः सुरभिपुष्परेणुभि
श्छायया च जलदाः सिषेविरे ॥ ११ ॥
नाम्भसां कमलशोभिनां तथा
शाखिनाञ्च न परिश्रमच्छिदाम् ।
दर्शनेन लघुना यथा तयोः
प्रीतिमापुरुभयोस्तपस्विनः ॥ १२ ॥
स्थाणुदग्धवपुषस्तपोवनं
प्राप्य दाशरथिरात्तकार्म्मुकः ।

सुखानि । पचाद्यच् । श्रुतीनां सुखानि तैः कूजितैः, वायवः सुरभिपुष्परेणुभिः, जलदाः छायया च, सिषेविरे इति सर्वत्र सम्बध्यते ॥ ११ ॥

नेति । तपः एषामस्तीति तपस्विनः । तपःसहस्राभ्यां विनिरिति विनिप्रत्ययः । लघुना इष्टेन । "त्रिष्विष्टेऽपि लघुः" इत्यमरः । तयोः उभयोः कर्म्मभूतयोः दर्शनेन यथा प्रीतिम् आपुः, तथा कमलशोभिनाम् अम्भसां दर्शनेन न आपुः, परिश्रमच्छिदां शाखिनां दर्शनेन च न आपुः ॥ १२ ॥

स्थाण्विति । सः आत्तकार्म्मुकः दशरथस्यापत्यं पुमान् दाशरथिः रामः । अत इञिति इञ्प्रत्ययः । स्थाणुः हरः । "स्थाणुः कीले हरे स्थिरे" इति विश्वः । तेन दग्धवपुषः मदनस्य तपोवनं प्राप्य चारुणा विग्रहेण कायेन । "विग्रहः समरे काये" इति विश्वः । प्रतिनिधिः प्रतिकृतिः सदृशः अभवत् कर्म्मणा न पुनः । देहेन मदनसुन्दरः इति भावः ॥ १३ ॥

विग्रहेण मदनस्य चारुणा
सोऽभवत् प्रतिनिधि र्न कर्म्मणा ॥१३॥
तौ सुकेतुसुतया खिलीकृते
कौशिकाद्विदितशापया पथि।
निन्यतुः स्थलनिवेशिताटनी
लीलयैव धनुषी अधिज्यताम् ॥ १४ ॥
ज्यानिनादमथ गृह्णती तयोः
प्रादुरास बहुलक्षपाच्छविः।

तावितिः। अत्र रामायणवचनम्, "अगस्त्यः परमः क्रुद्धस्ताड़कामभिशप्तवान्। पुरुषादी महायक्षी विकृता विकृतानना। इदं रूपमपाहाय दारुणं रूपमस्तु ते ॥" इति। तदेतदाह, विदितशापयेति। कौशिकात् आख्यातुः। आख्यातोपयोग इत्यपादानात् पञ्चमी। विदितशापया सुकेतुसुतया ताड़कया खिलीकृते पथि। "खिलमप्रहतं स्थानम्" इति हलायुधः। तौ रामलक्ष्मणौ स्थले निवेशिते अटनी धनुःकोटी याभ्यां तौ तथोक्तौ। "कोटिरस्याटनिः" इत्यमरः। लीलया एव धनुषी अधिकृते ज्ये मौर्व्यौ ययोः ते अधिज्ये। "ज्या मौर्व्वी मातृभूमिषु" इति विश्वः। तयोर्भावः तत्ताम् अधिज्यतां निन्यतुः नीतवन्तौ। नयतिर्द्विकर्म्मकः॥ १४ ॥

ज्येति। अथ तयोः ज्यानिनादं गृह्णती जानती शृण्वती इत्यर्थः, बहुलक्षपाच्छविः कृष्णपक्षरात्रिवर्णा। "बहुलः कृष्णपक्षे च" इति विश्वः। चले कपाले एव कुण्डले यस्याः सा

ताड़का चलकपालकुण्डला
कालिकेव निविड़ा बलाकिनी ॥ १५ ॥
तीव्रवेगधुतमार्गवृक्षया
प्रेतचीवरवसा स्वनोग्रया ।
अभ्यभावि भरताग्रजस्तया
वात्ययेव पितृकाननोत्थया ॥ १६ ॥
उद्यतैकभुजयष्टिमायतीं
श्रोणिलम्बिपुरुषान्त्रमेखलाम् ।

तथोक्ता ताड़का, निविड़ा सान्द्रा बलाकिनी बलाकावती । व्रीह्यादिभ्यश्चेतीनिः । कालिका इव घनावली इव । "कालिका योगिनीभेदे कार्ष्ण्ये गौर्य्यां घनावली" इति विश्वः । प्रादुरास आदुर्बभूव ॥ १५ ॥

तीव्रेति । तीव्रवेगेन धुताः कम्पिताः मार्गवृक्षाः यया तथोक्तया, प्रेतचीवराणि वस्ते इति प्रेतचीवरवाः तया प्रेतचीवरवसा । वसतेराच्छादनार्थात् क्विप् । स्वनेन सिंहनादेन उग्रया तया ताड़कया पितृकानने श्मशाने उत्था उत्पन्ना । आतश्चोपसर्गे इति उत्पूर्व्वात् तिष्ठतेः कर्त्तरि कप्रत्ययः । तया वात्यया इव वातसमूहेन इव । पाशादिभ्यो य इति यः । भरताग्रजः रामः अभ्यभावि अभिभूतः । कर्म्मणि लुङ् । तीव्रवेगेत्यादिविशेषणानि वात्यायामपि योज्यानि ॥ १६ ॥

उद्यतेति । उद्यता उन्नमिता एकः भुजः एव यष्टिः यस्याः ताम् आयतीम् आयान्तीम् । इणो धातोः शतरि उगितश्चेति

तां विलोक्य वनितावधे घृणां
पत्त्रिणा सह मुमोच राघवः ॥ १७ ॥
यच्चकार विवरं शिलाघने
ताडकोरसि स रामसायकः ।
अप्रविष्टविषयस्य रक्षसां
द्वारतामगमदन्तकस्य तत् ॥ १८ ॥
बाणभिन्नहृदया निपेतुषी
सा स्वकाननभुवं न केवलाम् ।

ङीप् । श्रोणिलम्बिनी पुरुषाणाम् अन्त्राणि एव मेखला यस्याः ताम् । विशेषणद्वयेनापि आततायित्वं सूचितम् । अत एव तां विलोक्य राघवः वनितावधे घृणां जुगुप्सां करुणां वा । "जुगुप्सा-करुणे घृणे" इत्यमरः । पत्त्रिणा इषुणा सह । "पत्त्री रोप इषुर्द्वयोः" इत्यमरः । मुमोच मुक्तवान् । आततायिवधे मनुः, "आततायिनमायान्तं हन्यादेवाविचारयन् । नाततायिवधे दोषो हन्तुर्भवति कश्चन ॥" इति ॥ १७ ॥

यदिति । सः रामसायकः शिलावत् घने सान्द्रे ताडकोरसि यत् विवरं रन्ध्रं चकार तत् विवरं रक्षसाम् अप्रविष्टविषयस्य अप्रविष्टरक्षोदेशस्य इत्यर्थः । सापेक्षत्वेऽपि गमकत्वात् समासः । "विषयः स्यादिन्द्रियार्थे देशे जनपदेऽपि च" इति विश्वः । अन्तकस्य यमस्य द्वारताम् अगमत् । इयं प्रथमा रक्षो-मृतिः इति भावः ॥ १८ ॥

बाणेति । बाणभिन्नहृदया निपेतुषी निपतिता सती ।

विष्टप-त्रय-पराजयस्थिरां
रावणश्रियमपि व्यकम्पयत्॥ १९॥
राममन्मथशरेण ताड़िता
दुःसहेन हृदये निशाचरी।
गन्धवद्रुधिरचन्दनोक्षिता
जीवितेशवसतिं जगाम सा॥ २०॥
नैर्ऋतघ्नमथ मन्त्रवन्मुनेः
प्रापदस्त्रमवदानतोषितात्।

क्सुयेति क्सुप्रत्ययः, उगितश्चेति ङीप्। सा केवलाम् एकाम्। "निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः" इत्यमरः। स्वकाननभुवं न व्यकम्पयत्, किन्तु विष्टपत्रयस्य लोकत्रयस्य पराजयेन स्थिरां रावणश्रियम् अपि व्यकम्पयत्। ताड़कावध-श्रवणेन रावणस्यापि भयमुत्पन्नम् इति भावः॥ १९॥

अत्र ताड़कायाः अभिसारिकायाः समाधिरभिधीयते, रामेति। सा निशासु चरतीति निशाचरी राक्षसी अभिसारिका च दुःसहेन सोढुमशक्येन रामः एव मन्मथः अन्यत्र अभिरामः मन्मथः तस्य शरेण हृदये उरसि मनसि च। "हृदयं मन-उरसोः इति विश्वः। ताड़िता विद्धा गन्धवत् दुर्गन्धि यत् रुधिरम् असृक् तत् एव चन्दनं तेन उक्षिता लिप्ता अपरत्र गन्धवती सुगन्धिनी ये रुधिरचन्दने कुङ्कुमचन्दने ताभ्याम् उक्षिता। "रुधिरं कुङ्कुमास्रजोः" इत्युभयत्रापि विश्वः। जीवितेशस्य अन्तकस्य प्राणेश्वरस्य च वसतिं जगाम॥ २०॥

नैर्ऋतेति। अथ अनन्तरं ताड़कान्तकः रामः अवदानं

ज्योतिरिन्धननिपाति भास्करात्
सूर्य्यकान्त इव ताड़कान्तकः ॥ २१ ॥

वामनाश्रमपदं ततः परं
पावनं श्रुतमृषेरुपेयिवान् ।
उन्मनाः प्रथमजन्मचेष्टिता-
न्यस्मरन्नपि बभूव राघवः ॥ २२ ॥

आससाद मुनिरात्मनस्ततः
शिष्यवर्गपरिकल्पितार्हणाम् ।

राक्रमः । "पराक्रमोऽवदानं स्यात्" इति भागुरिः । तेन षितात् मुनेः, नैऋतान् राक्षसान् हन्तीति नैऋतघ्नम् । मनुष्यकर्त्तृके चेति टक् । मन्त्रवत् मन्त्रयुक्तम् अस्त्रं सूर्य्यकान्तः णिविशेषः, भास्करात् इन्धनानि निपातयति इति इन्धन-पाति काष्ठदाहकं ज्योतिः इव, प्रापत् प्राप्तवान् ॥ २१ ॥

वामनेति । ततः परं राघवः ऋषेः कौशिकात् आख्यातुः तं पावनं शोधनं वामनस्य स्वपूर्व्वावतारविशेषस्य आश्रम-दम् उपेयिवान् उपगतः सन् । उपेयिवाननाश्वाननूचानश्चेति निपातः । प्रथमजन्मचेष्टितानि रामवामनयोरैक्यात् स्मृति-योग्यान्यपि रामस्याज्ञानावतारत्वेन संस्कारदौर्व्वल्यादस्मरन्नपि उन्मनाः उत्सुकः बभूव ॥ २२ ॥

आससादेति । ततः मुनिः शिष्यवर्गेण परिकल्पिता सज्जि-ता अर्हणा पूजासामग्री यस्मिन् तत् तथोक्तं बद्धाः पल्लवपुटाः एव अञ्जलयः यैः ते तथाभूताः द्रुमाः यस्मिन् तत् तथोक्तं दर्श-

बद्धपल्लवपुटाञ्जलिद्रुमं
दर्शनोन्मुखमृगं तपोवनम् ॥ २३ ॥

तत्र दीक्षितमृषिं ररक्षतु-
र्विघ्नतो दशरथात्मजौ शरैः ।
लोकमन्धतमसात् क्रमोदितौ
रश्मिभिः शशिदिवाकराविव ॥ २४ ॥

वीक्ष्य वेदिमथ रक्तविन्दुभि-
र्बन्धुजीवपृथुभिः प्रदूषिताम् ।

नेन मुनिदर्शनेन उन्मुखाः मृगाः यस्मिन् तत् आत्मनः तपोवनम् आससाद । एतेन विशेषणत्रयेणातिथिसत्कारताच्छील्य-विनय-शान्तयः सूचिताः ॥ २३ ॥

तत्रेति । तत्र तपोवने दशरथात्मजौ दीक्षितं दीक्षासंस्कृतम् ऋषिं शरैः विघ्नतः विघ्नेभ्यः, क्रमेण पर्यायेण रात्रिदिवसयोः उदितौ शशिदिवाकरौ रश्मिभिः अन्धतमसात् गाढ़ध्वान्तात् । "ध्वान्ते गाढ़ेऽन्धतमसम्" इत्यमरः । अवसमन्धेभ्यस्तमस इति समासान्तोऽच्प्रत्ययः । लोकम् इव, ररक्षतुः रक्षणप्रवृत्तावभूताम् इत्यर्थः ॥ २४ ॥

वीक्ष्येति । अथ बन्धुजीवपृथुभिः बन्धुजीवकुसुमस्थूलैः । "रक्तकस्तु बन्धूको बन्धूजीवकः" इत्यमरः । रक्तविन्दुभिः प्रदूषिताम् उपहतां वेदिं वीक्ष्य अपोढ़कर्म्मणां त्यक्तव्यापाराणां च्युताः विकङ्कतस्रुचः येभ्यः तेषाम् ऋत्विजां याजकानां सम्भ्रमः अभवत्। विकङ्कतग्रहणं खदिराद्युपलक्षणं स्रुगादीनां खदिरादिप्रकृतिक-

सम्भ्रमोऽभवदपोढकर्म्मणा-
मृत्विजां च्युतविकङ्कतस्रुचाम् ॥ २५ ॥
उन्मुखः सपदि लक्ष्मणाग्रजो
बाणमाश्रयमुखात् समुद्धरन् ।
रक्षसां बलमपश्यदम्बरे
गृध्रपक्षपवनेरितध्वजम् ॥ २६ ॥
तत्र यावधिपती मखद्विषां
तौ शरव्यमकरोत् स नेतरान् ।

त्वात् स्रुगादिपात्रस्यैव विकङ्कतप्रकृतिकत्वात्। "विकङ्कतः स्रुचो-वृक्षः" इत्यमरः। यद्वा स्रुङ्मात्रस्य विकङ्कतप्रकृतिकत्वमस्तु उभयत्रापि शास्त्रसम्भावात्। यथाह भगवानापस्तम्बः, "खादिरस्रुचः पर्णमयीर्जुहुयात् वैकङ्कतीः स्रुचो वा" इति ॥ २५ ॥

उन्मुख इति। सपदि लक्ष्मणाग्रजः रामः बाणम् आश्रयमुखात् तूणीरमुखात् समुद्धरन् उन्मुखः ऊर्द्ध्वमुखः, अम्बरे गृध्रपक्षपवनैः ईरिताः कम्पिताः ध्वजाः यस्य तत् तथोक्तम्। रक्षसां दुर्निमित्तसूचनमेतत्। तदुक्तं शकुनार्णवे, "आसन्नमृत्योर्निकटे चरन्ति गृध्रादयो मूर्द्ध्नि गृहोर्द्ध्वभागे।" इति रक्षसां बलम् अपश्यत् ॥ २६ ॥

तत्रेति सः रामः तत्र रक्षसां बले यौ मखद्विषाम् अधिपती तौ सुबाहुमारीचौ शरव्यं लक्ष्यम् अकरोत्। "वेध्यं लक्ष्यं शरव्यं च" इति हलायुधः। इतरान् न अकरोत्। तथाहि, महोरगविसर्पिविक्रमः गरुड़ः गरुत्मान् राजिलेषु जलव्यालेषु

किं महोरगविसर्पिविक्रमो
राजिलेषु गरुड़ः प्रवर्त्तते ॥ २७ ॥
सोऽस्त्रमुग्रजवमस्त्रकोविदः
सन्दधे धनुषि वायुदैवतम्।
तेन शैलगुरुमप्यपातयत्
पाण्डुपत्रमिव ताड़कासुतम् ॥ २८ ॥
यः सुबाहुरिति राक्षसोऽपर-
स्तत्र तत्र विससर्प मायया।
तं क्षुरप्रशकलीकृतं कृती
पत्त्रिणां व्यभजदाश्रमाद्वहिः ॥ २९ ॥

प्रवर्त्तते किं? न प्रवर्त्तते इत्यर्थः। "अलगर्दो जलव्यालः समौ राजिल-डुण्डुभौ" इत्यमरः॥ २७॥

स इति। अस्त्रकोविदः अस्त्रज्ञः सः रामः उग्रजवम् उत्कटजवं वायुदैवतं वायुः दैवतं यस्य तत् वायव्यम् अस्त्रं धनुषि सन्दधे संहितवान्। कर्त्तरि लिट्। तेन अस्त्रेण शैल-वत् गुरुम् अपि ताड़कासुतं मारीचं, पाण्डुपत्रम् इव परिणत-पर्णमिव इत्यर्थः, अपातयत् पातितवान् ॥२८॥

य इति। सुबाहुः इति यः अपरः राक्षसः तत्र मायया शम्बरविद्यया विससर्प सञ्चचार, क्षुरप्रैः शकलीकृतं खण्डीकृतं तं सुबाहुं कृती कुशलः रामः। "कृती च कुशलः समौ" इत्यमरः। आश्रमात् वहिः पत्त्रिणां पक्षिणाम्। "पत्त्रिणौ शर-पक्षिणौ" इत्यमरः। व्यभजत् विभज्य दत्तवान् इत्यर्थः॥२९॥

इत्यपास्तमखविघ्नयोस्तयोः
सांयुगीनमभिनन्द्य विक्रमम्।
ऋत्विजः कुलपतेर्यथाक्रमं
वाग्यतस्य निरवर्त्तयन् क्रियाः॥ ३०॥

तौ प्रणामचलकाकपक्षकौ
भ्रातरावबभृथाप्लुतो मुनिः।
आशिषामनुपदं समस्पृशद्
दर्भपाटिततलेन पाणिना॥ ३१॥

तं न्यमन्त्रयत सम्भृतक्रतु-
र्मैथिलः स मिथिलां व्रजन् वशी।

इतीति। इति अपास्तमखविघ्नयोः तयोः राघवयोः संयुगे साधुः सांयुगीनः तम्। प्रतिजनादिभ्यः खञिति खञ्प्रत्ययः। "सांयुगीनो रणे साधुः" इत्यमरः। विक्रमम् अभिनन्द्य ऋत्विजः याज्ञिकाः वाचि यतः वाग्यतः मौनी तस्य कुलपतेः मुनिकुलेश्वरस्य क्रियाः क्रतुक्रियाः यथाक्रमं निरवर्त्तयन् निष्पादितवन्तः॥ ३०॥

ताविति। अवभृथे दीक्षान्ते आप्लुतः स्नातः मुनिः। "दीक्षान्तोऽवभृथो यज्ञः" इत्यमरः। प्रणामेन चलकाकपक्षकौ चञ्चलचूड़ौ तौ भ्रातरौ आशिषाम् अनुपदम् अन्वक् दर्भपाटिततलेन कुशक्षतान्तःप्रदेशेन पवित्रेण इत्यर्थः पाणिना समस्पृशत् संस्पृष्टवान् सन्तोषात् इति भावः॥ ३१॥

तमिति। सम्भृतक्रतुः सङ्कल्पितसम्भारः मिथिलायां भवः

राघवावपि निनाय बिभ्रतौ
तद्धनुःश्रवणजं कुतूहलम् ॥ ३२ ॥

तैः शिवेषु वसतिर्गताध्वभिः
सायमाश्रमतरुष्वगृह्यत ।
येषु दीर्घतपसः परिग्रहो
वासवक्षणकलत्रतां ययौ ॥ ३३ ॥

प्रत्यपद्यत चिराय यत् पुन-
श्चारु गौतमवधूः शिलामयी ।
स्वं वपुः स किल किल्बिषच्छिदां
रामपादरजसामनुग्रहः ॥ ३४ ॥

मैथिलः जनकः तं विश्वामित्रं न्यमन्त्रयत आहूतवान्, यथो सः मुनिः मिथिलां जनकनगरीं व्रजन् तस्य जनकस्य यत् धनुः तच्छ्रवणजं कुतूहलं बिभ्रतौ राघवौ अपि निनाय नीतवान् ॥ ३२ ॥

तैरिति । गताध्वभिः तैः त्रिभिः सायं शिवेषु रम्येषु आश्रमतरुषु वसतिः स्थानम् अगृह्यत, येषु आश्रमतरुषु दीर्घतपसः गौतमस्य परिग्रहः पत्नी। "पत्नीपरिजनादानमूलशापाः परिग्रहाः" इत्यमरः । अहल्या इति यावत् । वासवस्य इन्द्रस्य क्षणकलत्रतां ययौ ॥ ३३ ॥

प्रत्यपद्यतेति । शिलामयी भर्तृशापात् शिलात्वं प्राप्ता गौतमवधूः अहल्या चारु स्वं वपुः चिराय पुनः प्रत्यपद्यत प्राप्तवती । यत्, सः किल्बिषच्छिदां पापहारिणाम् "पापं

राघवान्वितमुपस्थितं मुनिं
तं निशम्य जनको जनेश्वरः।
अर्थकामसहितं सपर्य्यया
देहबद्धमिव धर्म्ममभ्यगात्॥ ३५ ॥

तौ विदेहनगरीनिवासिनां
गां गताविव दिवः पुनर्वसू।
मन्यते स्म पिबतां विलोचनैः
पक्ष्मपातमपि वञ्चनां मनः ३६ ॥

किल्बिषकल्मषम्" इत्यमरः। रामपादरजसाम् अनुग्रहः प्रसादः किल श्रूयते॥ ३४ ॥

राघवेति। राघवाभ्याम् अन्वितं युक्तम् उपस्थितं आगतं तं मुनिं जनकः जनेश्वरः निशम्य अर्थकामाभ्यां सहितं देहबद्धं बद्धदेहं मूर्त्तिमन्तम् इत्यर्थः। वाहिताग्न्यादित्वात् साधुः। धर्म्मम् इव, सपर्य्यया अभ्यगात् प्रत्युद्गतवान्॥ ३५ ॥

ताविति। दिवः सुरवर्त्मनः आकाशात्। "द्यौः स्वर्गसुरवर्त्मनोः" इति विश्वः। गां भुवं गतौ। "स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः" इत्यमरः। पुनर्वसू इव तन्नामकनक्षत्राधिदेवते इव स्थितौ तौ राघवौ विलोचनैः पिबतां अत्यास्थया पश्यताम् इत्यर्थः विदेहनगरी मिथिला तन्निवासिनां मनः कर्त्तृ पक्ष्मपातं निमेषम् अपि तद्दर्शनप्रतिबन्धकत्वात् वञ्चनां विडम्बनां मन्यतेस्म मेने। लट् स्म इति भूतार्थे लट्॥ ३६ ॥

यूपवत्यवसिते क्रियाविधौ
कालवित् कुशिकवंशवर्द्धनः।
राममिष्वसनदर्शनोत्सुकं
मैथिलाय कथयाम्बभूव सः॥ ३७॥
तस्य वीक्ष्य ललितं वपुः शिशोः
पार्थिवः प्रथितवंशजन्मनः।
स्वं विचिन्त्य च धनुर्दुरानमं
पीड़ितो दुहितृशुल्कसंस्थया॥ ३८॥

यूपेति। यूपवति क्रियाविधौ कर्म्मानुष्ठाने क्रतौ इत्यर्थः अवसिते समाप्ते सति कालवित् अवसरज्ञः कुशिकवंशवर्द्धनः सः मुनिः रामम्, अस्यते अनेनेति असनम् इषूणाम् असनम् इष्वसनं चापं तस्य दर्शने उत्सुकम्, मैथिलाय जनकाय कथयाम्बभूव कथितवान्॥ ३७॥

तस्येति। पार्थिवः जनकः प्रथितवंशे जन्म यस्य तथोक्तस्य, एतेन वरसम्पत्तिरुक्ता। शिशोः तस्य रामस्य ललितं कोमलं वपुः वीक्ष्य, स्वं स्वकीयं दुरानमम् आनमयितुमशक्यम्। नमेर्खल्न्तात् खल्। धनुः विचिन्त्य च, दुहितृशुल्कं कन्यामूल्यं जामातृदेयम्। "शुल्कं घट्टादिदेये स्यात् जामातुर्वन्धकेऽपि च" इति विश्वः। तस्य धनुर्भङ्गरूपस्य संस्थया स्थित्या। "संस्था स्थितौ" इति विश्वः। पीड़ितः बाधितः, शिशुना रामेण दुष्करमिति दुःखितः इति भावः॥ ३८॥

अब्रवीच्च भगवन् मतङ्गजै-
र्यद्बृहद्भिरपि कर्म्म दुष्करम् ।
तत्र नाहमनुमन्तुमुत्सहे
मोघवृत्ति कलभस्य चेष्टितम् ॥ ३६ ॥

ह्रेपिता हि बहवो नरेश्वरा-
स्तेन तात धनुषा धनुर्भृतः ।
ज्यानिघातकठिनत्वचो भुजान्
स्वान् विधूय धिगिति प्रतस्थिरे ॥ ४० ॥

प्रत्युवाच तमृषिर्निशम्यतां
सारतोऽयमथवा गिरा कृतम् ।

अब्रवीदिति ॥ अब्रवीच्च मुनिम् इति शेषः । किमिति ? हे भगवन् मुने ! बृहद्भिः मतङ्गजैः महागजैः अपि दुष्करं यत् कर्म्म तत्र कर्म्मणि कलभस्य बालगजस्य । "कलभः करिशावकः" इत्यमरः । मोघवृत्ति व्यर्थव्यापारं चेष्टितं साहसम् अनुमन्तुम् अहं न उत्सहे ॥ ३९ ॥

ह्रेपिता इति । हे तात ! तेन धनुषा बहवः धनुर्भृतः नरेश्वराः ह्रेपिताः ह्रियं प्रापिताः हि । जिह्रेतेर्धातोर्ण्यन्तात् कर्म्मणि क्तः । अर्त्तिह्रीत्यादिना पुगागमः । ते नरेश्वराः ज्यानिघातैः कठिनत्वचः स्वान् भुजान् धिक् इति विधूय अवमत्य प्रतस्थिरे प्रस्थिताः ॥ ४० ॥

प्रतीति । ऋषिः तं प्रत्युवाच । किमिति ? अयं रामः सारतः बलेन निशम्यतां श्रूयताम्, अथवा गिरा सारवर्णनया

चाप एव भवतो भविष्यति
व्यक्तशक्तिरशनिर्गिराविव ॥ ४१ ॥
एवमाप्तवचनात् स पौरुषं
काकपक्षकधरेऽपि राघवे।
श्रद्दधे त्रिदशगोपमात्रके
दाहशक्तिमिव कृष्णवर्त्मनि ॥ ४२ ॥
व्यादिदेश गणशोऽथ पार्श्वगान्
कार्मुकाभिहरणाय मैथिलः।

कृतम् अलं गीर्न वक्तव्या इत्यर्थः। "युगपर्य्याप्तयोः कृतम्" इत्यमरः। अव्ययं चैतत्। "कृतं निवारणनिषेधयोः" इति गणव्याख्याने। गिरेति करणे तृतीया, निषेधक्रियां प्रति करणत्वात्। किन्तु, अशनिः वज्रः गिरौ इव, चापे धनुषि एव भवतः तव व्यक्तशक्तिः दृष्टसारः भविष्यति ॥ ४१ ॥

एवमिति। एवम् आप्तस्य मुनेः वचनात् सः जनकः काकपक्षकधरे बाले अपि राघवे पुरुषस्य कर्म्म पौरुषं पराक्रमम्। हायनान्तयुवादिभ्योऽणिति युवादित्वादण्। पौरुषं पुरुषस्योक्ते भावे कर्म्मणि तेजसि" इति विश्वः। त्रिदशगोपः इन्द्रगोपकीटः प्रमाणमस्य त्रिदशगोपमात्रः। प्रमाणे द्वयसज्दघ्नञ्मात्रचः इत्यादिना मात्रच्प्रत्ययः, ततः स्वार्थे कः। तस्मिन् कृष्णवर्त्मनि वह्नौ दाहशक्तिम् इव, श्रद्दधे विश्वस्तवान् ॥ ४२ ॥

व्यादिदेशेति। अथ मैथिलः पार्श्वगान् पुरुषान् कार्म्मुकाभिहरणाय कार्म्मुकमानेतुम्। तुमर्थाच्चेति चतुर्थी। सहस्र-

तैजसस्य धनुषः प्रवृत्तये
तोयदानिव सहस्रलोचनः ॥ ४३ ॥

तत् प्रसुप्तभुजगेन्द्रभीषणं
वीक्ष्य दाशरथिराददे धनुः ।
विद्रुतक्रतुमृगानुसारिणं
येन बाणमसृजत् वृषध्वजः ॥ ४४ ॥

आततज्यमकरोत् स संसदा
विस्मयस्तिमितनेत्रमीक्षितः ।
शैलसारमपि नातियत्नतः
पुष्पचापमिव पेशलं स्मरः ॥ ४५ ॥

लोचनः इन्द्रः तैजसस्य तेजोमयस्य धनुषः प्रवृत्तये आविर्भावाय तोयदान् मेघान् इव, गणान् गणान् गणशः । सङ्ख्यैकवचनाच्च वीप्सायामिति शस्प्रत्ययः । व्यादिदेशे प्रजिघाय ॥ ४३ ॥

तदिति । दाशरथिः रामः प्रसुप्तभुजगेन्द्रः इव भीषणं भयङ्करं तत् धनुः वीक्ष्य आददे जग्राह । वृषः ध्वजः चिह्नं यस्य सः शिवः येन धनुषा, क्रतुरेव मृगः विद्रुतं पलायितं क्रतुमृगम् अनुसरति । ताच्छील्ये णिनिः । तं विद्रुतक्रतुमृगानुसारिणं बाणम् असृजत् मुमोच ॥ ४४ ॥

आततेति । सः रामः संसदा सभया विस्मयेन स्तिमितं नेत्रं यस्मिन् कर्म्मणि तत् यथा स्यात् तथा ईक्षितः सन् शैलस्येव सारः यस्य तत् शैलसारम् अपि धनुः, स्मरः पेशलं कोमलं पुष्पचापम् इव, नातियत्नतः नातियत्नात् । नञर्थस्य

भज्यमानमतिमात्रकर्षणात्
तेन वज्रपरुषस्वनं धनुः ।
भार्गवाय दृढमन्यवे पुनः
क्षत्रमुद्यतमिव न्यवेदयत् ॥ ४६ ॥

दृष्टसारमथ रुद्रकार्मुके
वीर्य्यशुल्कमभिनन्द्य मैथिलः ।
राघवाय तनयामयोनिजां
रूपिणीं श्रियमिव न्यवेदयत् ॥ ४७ ॥

नशब्दस्य सुप्सुपेति समासः । आततज्यम् अधिज्यम् अकरोत् ॥ ४५ ॥

भज्यमानमिति । तेन रामेण अतिमात्रकर्षणात् भज्यमानम् अत एव वज्रपरुषस्वनं वज्रमिव परुषः स्वनः यस्य तत् धनुः कर्त्तृ दृढमन्यवे दृढक्रोधाय । "मन्युः क्रोधे क्रतौ दैन्ये" इति विश्वः । भार्गवाय क्षत्त्रं क्षत्त्रकुलं पुनः उद्यतं न्यवेदयत् इव ज्ञापयामास इव ॥ ४६ ॥

दृष्टेति । अथ मैथिलः जनकः रुद्रकार्म्मुके दृष्टः सारः स्थिरांशः यस्य तत् दृष्टसारम् । "सारो बले स्थिरांशे च" इति विश्वः । वीर्य्यमेव शुल्कं धनुर्भङ्गरूपम् इत्यर्थः अभिनन्द्य राघवाय रामाय अयोनिजां देवयजनसम्भवां तनयां सीतां रूपिणीं श्रियमिव साक्षाल्लक्ष्मीमिव न्यवेदयत् अर्पितवान् वाचा इति शेषः ॥ ४७ ॥

मैथिलः सपदि सत्यसङ्गरो
राघवाय तनयामयोनिजाम् ।
सन्निधौ द्युतिमतस्तपोनिधे-
रग्निसाक्षिक इवातिसृष्टवान् ॥ ४८ ॥

प्राहिणोच्च महितं महाद्युतिः
कोसलाधिपतये पुरोधसम् ।
भृत्यभावि दुहितुः परिग्रहा-
द्दिश्यतां कुलमिदं निमेरिति ॥ ४९ ॥

अन्वियेष सदृशीं स च स्नुषां
प्राप चैनमनुकूलवाग् द्विजः ।

उक्तमेवार्थं सोपस्कारमाह, मैथिल इति । सत्यसङ्गरः सत्यप्रतिज्ञः । "अथ प्रतिज्ञाजिज्ञासासम्पदापत्तु सङ्गरः" इत्यमरः । मैथिलः राघवाय अयोनिजां तनयां द्युतिमतः तेजस्विनः तपोनिधेः कौशिकस्य सन्निधौ अग्निः साक्षी यस्य सः अग्निसाक्षिकः । शेषाद्विभाषेति कप्प्रत्ययः । सः इव सपदि अतिसृष्टवान् दत्तवान् ॥ ४८ ॥

प्राहिणोदिति । महाद्युतिः जनकः महितं पूजितं पुरोधसं कोसलाधिपतये दशरथाय प्राहिणोत् प्रहितवान् च । किमिति ? निमिर्नाम जनकानां पूर्व्वजः कश्चित् । इदं निमेः कुलं दुहितुः सीतायाः परिग्रहात् स्नुषात्वेन स्वीकारात् हेतोः भृत्यस्य भावः भृत्यत्वं सोऽस्यास्तीति भृत्यभावि दिश्यताम् अनुमन्यताम् इति ॥ ४९ ॥

सद्य एव सुकृतां हि पच्यते
कल्पवृक्षफलधर्म्मि काङ्क्षितम् ॥ ५० ॥
तस्य कल्पितपुरस्क्रियाविधेः
शुश्रुवान् वचनमग्रजन्मनः ।
उच्चचाल वलभित्सखो वशी
सैन्यरेणुमुषितार्कदीधितिः ॥ ५१ ॥
आससाद मिथिलां स वेष्टयन्
पीड़ितोपवनपादपां बलैः ।

अन्वियेषेति । सः दशरथश्च सदृशीम् अनुरूपां स्नुषाम् अन्वियेष रामविवाहमाचकाङ्क्ष इत्यर्थः । अनुकूलवाक् स्नुपा-लिप्सिरूपानुकूलार्थवादी द्विजः जनकपुरोधाश्च एनं दशरथं प्राप । तथाहि, कल्पवृक्षफलस्य यः धर्म्मः सद्यःपाकरूपः सोऽस्यास्तीति कल्पवृक्षफलधर्म्मि अतः सुकृतां पुण्यकारिणां काङ्क्षितं मनोरथः सद्यः एव पच्यते हि । कर्म्मकर्त्तरि लट् । स्वयमेव पक्कं भवति इत्यर्थः । कर्म्मवत् कर्म्मणा तुल्यक्रिया इति कर्म्मवद्भावात् भावकर्म्मणोरित्यात्मनेपदम् ॥ ५० ॥

तस्येति । वलभित्सखः इन्द्रसहचरः वशी स्वाधीनतावान् । "वश आयत्तता च" इति विश्वः । कल्पितपुरस्क्रियाविधिः कृतपूजाविधेः तस्य अग्रजन्मनः द्विजस्य वचनं जनकसन्दिष्टं शुश्रुवान् । श्रुतवान् । शृणोतेः क्कसुः । सैन्यरेणुमुषितार्कदीधितिः सन् उच्चचाल प्रतस्थे ॥ ५१ ॥

आससादेति । सः दशरथः बलैः सैन्यैः पीड़ितोपवन

प्रीतिरोधमसहिष्ट सा पुरी
स्त्रीव कान्तपरिभोगमायतम् ॥ ५२ ॥

तौ समेत्य समये स्थितावुभौ
भूपती वरुणवासवोपमौ ।
कन्यकातनयकौतुकक्रियां
स्वप्रभावसदृशीं वितेनतुः ॥ ५३ ॥

पार्थिवीमुदवहद्रघूद्वहो
लक्ष्मणस्तदनुजामथोर्म्मिलाम् ।

थादपां शिथिलां वेष्टयन् परिधीकुर्व्वन् आससाद । सा पुरी स्त्री युवतिः आयतम् अतिप्रसक्तं कान्तपरिभोगं प्रियसम्भोगमिव, प्रीत्या रोधं प्रीतिरोधम् असहिष्ट सोढ़वती । द्वेषरोधन्तु न सहते इति भावः ॥ ५२ ॥

ताविति । समये स्थितौ आचारनिष्ठौ । "समयाः शपथाचारकालसिद्धान्तसंविदः" इत्यमरः । वरुणवासवौ उपमा उपमानं ययोः तौ तथोक्तौ तौ उभौ भूपती जनकदशरथौ समेत्य स्वप्रभावसदृशीम् आत्ममहिमानुरूपां कन्यकानां सीतादीनां तनयानां रामादीनाञ्च कौतुकक्रियां विवाहोत्सवं वितेनतुः विस्तृतवन्तौ । तनोतेर्लिट् ॥ ५३ ॥

पार्थिवीमिति । उद्वहतीत्युद्वहः । पचाद्यच् । रघूणाम् उद्वहः रघूद्वहः रामः पृथिव्याः अपत्यं स्त्री पार्थिवी । तस्यापत्यमित्यणि टिड्ढेति ङीप् । तां सीताम् उदवहत् परिणीतवान् । अथ लक्ष्मणः तस्याः सीतायाः अनुजां जनकस्य औरसीम्

यौ तयोरवरजौ वरौजसौ
तौ कुशध्वजसुते सुमध्यमे ॥ ५४ ॥
ते चतुर्थसहितास्त्रयो बभुः
सूनवो नववधूपरिग्रहात् ।
सामदानविधिभेदनिग्रहाः
सिद्धिमन्त इव तस्य भूपतेः ॥ ५५ ॥
ता नराधिपसुता नृपात्मजै-
स्ते च ताभिरगमन् कृतार्थताम् ।

ऊर्म्मिलाम् उदवहत् । यौ वरौजसौ तयोः रामलक्ष्मणयोः अवरजौ अनुजातौ भरतशत्रुघ्नौ तौ सुमध्यमे कुशध्वजस्य जनकानुजस्य सुते कन्यके माण्डवीं श्रुतकीर्त्तिञ्च उदवहताम् । नात्र व्युत्क्रमविवाहदोषः भिन्नोदरत्वात् । तदुक्तम्, "पितृव्यपुत्रे सापत्न्ने परनारीसुतेषु च । विवाहाधानयज्ञादौ परिवित्त्याद्यदूषणम् ॥" ॥ ५४ ॥

सद्यः

त इति । ते[illegible] हिताः त्रयः चत्वारः इत्यर्थः । वृत्तानु-
भवति इ
सारादेवमुक्तम् । [illegible] नववधूपरिग्रहात्, सिद्धिमन्तः फल-
भावव
सिद्धियुक्ताः तस्य[illegible]ः दशरथस्य सामदानविधिभेदनिग्रहाः
वल
चत्वारः उपायाः इ[illegible], बभुः । विधीयते इति विधिः दान एव विधिः, निग्रहो दण्डः । सूनूनामुपायैः वधूनां सिद्धिभिश्चौ-पम्यमित्यनुसन्धेयम् ॥ ५५ ॥

ता इति । ताः नराधिपसुताः जनककन्यकाः नृपात्मजैः दशरथपुत्रैः कृतार्थतां कुलशीलवयोरूपादिसाफल्यम् अगमन्,

सोऽभवद्वरवधूसमागमः
प्रत्ययप्रकृतियोगसन्निभः ॥ ५६ ॥

एवमात्तरतिरात्मसम्भवां-
स्तान् निवेश्य चतुरोऽपि तत्र सः।
अध्वसु त्रिषु विसृष्टमैथिलः
स्वां पुरीं दशरथो न्यवर्त्तत ॥ ५७ ॥

तस्य जातु मरुतः प्रतीपगा
वर्त्मसु ध्वजतरुप्रमाथिनः।

ते च ताभिः तथा। किञ्च, सः वराणां वधूनाञ्च समागमः, प्रत्ययानां प्रकृतीनाञ्च योगः इव, सन्निभातीति सन्निभः अभवत्। पचाद्यच्। प्रत्ययाः सनादयः येभ्यः विधीयन्ते ताः प्रकृतयः। यथा प्रकृतिप्रत्यययोः सहैकार्थसाधनत्वं तद्वद्-त्रापि इति भावः ॥ ५६ ॥

एवमिति। एवम् आत्तरतिः अनुरागवान् सः दशरथः तान् चतुरः अपि आत्मसम्भवान् पुत्रान् तत्र मिथिलायां निवेश्य विवाह्य। "निवेशः शिविरोद्वाहविन्यासेषु प्रकीर्त्तितः" इति विश्वः। त्रिषु अध्वसु प्रयातेषु सत्सु विसृष्टमैथिलः स्वां पुरीं न्यवर्त्तत। उद्देशक्रियापेक्षया कर्म्मत्वं पुर्य्याः ॥ ५७ ॥

तस्येति। जातु कदाचित् वर्त्मसु ध्वजाः एव तरवः तान् प्रमथ्नन्ति ये ते ध्वजतरुप्रमाथिनः प्रतीपगाः प्रतिकूलगामिनः मरुतः, उत्तटाः नदीरयाः स्वलोम् अकृतिमभूमिम् इव। जानपदेत्यादिना ङीप्। तस्य वरूथिनीं सेनां भृशतया भृशं चिक्लिशुः क्लिश्यन्ति स्म ॥ ५८ ॥

चिक्लिशुर्भृशतया वरूथिनी-
मुत्तटा इव नदीरयाः स्थलीम् ॥ ५८ ॥
लक्ष्यते स्म तदनन्तरं रवि-
र्बद्धभीमपरिवेशमण्डलः ।
वैनतेयशमितस्य भोगिनो
भोगवेष्टित इव च्युतो मणिः ॥ ५९ ॥
श्येनपक्षपरिधूसरालकाः
सान्ध्यमेघरुधिरार्द्रवाससः ।
अङ्गना इव रजस्वला दिशो
नो बभूवुरवलोकनक्षमाः ॥ ६० ॥

लक्ष्यत इति । तदनन्तरं प्रतीपपवनानन्तरं बद्धं भीमं परिवेशस्य परिधेः मण्डलं यस्य सः । "परिवेशस्तु परिधिरुपसूर्य्यकमण्डले" इत्यमरः । रविः, वैनतेयशमितस्य गरुड़हतस्य भोगिनः सर्पस्य भोगेन कायेन । "भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः" इत्यमरः । वेष्टितः च्युतः शिरोभ्रष्टः मणिः इव, लक्ष्यते स्म ॥ ५९ ॥

श्येनेति । श्येनपक्षाः एव परिधूसराः अलकाः यासां ताः सान्ध्यमेघाः एव रुधिरार्द्राणि वासांसि यासां ताः तथोक्ताः रजः धूलिः आसाम् अस्तीति रजस्वलाः । रजःकृष्यासुतिपरिषदोवलजिति वलच्प्रत्ययः । दिशः रजस्वलाः ऋतुमत्यः अङ्गनाः इव । "स्याद्रजः पुष्पमार्त्तवम्" इत्यमरः । अवलोकनक्षमाः

भास्करश्च दिशमध्युवास यां
तां श्रिताः प्रतिभयं ववाशिरे ।
क्षत्रशोणितपितृक्रियोचितं
चोदयन्त्य इव भार्गवं शिवाः ॥ ६१ ॥
तत् प्रतीपपवनादि वैकृतं
प्रेक्ष्य शान्तिमधिकृत्य कृत्यवित् ।
अन्वयुङ्क्त गुरुमीश्वरः क्षितेः
स्वन्तमित्यलघयत् स तद्व्यथाम् ॥ ६२ ॥

दर्शनार्हाः नो बभूवुः । एकत्राहृष्टदोषादपरत्र शास्त्रदोषादिति विज्ञेयम् । अत्र रजोवृष्टिरुत्पात उक्तः ॥ ६० ॥

भास्कर इति । भास्करः यां दिशम् अध्युवास च यस्यां दिशि उषितः । उपान्वध्याङ्वस इति कर्मत्वम् । तां दिशं श्रिताः शिवाः गोमायवः । "स्त्रियां शिवा भूरिमायगोमायुमृगधूर्त्तकाः" इत्यमरः । क्षत्रशोणितेन या पितृक्रिया पितृतर्पणं तत्र उचितं परिचितं भार्गवं चोदयन्त्यः इव प्रतिभयं भयङ्करं ववाशिरे रुरुवुः । वाशृशब्द इति धातोर्लिट् । "तिरश्चां वाशितं रुतम्" इत्यमरः ॥ ६१ ॥

तदिति । तत् प्रतीपपवनादि वैकृतं दुर्निमित्तं प्रेक्ष्य कृत्यवित् कार्य्यज्ञः क्षितेः ईश्वरः शान्तिम् अनर्थनिवृत्तिम् अधिकृत्य उद्दिश्य गुरुं वशिष्ठम् अन्वयुङ्क्त अपृच्छत् । "प्रश्नोऽनुयोगः पृच्छा च" इत्यमरः । सः गुरुः स्वन्तं शुभोदर्कं भावीति तस्य राज्ञः व्यथाम् अलघयत् लघूकृतवान् ॥ ६२ ॥

तेजसः सपदि राशि रुत्थितः
प्रादुरास किल वाहिनीमुखे।
यः प्रमृज्य नयनानि सैनिकै-
र्लक्षणीयपुरुषाकृतिश्चिरात् ॥ ६३ ॥
पित्र्यमंशमुपवीतलक्षणं
मातृकञ्च धनुरूर्ज्जितं दधत्।
यः ससोम इव घर्म्मदीधितिः
सद्विजिह्व इव चन्दनद्रुमः ॥ ६४ ॥
येन रोषपरुषात्मनः पितुः
शासने स्थितिभिदोऽपि तस्थुषा।

तेजस इति। सपदि उत्थितः तेजसः राशिः वाहिनीमुखे सेनाग्रे प्रादुरास किल, यः सैनिकैः नयनानि प्रमृज्य चिरात् लक्षणीया भावनीया पुरुषाकृतिः यस्य सः तथोक्तः अभूत् इति शेषः ॥ ६३ ॥

पित्र्यमिति। उपवीतं लक्षणं चिह्नं यस्य तं पितुरयं पैत्र्यः। वाय्वृतुपित्रुषसोयदिति यत्प्रत्ययः। तम् अंशम् धनुषा ऊर्ज्जितं धनुरूर्ज्जितं मातुरयं मातृकः। ऋतष्ठगिति ठक् प्रत्ययः। तम् अंशञ्च दधत् यः भार्गवः, ससोमः चन्द्रयुक्तः घर्म्मदीधितिः सूर्य्यः इव, सद्विजिह्वः ससर्पः चन्दनद्रुमः इव, स्थितः ॥ ६४ ॥

येनेति। रोषपरुषः आत्मा बुद्धिः यस्य सः। "आत्मा यत्नो धृतिर्बुद्धिः" इत्यमरः। तस्य रोषपरुषात्मनः स्थितिभिदः

वेपमानजननी-शिरश्छिदा
प्रागजीयत घृणा ततो मही ॥ ६५ ॥
अक्षबीजवलयेन निर्बभौ
दक्षिणश्रवणसंस्थितेन यः ।
क्षत्रियान्तकरणैकविंशते-
र्व्याजपूर्व्वगणनामिवोद्वहन् ॥ ६६ ॥
तं पितुर्बधभवेन मन्युना
राजवंशनिधनाय दीक्षितम् ।
बालसूनुरवलोक्य भार्गवं
स्वां दशाञ्च विषसाद पार्थिवः ॥ ६७ ॥

मर्य्यादालङ्घिनः अपि पितुः शासने तस्थुषा स्थितेन वेपमानजननीशिरश्छिदा येन प्राक् घृणा अजीयत ततः अनन्तरं मही अजीयत । मातृहन्तुः क्षत्रवधात् कुतो जुगुप्सा इति भावः ॥ ६५ ॥

अक्षेति । यः भार्गवः दक्षिणश्रवणे संस्थितेन अक्षबीजवलयेन अक्षमालया क्षत्रियान्तकरणानां क्षत्रियवधानां एकविंशतेः एकविंशतिसंख्यायाः व्याजः अक्षमालारूपः पूर्व्वः यस्याः तां गणनाम् उद्वहन् इव निर्बभौ ॥ ६६ ॥

तमिति । पितुः जमदग्नेः वधभवेन क्षत्रियकर्त्तृकवधोद्भवेन मन्युना कोपेन राजवंशानां निधनाय नाशार्थम् । "निधनं स्यात् कुले नाशे" इति विश्वः । दीक्षितं प्रवृत्तम् इत्यर्थः तं भार्गवं स्वां दशां च अवलोक्य बालाः सूनवः यस्य सः पार्थिवः

नाम राम इति तुल्यमात्मजे
वर्त्तमानमहिते च दारुणे।
हृद्यमस्य भयदायि चाभव-
द्रत्नजातमिव हारसर्पयोः ॥ ६८ ॥

अर्घ्यमर्घ्यमिति वादिनं नृपं
सोऽनवेक्ष्य भरताग्रजो यतः।
क्षत्रकोपदहनार्च्चिषं ततः
सन्दधे दृश मुदग्रतारकाम् ॥ ६९ ॥

तेन कार्मुकनिषक्तमुष्टिना
राघवो विगतभीः पुरोगतः।

विषसाद। स्वस्यातिदौर्बल्यात् शत्रोश्चातिक्रोधात् कान्दिशीकोऽभवत् इत्यर्थः ॥ ६७ ॥

नामेति। आत्मजे पुत्रे दारुणे घोरे अहिते शत्रौ च तुल्यम् अविशेषेण वर्त्तमानं राम इति नाम, हारसर्पयोः वर्त्तमानं रत्नजातम् इव, अस्य दशरथस्य हृद्यं हृदयङ्गमं भयदायि भयङ्करं च अभवत् ॥ ६८ ॥

अर्घ्यमिति। सः भार्गवः अर्घ्यम् अर्घ्यम् इति वादिनं नृपम् अनवेक्ष्य यतः यत्र भरताग्रजः ततः तत्र। इतराभ्योऽपि दृश्यन्ते इति सार्व्वविभक्तिकस्तसिः। क्षत्रे क्षत्रकुले विषये यः कोपदहनः रोषाग्निः तस्य अर्च्चिषं ज्वालाम् इव स्थिताम्। "ज्वालाभासोर्नपुंस्यर्च्चिः" इत्यमरः। उदग्रा तारका कनीनिका यस्याः ताम्। "तारकाक्ष्णः कनीनिका" इत्यमरः। दृशं सन्दधे ॥६९॥

तेनेति। कार्मुकनिषक्तमुष्टिना शरम् अङ्गुलीविवरचारिणं

अङ्गुलीविवरचारिणं शरं
कुर्व्वता निजगदे युयुत्सुना ॥ ७० ॥

क्षत्त्रजातमपकारवैरि मे
तन्निहत्य बहुशः शमं गतः ।
सुप्तसर्प इव दण्डघट्टना-
द्रोषितोऽस्मि तव विक्रमश्रवात् ॥ ७१ ॥

मैथिलस्य धनुरन्यपार्थिवै-
स्त्वं किलानमितपूर्व्वमक्षणोः ।
तन्निशम्य भवता समर्थये
वीर्य्यशृङ्गमिव भग्नमात्मनः ॥ ७२ ॥

कुर्व्वता योद्धुमिच्छता युयुत्सुना तेन भार्गवेण विगतभीः निर्भीकः पुरोगतः अग्रगतः राघवः निजगदे उक्तः । कर्म्मणि लिट् ॥ ७० ॥

क्षत्त्रेति । क्षत्त्रजातं क्षत्त्रजातिः मे अपकारेण पितृवधरूपेण वैरि द्वेषि तत् क्षत्त्रजातं बहुशः एकविंशतिवारान् निहत्य शमं गतः अस्मि, तथापि सुप्तसर्पः दण्डघट्टनात् इव तव विक्रमस्य श्रवात् आकर्णनात् रोषितः रोषं प्रापितः अस्मि ॥७१॥

मैथिलस्येति । अन्यैः पार्थिवैः अनमितपूर्व्वं पूर्व्वमनमितम् । सुप्सुपेति समासः । अस्य मैथिलस्य धनुः त्वम् अक्षणोः क्षतवान् किलेति वार्त्तायाम् । "वार्त्तासम्भाव्ययोः किल" इत्यमरः । तत् धनुर्भग्नं निशम्य आकर्ण्य भवता आत्मनः मम वीर्य्यम् एव शृङ्गं भग्नम् इव समर्थये मन्ये ॥ ७२ ॥

अन्यदा जगति राम इत्ययं
शब्द उच्चरित एव मा मगात्।
व्रीडमावहति मे स सम्प्रति
व्यस्तवृत्तिरुदयोन्मुखे त्वयि ॥ ७३ ॥

बिभ्रतोऽस्त्रमचलेऽप्यकुण्ठितं
द्वौ रिपू मम मतौ समागसौ।
धेनुवत्सहरणाच्च हैहय-
स्त्वञ्च कीर्त्तिमपहर्त्तुमुद्यतः ॥ ७४ ॥

क्षत्रियान्तकरणोऽपि विक्रम-
स्तेन मामवति नाजिते त्वयि।

अन्यदेति। अन्यदा अन्यस्मिन् काले जगति "राम" इत्ययं शब्दः उच्चरितः सन् माम् एव अगात्, सम्प्रति त्वयि उदयोन्मुखे सति व्यस्तवृत्तिः विपरीतवृत्तिः अन्यगामी इति यावत् सः शब्दः मे व्रीडम् आवहति लज्जां करोति ॥ ७३ ॥

बिभ्रत इति। अचले क्रौञ्चाद्रौ अपि अकुण्ठितम् अस्त्रं बिभ्रतः मम द्वौ समागसौ तुल्यापराधौ रिपू मतौ, धेनोः पितृहोमधेनोः वत्सस्य हरणात् हेतोः हैहयः कार्त्तवीर्य्यश्च, कीर्त्तिम् अपहर्त्तुम् उद्यतः उद्युक्तः त्वञ्च। वत्सहरणे भारतश्लोकः, "प्रमत्ताच्चाश्रमात् तस्य होमधेन्वास्ततो बलात्। जहार वत्सं क्रोशन्त्या बभञ्ज च महाद्रुमान्॥" इति ॥ ७४ ॥

क्षत्रियेति। तेन कारणेन, क्रियते येनासौ करणः क्षत्रियान्तस्य करणः अपि विक्रमः त्वयि अजिते मां न अवति न

पावकस्य महिमा स गण्यते
कच्चवज्ज्वलति सागरेऽपि यः ॥ ७५ ॥
विद्धि चात्तबलमोजसा हरे-
रैश्वरं धनुरभाजि यत्त्वया।
खातमूलमनिलो नदीरयैः
पातयत्यपि मृदुस्तटद्रुमम् ॥ ७६ ॥
तन्मदीयमिदमायुधं ज्यया
सङ्गमय्य सशरं विकृष्यताम्।
तिष्ठतु प्रधनमेवमप्यहं
तुल्यबाहुतरसा जितस्त्वया ॥ ७७ ॥

प्रीणाति। तथाहि, पावकस्य अग्नेः सहिमा सः गण्यते यः कच्चवत् कच्चे इव। तत्र तस्येवेति सप्तम्यर्थे वतिः। सागरे अपि ज्वलति ॥ ७५ ॥

विद्धीति। किञ्च, ऐश्वरं धनुः हरेः विष्णोः ओजसा बलेन आत्तबलं हृतसारञ्च विद्धि यत् धनुः त्वया अभाजि अभञ्जि। भञ्जेश्च चिणीति विभाषया न लोपः। तथाहि, नदीरयैः खातमूलम् अवदारितपादं तटद्रुमं मृदुरपि अनिलः पातयति। ततः शिशुरपि रौद्रं धनुरभांचमिति मा गर्वीः इति भावः ॥ ७६ ॥

तदिति। तत् तस्मात् मदीयम् इदम् आयुधं कार्म्मुकं,ज्यया संगमय्य संयोज्य। ल्यपि लघुपूर्व्वादिति णेरयादेशः। सशरं यथा तथा त्वया विकृष्यतां प्रधनं रणः तिष्ठतु प्रधनं तावदास्ताम् इत्यर्थः। "प्रधनं मारणं रणः" इति विश्वः। एवमपि

कातरोऽसि यदि वोद्गतार्च्चिषा
तर्ज्जितः परशुधारया मम ।
ज्यानिघातकठिनाङ्गुलिर्वृथा
वध्यतामभययाचनाञ्जलिः ॥ ७८ ॥

एवमुक्तवति भीमदर्शने
भार्गवे स्मितविकम्पिताधरः ।
तद्धनुर्ग्रहणमेव राघवः
प्रत्यपद्यत समर्थमुत्तरम् ॥ ७९ ॥

पूर्व्वजन्मधनुषा समागतः
सोऽतिमात्रलघुदर्शनोऽभवत् ।

मद्धनुःकर्षणेऽपि अहं तुल्यबाहुतरसा समबाहुबलेन । "तरसी बलरंहसी" इत्यमरः । त्वया जितः ॥ ७७ ॥

कातर इति । यदि वा, उद्गतार्च्चिषा उद्गतत्विषा मम परशुधारया तर्ज्जितः कातरः असि भीतः असि, वृथा ज्यानिघातेन कठिनाः अङ्गुलयः यस्य सः तथोक्तः अभययाचनाञ्जलिः वध्यताम् । "तौ युतावञ्जलिः पुमान्" इत्यमरः ॥ ७८ ॥

एवमिति । भीमदर्शने भार्गवे एवम् उक्तवति सति, राघवः स्मितेन हासेन विकम्पिताधरः सन् तद्धनुर्ग्रहणमेव समर्थम् उचितम् उत्तरं प्रत्यपद्यत अङ्गीचकार ॥ ७९ ॥

पूर्व्वेति । पूर्व्वजन्मनि नारायणावतारे यत् धनुः तेन समागतः सङ्गतः सः रामः अतिमात्रम् अत्यन्तं लघुदर्शनः प्रियदर्शनः अभवत् । तथाहि, नवाम्बुदः केवलः रिक्तोऽपि

केवलोऽपि सुभगो नवाम्बुदः
किं पुनस्त्रिदशचापलाञ्छितः ॥ ८० ॥
तेन भूमिनिहितैककोटि तत्
कार्म्मुकञ्च बलिनाऽधिरोपितम् ।
निष्प्रभश्च रिपुरास भूभृतां
धूमशेष इव धूमकेतनः ॥ ८१ ॥
तावुभावपि परस्परस्थितौ
वर्द्धमानपरिहीनतेजसौ ।
पश्यति स्म जनता दिनात्यये
पार्व्वणौ शशिदिवाकराविव ॥ ८२ ॥

सुभगः त्रिदशचापेन इन्द्रधनुषा लाञ्छितः चिह्नितः किं पुनः, सुभग एव इति भावः ॥ ८० ॥

तेनेति । बलिना तेन रामेण, भूमिनिहिता एका कोटिः यस्य तत् तत् कर्म्मणि प्रभवतीति कार्म्मुकं धनुश्च । कर्म्मण उकञित्युकञ्प्रत्ययः । अधिरोपितं, भूभृतां रिपुः भार्गवश्च, धूमशेषः धूमकेतनः अग्निः इव, निष्प्रभः निस्तेजस्कः आस बभूव । आसेति तिङन्तप्रतिरूपकमव्ययम्, दीप्त्यर्थकस्यास्तेरूपं वा ॥ ८१ ॥

ताविति । परस्परस्थितौ अन्योन्याभियुक्तौ । वर्द्धमानञ्च परिहीनञ्च इति द्वन्द्वः, वर्द्धमानपरिहीने तेजसी ययोः तौ, तौ उभौ राघवभार्गवौ अपि, दिनात्यये सायंकाले पर्व्वणि भवौ पार्व्वणौ शशिदिवाकरौ इव, जनता जनसमूहः । ग्रामजन-

तं कृपामृदुरवेक्ष्य भार्गवं
राघवः स्खलितवीर्य्यमात्मनि ।
स्वञ्च संहितममोघमाशुगं
व्याजहार हरसूनुसन्निभः ॥ ८३ ॥

न प्रहर्त्तुमलमस्मि निर्दयं
विप्र इत्यभिभवत्यपि त्वयि ।
शंस किं गतिमनेन पत्रिणा
हन्मि लोक मुत ते मखार्ज्जितम् ॥ ८४ ॥

प्रत्युवाच तमृषि र्न तत्त्वत-
स्त्वां न वेद्मि पुरुषं पुरातनम् ।

बन्धुभ्यस्तलिति तल्प्रत्ययः । पश्यति स्म अपश्यत् । अत्र राघवस्य शशिना भार्गवस्य भानुना च औपम्यं द्रष्टव्यम् ॥ ८२ ॥

तमिति । हरसूनुसन्निभः स्कन्दसमः कृपामृदुः राघवः आत्मनि विषये स्खलितवीर्य्यं कुण्ठितशक्तिं तं भार्गवं स्वं स्वकीयं संहितम् अमोघम् आशुगं वाणं च अवेक्ष्य व्याजहार बभाषे ॥ ८३ ॥

नेति । अभिभवति अपि त्वयि विप्र इति हेतोः निर्दयं प्रहर्त्तुम् अलं शक्तः न अस्मि, किन्तु अनेन पत्रिणा शरेण ते गतिं गमनं हन्मि, उत मखार्ज्जितं लोकं स्वर्गं हन्मि, शंस ब्रूहि ॥ ८४ ॥

प्रतीति । ऋषिः भार्गवः तं रामं प्रत्युवाच । किमिति ? तत्त्वतः स्वरूपतः त्वां पुरातनं पुरुषं न वेद्मि इति न किन्तु

गां गतस्य तव धाम वैष्णवं
कोपितो ह्यसि मया दिदृक्षुणा ॥ ८५ ॥

भस्मसात् कृतवतः पितृद्विषः
पात्रसाच्च वसुधां ससागराम् ।
आहितो जयविपर्य्ययोऽपि मे
श्लाघ्य एव परमेष्ठिना त्वया ॥ ८६ ॥

तद्गतिं मतिमतांवरेप्सितां
पुण्यतीर्थगमनाय रक्ष मे ।
पीड़यिष्यति न मां खिलीकृता
स्वर्गपद्धति रभोगलोलुपम् ॥ ८७ ॥

वेद्मीव इत्यर्थः, किन्तु गां गतस्य भुवमवतीर्णस्य तव वैष्णवं धाम तेजः दिदृक्षुणा द्रष्टुमिच्छुना मया कोपितः हि असि ॥ ८५ ॥

भस्मसादिति । पितृद्विषः पितृवैरिणः भस्मसात् कृतवतः कोपेन भस्मीकुर्व्वतः । विभाषा साति: कार्त्स्न्ये इति सातिः प्रत्ययः । ससागरां वसुधाञ्च पात्रसात् पात्राधीनं देयं कृतवतः । देये त्राचेति चकारात् सातिः । कृतकृत्यस्य मे परमेष्ठिना परमपुरुषेण त्वया आहितः कृतः जयविपर्य्ययः पराजयोऽपि श्लाघ्यः आश्लाघ्यः एव ॥ ८६ ॥

तदिति । तत् तस्मात् कारणात् हे मतिमतां वर ! पुण्यतीर्थगमनाय आप्तुमिष्टाम् ईप्सितां मे गतिं रक्ष पालय किन्तु खिलीकृता दुर्गमीकृतापि स्वर्गपद्धतिः अभोगलोलुपं भोगनिःस्पृहं मां न पीड़यिष्यति, अत स्तामेव जहीत्यर्थः ॥ ८७ ॥

प्रत्यपद्यत तथेति राघवः
प्राङ्मुखश्च विससर्ज्ज सायकम् ।
भार्गवस्य सुकृतोऽपि सोऽभवत्
स्वर्गमार्गपरिघो दुरत्ययः ॥ ८८ ॥

राघवोऽपि चरणौ तपोनिधेः
क्षम्यतामिति वदन् समस्पृशत् ।
निर्ज्जितेषु तरसा तरस्विनां
शत्रुषु प्रणतिरेव कीर्त्तये ॥ ८९ ॥

राजसत्त्वमवधूय मातृकं
पित्र्यमस्मि गमितः शमं यदा ।
नन्वनिन्दितफलो मम त्वया
निग्रहोऽप्ययमनुग्रहीकृतः ॥ ९० ॥

प्रत्यपद्यतेति । राघवः तथेति प्रत्यपद्यत अङ्गीकृतवान्, प्राङ्मुखः इन्द्रदिङ्मुखः सायकं विससर्ज्ज च । सः सायकः सुकृतोऽपि साधुकारिणोऽपि । करोतेः क्विप् । भार्गवस्य दुरत्ययः दुरतिक्रमः स्वर्गमार्गस्य परिघः प्रतिबन्धः अभवत् ॥ ८८ ॥

राघव इति । राघवः अपि क्षम्यतामिति वदन् तपोनिधेः भार्गवस्य चरणौ समस्पृशत् प्रणनाम । तथाहि, तरस्विनां बलवतां तरसा बलेन निर्ज्जितेषु शत्रुषु प्रणतिः एव कीर्त्तये भवति इति शेषः ॥ ८९ ॥

राजसत्त्वमिति । मातुरागतं मातृकं राजसत्त्वं रजोगुणप्रधानत्वम् अवधूय पितुरागतं पित्र्यं शमं यदा गमितः अस्मि

साधयाम्यहमविघ्नमस्तु ते
देवकार्य्यमुपपादयिष्यतः ।
ऊचिवानिति वचः सलक्ष्मणं
लक्ष्मणाग्रजमृषिस्तिरोदधे ॥ ९१ ॥

तस्मिन् गते विजयिनं परिरभ्य रामं
स्नेहादमन्यत पिता पुनरेव जातम् ।
तस्याभवत् क्षणशुचः परितोषलाभः
कक्षाग्निलङ्घिततरोरिव वृष्टिपातः ॥ ९२ ॥

तदा त्वया मम अपेक्षितत्वात् अनिन्दितम् अगर्हितं फलं स्वर्गहानिलक्षणं यस्य सः अयं निग्रहः अपकारः अपि अनुग्रहीकृतः ननु उपकारीकृतः खलु ॥ ९० ॥

साधयामीति । अहं साधयामि गच्छामि, देवकार्य्यम् उपपादयिष्यतः सम्पादयिष्यतः ते अविघ्नम् अस्तु विघ्नाभावः अस्तु । अव्ययं विभक्तीत्यादिना अर्थाभावेऽव्ययीभावः । सह लक्ष्मणेन सलक्ष्मणः तम् । तेन सहेति तुल्ययोग इति बहुव्रीहिः । लक्ष्मणाग्रजं रामम् इति वचः ऊचिवान् उक्तवान् । ब्रूञः क्वसुः । ऋषिः तिरोदधे अन्तर्दधे ॥ ९१ ॥

तस्मिन्निति । तस्मिन् भार्गवे गते सति विजयिनं रामं पिता स्नेहात् परिरभ्य आलिङ्ग्य पुन र्जातमेव अमन्यत । क्षणं शुक् यस्येति विग्रहः क्षणशुचः तस्य दशरथस्य परितोषलाभः सन्तोषप्राप्तिः, कक्षाग्निना दावानलेन । “कक्षः शुष्ककाननवीरुधोः” इति विश्वः । लङ्घितस्य अभिहतस्य तरोः वृष्टिपातः इव, अभवत् ॥ ९२ ॥

अथ पथि गमयित्वा क्लृप्तरम्योपकार्ये
कतिचिदवनिपालः शर्वरीः शर्वकल्पः ।
पुरमविशदयोध्यां मैथिलीदर्शनीनां
कुवलयितगवाक्षां लोचनैरङ्गनानाम् ॥९३॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ सीताविवाहवर्णनो नाम एकादशः सर्गः ।

---

अथेति । अथ ईषदसमाप्तः शर्वः शर्वकल्पः । ईषदसमाप्ताविति कल्पप्प्रत्ययः । अवनिपालः क्लृप्ता रम्या नवा उपकार्या यस्मिन् सः तस्मिन् पथि कतिचित् शर्वरीः रात्रीः गमयित्वा मैथिलीदर्शनीनाम् अङ्गनानां लोचनैः कुवलयानि येषां सञ्जातानि कुवलयिताः । तदस्य सञ्जातं तारकादिभ्य इति इतच्प्रत्ययः । कुवलयिताः गवाक्षाः यस्याः तां पुरम् अयोध्याम् अविशत् प्रविष्टवान् ॥ ९३ ॥

इति श्रीमहामहोपाध्याय-कोलाचल मल्लिनाथसूरिविरचितायां रघुवंशटीकायां सञ्जीवनी-समाख्यायां एकादशः सर्गः ।

---

## द्वादशः सर्गः ।

निर्विष्टविषयस्नेहः स दशान्तमुपेयिवान् ।
आसीदासन्ननिर्वाणः प्रदीपार्च्चिरिवोषसि ॥ १ ॥
तं कर्णमूलमागत्य रामे श्रीर्न्यस्यतामिति ।
कैकेयीशङ्कयेवाह पलितच्छद्मना जरा ॥ २ ॥

वन्दामहे महोद्दण्ड-दोर्दण्डौ रघुनन्दनौ ।
तेजोनिर्जितमार्त्तण्ड-मण्डलौ लोकनन्दनौ ॥

निर्विष्टेति । स्नेहयन्ति प्रीणयन्ति पुरुषमिति स्नेहाः । पचाद्यच् । स्निह्यन्ति पुरुषा येषु इति वा स्नेहाः । अधिकरणार्थे घञ् । विषयाः शब्दादयः ते एव स्नेहाः निर्विष्टाः भुक्ताः विषयस्नेहाः येन सः तथोक्तः । "निर्वेशो भृतिभोगयोः" इति विश्वः । दशा जीवनावस्था तस्याः अन्तं वार्द्धकम् उपेयिवान् सः दशरथः, उषसि प्रदीपार्च्चिः इव दीपज्वाला इव, आसन्नं निर्वाणं मोक्षः यस्य सः तथोक्तः आसीत् । अर्च्चिःपक्षे तु विषयः देशः आश्रयः भाजनम् इति यावत् । "विषयः स्यादिन्द्रियार्थे देशे जनपदेऽपि च" इति विश्वः । "स्नेहस्तैलादिकरसे द्रवे स्यात् सौहृदेऽपि च" इति विश्वः । दशा वर्त्तिका । "दशा वर्त्ताववस्थायाम्" इति विश्वः । निर्व्वाणं विनाशः । "निर्वाणं निर्वृतौ मोक्षे विनाशे गजमज्जने" इति यादवः ॥ १ ॥

तमिति । जरा कैकेयीशङ्कया इव पलितस्य केशादिशौक्ल्यस्य छद्मना मिषेण । "पलितं जरसा शौक्ल्यं केशादौ" इत्यमरः ।

सा पौरान् पौरकान्तस्य रामस्याभ्युदयश्रुतिः ।
प्रत्येकं ह्लादयाञ्चक्रे कुल्येवोद्यानपादपान् ॥ ३ ॥
तस्याभिषेकसम्भारं कल्पितं क्रूरनिश्चया ।
दूषयामास कैकेयी शोकोष्णैः पार्थिवाश्रुभिः ॥ ४ ॥
सा किलाश्वासिता चण्डी भर्त्त्रा तत्संश्रुतौ वरौ ।
उद्ववामेन्द्रसिक्ता भूर्बिलमग्नाविवोरगौ ॥ ५ ॥
तयो श्चतुर्दशैकेन रामं प्राव्राजयत् समाः ।

कर्णमूलं कर्णोपकण्ठम् आगत्य रामे श्रीः राजलक्ष्मीः न्यस्यतां निधीयताम् इति तम् आह । दशरथः वृद्धोऽहमिति विचार्य्य रामस्य यौवराज्याभिषेकं चकाङ्क्ष इत्यर्थः ॥ २ ॥

सेति । सा पौरकान्तस्य रामस्य अभ्युदयश्रुतिः अभिषेकवार्त्ता, कुल्या कृत्रिमा सरित् । "कुल्याल्पा कृत्रिमा सरित्" इत्यमरः । उद्यानपादपानि इव, पौरान् प्रत्येकं ह्लादयाञ्चक्रे ॥ ३ ॥

तस्येति । क्रूरनिश्चया कैकेयी तस्य रामस्य कल्पितं सम्भृतम् अभिषेकस्य सम्भारम् उपकरणं शोकोष्णैः पार्थिवाश्रुभिः दूषयामास स्वदुःखमूलेन राजशोकेन प्रतिबबन्ध इत्यर्थः ॥ ४ ॥

सेति । चण्डी अतिकोपना । "चण्डस्त्वत्यन्तकोपनः" इत्यमरः । सा किल भर्त्त्रा आश्वासिता अनुनीता सती तेन भर्त्त्रा संश्रुतौ प्रतिज्ञातौ वरौ, इन्द्रेण सिक्ता अभिवृष्टा भूः बिले वल्मीकादौ मग्नौ उरगौ इव, उद्ववाम उज्जगार ॥ ५ ॥

तयोरिति । सा तयोर्वरयोर्मध्ये एकेन वरेण रामं चतुर्दश समाः संवत्सरान् । अत्यन्तसंयोगे द्वितीया । प्राव्राज-

द्वितीयेन सुतस्यैच्छत् वैधव्यैकफलां श्रियम् ॥ ६ ॥
पित्रा दत्तां रुदन् रामः प्राङ्महीं प्रत्यपद्यत ।
पश्चाद्वनाय गच्छेति तदाज्ञां मुदितोऽग्रहीत् ॥ ७ ॥
दधतो मङ्गलक्षौमे वसानस्य च वल्कले ।
ददृशुर्विस्मितास्तस्य मुखरागं समं जनाः ॥ ८ ॥
स सीतालक्ष्मणसखः सत्याद् गुरुमलोपयन् ।
विवेश दण्डकारण्यं प्रत्येकञ्च सतां मनः ॥ ९ ॥
राजापि तद्वियोगार्त्तः स्मृत्वा शापं स्वकर्मजम् ।

यत् प्रावासयत्, द्वितीयेन वरेण सुतस्य भरतस्य वैधव्यैकफलां स्ववैधव्यमात्रफलां नतूपभोगफलामिति भावः श्रियम् ऐच्छत् इयेष ॥ ६ ॥

पित्रेति। रामः प्राक् पित्रा दत्तां महीं रुदन् प्रत्यपद्यत अङ्गीचकार स्वत्यागदुःखात् इति भावः। पश्चात् वनाय गच्छ इति एवंरूपां तदाज्ञां पित्राज्ञां मुदितः अग्रहीत् पित्राज्ञाकरणलाभात् इति भावः ॥ ७ ॥

दधत इति। मङ्गलक्षौमे दधतः वल्कले वसानस्य आच्छादयतश्च तस्य रामस्य समम् एकविधं मुखरागं मुखवर्णं जनाः विस्मिताः ददृशुः। सुखदुःखयोरविकृतः इति भावः ॥ ८ ॥

[illegible] इति। सः रामः गुरुं पितरं सत्यात् वरदानरूपात् अल[illegible] अभ्रंशयन् सीतालक्ष्मणयोः सखेति विग्रहः ताभ्यां सहितः सन् दण्डकारण्यं विवेश, सतां मनश्च प्रत्येकं विवेश। पितृभक्त्या सर्व्वे सन्तः सन्तुष्टाः इति भावः ॥ ९ ॥

राजेति। तद्वियोगार्त्तः पुत्रवियोगदुःखितः राजापि

सा पौरान् पौरकान्तस्य रामस्याभ्युदयश्रुतिः ।
प्रत्येकं ह्लादयाञ्चक्रे कुल्येवोद्यानपादपान् ॥ ३ ॥
तस्याभिषेकसम्भारं कल्पितं क्रूरनिश्चया ।
दूषयामास कैकेयी शोकोष्णैः पार्थिवाश्रुभिः ॥ ४ ॥
सा किलाश्वासिता चण्डी भर्त्रा तत्संश्रुतौ वरौ ।
उद्ववामेन्द्रसिक्ता भूर्बिलमग्नाविवोरगौ ॥ ५ ॥
तयोश्चतुर्दशैकेन रामं प्राव्राजयत् समाः ।

कर्णमूलं कर्णोपकण्ठम् आगत्य रामे श्रीः राजलक्ष्मीः न्यस्यतां निधीयताम् इति तम् आह । दशरथः वृद्धोऽहमिति विचार्य्य रामस्य यौवराज्याभिषेकं चकाङ्क्ष इत्यर्थः ॥ २ ॥

सेति । सा पौरकान्तस्य रामस्य अभ्युदयश्रुतिः अभिषेकवार्त्ता, कुल्या कृत्रिमा सरित् । "कुल्याल्पा कृत्रिमा सरित्" इत्यमरः । उद्यानपादपानि इव, पौरान् प्रत्येकं ह्लादयाञ्चक्रे ॥ ३ ॥

तस्येति । क्रूरनिश्चया कैकेयी तस्य रामस्य कल्पितं सम्भृतम् अभिषेकस्य सम्भारम् उपकरणं शोकोष्णैः पार्थिवाश्रुभिः दूषयामास स्वदुःखमूलेन राजशोकेन प्रतिबबन्ध इत्यर्थः ॥ ४ ॥

सेति । चण्डी अतिकोपना । "चण्डस्त्वत्यन्तकोपनः" इत्यमरः । सा किल भर्त्रा आश्वासिता अनुनीता सती तेन भर्त्रा संश्रुतौ प्रतिज्ञातौ वरौ, इन्द्रेण सिक्ता अभिवृष्टा भूः बिले वल्मीकादौ मग्नौ उरगौ इव, उद्ववाम उज्जगार ॥ ५ ॥

तयोरिति । सा तयोर्वरयोर्मध्ये एकेन वरेण रामं चतुर्दश समाः संवत्सरान् । अत्यन्तसंयोगे द्वितीया । प्राव्राज-

द्वितीयेन सुतस्यैच्छत् वैधव्यैकफलां श्रियम्॥ ६ ॥
पित्रा दत्तां रुदन् रामः प्राङ्महीं प्रत्यपद्यत।
पश्चाद्वनाय गच्छेति तदाज्ञां मुदितोऽग्रहीत्॥ ७ ॥
दधतो मङ्गलक्षौमे वसानस्य च वल्कले।
ददृशुर्विस्मितास्तस्य मुखरागं समं जनाः॥ ८ ॥
स सीतालक्ष्मणसखः सत्याद् गुरुमलोपयन्।
विवेश दण्डकारण्यं प्रत्येकञ्च सतां मनः॥ ९ ॥
राजापि तद्वियोगार्त्तः स्मृत्वा शापं स्वकर्मजम्।

यत् प्रावासयत्, द्वितीयेन वरेण सुतस्य भरतस्य वैधव्यैकफलां स्ववैधव्यमात्रफलां नतूपभोगफलामिति भावः श्रियम् ऐच्छत् इयेष॥ ६ ॥

पित्रेति। रामः प्राक् पित्रा दत्तां महीं रुदन् प्रत्यपद्यत अङ्गीचकार स्वत्यागदुःखात् इति भावः। पश्चात् वनाय गच्छ इति एवंरूपां तदाज्ञां पित्राज्ञां मुदितः अग्रहीत् पित्राज्ञाकरणलाभात् इति भावः॥ ७ ॥

दधत इति। मङ्गलक्षौमे दधतः वल्कले वसानस्य आच्छादयतश्च तस्य रामस्य समम् एकविधं मुखरागं मुखवर्णं जनाः विस्मिताः ददृशुः। सुखदुःखयोरविकृतः इति भावः॥ ८ ॥

स इति। सः रामः गुरुं पितरं सत्यात् वरदानरूपात् अलोपयन् अभ्रंशयन् सीतालक्ष्मणयोः सखेति विग्रहः ताभ्यां सहितः सन् दण्डकारण्यं विवेश, सतां मनश्च प्रत्येकं विवेश। पितृभक्त्या सर्व्वे सन्तः सन्तुष्टाः इति भावः॥ ९ ॥

राजेति। तद्वियोगार्त्तः पुत्रवियोगदुःखितः राजापि

शरीरत्यागमात्रेण शुद्धिलाभ समन्यत ॥ १० ॥
विप्रोषितकुमारं तद्राज्य मस्तमितेश्वरम् ।
रन्ध्रान्वेपणदक्षाणां द्विषा मामिषतां ययौ ॥ ११ ॥
अथानाथाः प्रकृतयो मातृबन्धुनिवासिनम् ।
मौलै रानाययामासु र्भरतं स्तम्भिताश्रुभिः ॥ १२ ॥
श्रुत्वा तथाविधं मृत्युं कैकेयीतनयः पितुः ।
मातु र्न केवलं स्वस्याः श्रियोऽप्यासीत् पराङ्मुखः ॥१३॥
ससैन्यश्चान्वगाद्रामं दर्शितानाश्रमालयैः ।

स्वकर्म्मणा मुनिपुत्रवधरूपेण जातः स्वकर्म्मजः तं शापं पुत्रशोकजं मरणात्मकं स्मृत्वा शरीरत्यागमात्रेण शुद्धिलाभं प्रायश्चित्त ममन्यतेत्यर्थः ॥ १० ॥

विप्रोषितेति। विप्रोषिताः गताः कुमाराः यस्मिन् तत् तथोक्तम् अस्तमितः ईश्वरः राजा यस्य तत् तथोक्तं तत् राज्यं रन्ध्रान्वेषणदक्षाणां द्विषाम् आमिषतां भोग्यवस्तुतां ययौ। "आमिषं भोग्यवस्तुनि" इति केशवः ॥ ११ ॥

अथेति। अथ अनाथाः प्रकृतयः अमात्याः। "प्रकृतिः सहजे योना वमात्ये परमात्मनि" इति विश्वः। मातृबन्धुनिवासिनं भरतं स्तम्भिताश्रुभिः पितृमरणगुप्त्यर्थम् इति भावः, मौलैः सचिवैः आनाययामासुः आगमयाञ्चक्रुः ॥ १२ ॥

श्रुत्वेति। कैकेयीतनयः भरतः पितुः तथाविधं स्वमातृमूलं मृत्युं मरणं श्रुत्वा स्वस्याः मातुः केवलं पराङ्मुखः न किन्तु श्रियः अपि पराङ्मुखः आसीत् ॥ १३ ॥

ससैन्येति। ससैन्यः भरतः रामम् अन्वगाच्च। किं कुर्व्वन्?

तस्य पश्यन् ससौमित्रे रुदस्रु र्वसतिद्रुमान् ॥१४॥
चित्रकूटवनस्थञ्च कथितस्वर्गतिर्गुरोः ।
लच्म्या निमन्त्रयाञ्चक्रे तमनुच्छिष्टसम्पदा ॥ १५ ॥
स हि प्रथमजे तस्मिन्नकृतश्रीपरिग्रहे ।
परिवेत्तार मात्मानं मेने स्वीकरणाद्भुवः ॥१६॥
[illegible]मशक्य मपाक्रष्टुं निदेशात् स्वर्गिणः पितुः ।
[illegible]ययाचे पादुके पश्चात् कर्त्तुं राज्याधिदेवते ॥ १७ ॥

[illegible]मालयैः वनवासिभिः दर्शितान् एते रामनिवासा इति [illegible]थितान् ससौमित्रेः लक्ष्मणसहितस्य तस्य रामस्य वसतिद्रुमान् [illegible]वृक्षान् पश्यन् उदस्रुः रुदन् ॥ १४ ॥

चित्रेति । चित्रकूटवनस्थं तं रामञ्च गुरोः पितुः कथितस्वर्गतिः कथितपितृमरणः सन् इत्यर्थः अनुच्छिष्टा अननुभूत[illegible]शिष्टा सम्पत् गुणोत्कर्षः यस्याः सा । "सम्पत् गुणोत्कर्षः" इति केशवः । तया [illegible]ति लक्ष्म्या कारणेन निमन्त्रयाञ्चक्रे आहूतवान् ॥ १५ ॥

स इति । सः हि भरतः प्रथमजे अग्रजे तस्मिन् रामे [illegible]कृतश्रीपरिग्रहे सति स्वयं भुवः स्वीकरणात् आत्मानं परि[illegible]वेत्तारं मेने । "परिवेत्तानुजोऽनूढ़े ज्येष्ठे दारपरिग्रहात्" इत्यमरः । भूपरिग्रहोऽपि दारपरिग्रहसमः इति भावः ॥१६॥

तमिति । स्वर्गिणः पितुः निदेशात् अपाक्रष्टुं निवर्त्तयितुम् अशक्यं तं रामं पश्चात् राज्याधिदेवते स्वामिन्यौ कर्त्तुं पादुके ययाचे ॥ १७ ॥

स विसृष्टस्तथेत्युक्त्वा भ्राता नैवाविशत् पुरीम् ।
नन्दिग्रामगत स्तस्य राज्यं न्यासमिवाभुनक् ॥१८॥
दृढ़भक्तिरिति ज्येष्ठे राज्यतृष्णापराङ्मुखः ।
मातुः पापस्य भरतः प्रायश्चित्तमिवाकरोत् ॥ १९ ॥

स इति। सः भरतः भ्राता रामेण तथेत्युक्त्वा विसृष्टः सन् पुरीम् अयोध्यां नाविशदेव, किन्तु नन्दिग्रामगतः सन् तस्य रामस्य राज्यं न्यासम् इव निक्षेपम् इव अभुनक् अपालयत्, नतूपभुक्तवान् इत्यर्थः, अन्यथा भुजोऽनवन इत्यात्मनेपद प्रसङ्गात्। भुजेर्लङ् ॥ १८ ॥

दृढ़ेति। ज्येष्ठे दृढ़भक्तिः राज्यतृष्णापराङ्मुखः भरतः पूर्व्वोक्तानुष्ठानेन मातुः पापस्य प्रायश्चित्तम् अपनोदकं अकरोत् इव, इत्युत्प्रेक्षा। दृढ़भक्तिरित्यत्र दृढ़शब्दस्य [illegible]त् पुंवदित्यादिना पुंवद्भावो दुर्घटः अप्रियादिष्विति [illegible]ज्यं भक्तिशब्दस्य प्रियादिषु पाठात्, अतो दृढ़ं भक्तिर[illegible] यथौ। पूर्व्वपदो बहुव्रीहिरिति गणव्याख्याने दृढ़[illegible]। "प्रकृतिः पूर्व्वपदस्य नपुंसकत्वस्य विवक्षितत्वात् सि[illegible]निवा- प्तिकारस्य दीर्घनिवृत्तिमात्रपरो दृढ़भक्तिशब्दो लिङ्गवि[illegible] स्यानुपकारत्वात् स्त्रीत्वमविवक्षितमेव तस्मादस्त्रीलिङ्ग दृढ़भक्तिशब्दस्यायं प्रयोग इत्यभिप्रायः। न्यासकारोऽपि [illegible] भोजराजस्तु कर्म्मसाधनस्यैव भक्तिशब्दस्य प्रिया[illegible] [illegible]न भवानीभक्तिरित्यादौ कर्म्मसाधनत्वात् पुंवद्भावप्रतिषेध[illegible], दृढ़- भक्तिरित्यादौ भावसाधनत्वात् पुंवद्भावसिद्धिः पूर्व्व[illegible]दत्वे- त्याह ॥ १९ ॥

रामोऽपि सह वैदेह्या वने वन्येन वर्त्तयन् ।
चचार सानुजः शान्तो वृद्धेक्ष्वाकुव्रतं युवा ॥ २० ॥
प्रभावस्तम्भितच्छायमाश्रितः स वनस्पतिम् ।
कदाचिदङ्के सीतायाः शिश्ये किञ्चिदिव श्रमात् ॥२१॥
ऐन्द्रिः किल नखैस्तस्याः विददार स्तनौ द्विजः ।
प्रियोपभोगचिह्नेषु पौरोभाग्यमिवाचरन् ॥ २२ ॥
तस्मिन्नास्थदिषीकास्त्रं रामो रामावबोधितः ।

राम इति । सानुजः शान्तः रामः अपि वैदेह्या सह वन्येन वनभवेन कन्दमूलादिना वर्त्तयन् वृत्तिं कुर्व्वन् जीवन् ाकूणां व्रतं वनवासात्मकं युवा यौवनस्थः एव चचार ॥२०॥

भावेति । सः रामः कदाचित् प्रभावेण स्वमहिम्ना स्तम्भिता ता छाया यस्य तं वनस्पतिम् आश्रितः सन् किञ्चित् दिव सीतायाः अङ्के शिश्ये सुष्वाप ॥ २१ ॥

ति । ऐन्द्रिः इन्द्रस्य पुत्रः द्विजः पक्षी काकः तस्याः प्रियस्य रामस्य उपभोगचिह्नेषु तत्कृतनखक्षते पुरोभागिनः दोषैकदर्शिनः कर्म्म पौरोभाग्यम् । "दोषैकदृक् पुरोभागी" इत्यमरः । दुःश्लिष्टदोषघातम् आचरन् व नखैः विददार विलिलेख । किलेत्यैतिह्ये ॥ २२ ॥

स्मिन्निति । रामया सीतया अवबोधितः रामः तस्मिन् काके इषीकास्त्रं काशास्त्रम् । "इषीका काशमुच्यते" इति हलायुधः । आस्थत् अस्यति स्म । असु क्षेपणे इति धातोर्लुङ्, अस्यतिवक्तिख्यातिभ्योऽङित्यङ्,अस्यतेस्थुगिति थुगा-

आत्मानं मुमुचे तस्मादेकनेत्रव्ययेन सः ॥ २३ ॥

रामस्त्वासन्नदेशत्वात् भरतागमनं पुनः ।
आशङ्क्योत्सुकसारङ्गां चित्रकूटस्थलीं जहौ ॥ २४ ॥

प्रययावातिथेयेषु वसन्नृषिकुलेषु सः ।
दक्षिणां दिशमृक्षेषु वार्षिकेष्विव भास्करः ॥ २५ ॥

बभौ तमनुगच्छन्ती विदेहाधिपतेः सुता ।
प्रतिषिद्धापि कैकेय्या लक्ष्मीरिव गुणोन्मुखी ॥ २६ ॥

गमः । सः काकः एकनेत्रस्य व्ययेन दानेन तस्मात् अस्त्रात् आत्मानं मुमुचे मुक्तवान् । मुचेः कर्त्तरि लिट् । धेनुं मुमोचेतिवत् प्रयोगः ॥ २३ ॥

राम इति । रामस्तु आसन्नदेशत्वात् हेतोः पुनः भरतागमनम् आशङ्क्य उत्सुकसारङ्गाम् उत्कण्ठितहरिणां चित्रकूटस्थलीं जहौ तत्याज । आसन्नश्चासौ देशश्चेति विग्रहः ॥ २४ ॥

प्रययाविति । सः रामः अतिथिषु साधूनि आतिथेयानि । पथ्यतिथिवसतिस्वपतेर्ढञिति ढञ्प्रत्ययः । तेषु ऋषिकुलेषु ऋष्यावसेषु । "कुलं कुल्ये गणे देहे गेहे जनपदेऽन्वये" इति [illegible] हैमः । वर्षासु भवानि वार्षिकाणि । वर्षाभ्यष्ठगिति ठक्प्रत्ययः । तेषु ऋक्षेषु नक्षत्रेषु राशिषु वा भास्करः इव, वसन् दक्षिणां दिशं प्रययौ ॥ २५ ॥

बभाविति । तं रामम् अनुगच्छन्ती विदेहाधिपतेः सुता सीता कैकेय्या प्रतिषिद्धा निवारितापि गुणोन्मुखी गुणोत्सुका लक्ष्मीः राजलक्ष्मीरिव बभौ ॥ २६ ॥

अनुसूयातिसृष्टेन पुण्यगन्धेन काननम् ।
सा चकाराङ्गरागेण पुष्पोच्चलितषट्पदम् ॥ २७ ॥
सन्ध्याभ्रकपिशस्तस्य विराधो नाम राक्षसः ।
अतिष्ठन्मार्गमावृत्य रामस्येन्दोरिव ग्रहः ॥ २८ ॥
स जहार तयोर्मध्ये मैथिलीं लोकशोषणः ।
नभोनभस्ययो र्वृष्टिमवग्रह इवान्तरे ॥ २९ ॥
तं विनिष्पिष्य काकुत्स्थौ पुरा दूषयति स्थलीम् ।
गन्धेनाशुचिना चेति वसुधायां निचख्नतुः ॥ ३० ॥

अनुसूयेति । सा सीता अनुसूयया अत्रिभार्य्यया अतिसृष्टेन दत्तेन पुण्यगन्धेन अङ्गरागेण काननं वनं पुष्पेभ्यः उच्चलिताः निर्गताः षट्पदाः यस्मिन् तत् तथाभूतं चकार ॥२७॥

सन्ध्येति । सन्ध्याभ्रकपिशः विराधो नाम राक्षसः, ग्रहः राहुः इव इन्दोः, तस्य रामस्य मार्गम् अध्वानम् आवृत्य अवरुध्य अतिष्ठत् ॥ २८ ॥

स इति । लोकस्य शोषणः शोषकः सः राक्षसः तयोः रामलक्ष्मणयोः मध्ये मैथिलीं, नभोनभस्ययोः श्रावणभाद्रपदयोः अन्तरे मध्ये वृष्टिम् अवग्रहः वर्षप्रतिबन्धः इव, जहार । वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ" इत्यमरः ॥ २९ ॥

तमिति । काकुत्स्थस्य गोत्रापत्ये पुमांसौ काकुत्स्थौ रामलक्ष्मणौ तं विराधं विनिष्पिष्य हत्वा, अशुचिना अपवित्रेण गन्धेन स्थलीम् आश्रमभुवं पुरा दूषयति दूषयिष्यति इति हेतोः। यावत् पुरानिपातयोर्लडिति भविष्यदर्थे लट् । वसुधायां निचख्नतुः भूमौ खनित्वा निक्षिप्तवन्तौ च ॥ ३० ॥

पञ्चवट्यां ततो रामः शासनात् कुम्भजन्मनः ।
अनपोढ़स्थितिस्तस्थौ विन्ध्याद्रिः प्रकृताविव ॥ ३१ ॥
रावणावरजा तत्र राघवं मदनातुरा ।
अभिपेदे निदाघार्त्ता व्यालीव मलयद्रुमम् ॥ ३२ ॥
सा सीतासन्निधावेव तं वव्रे कथितान्वया ।
अत्यारूढ़ो हि नारीणां मकालज्ञो मनोभवः ॥३३॥
कलत्रवानहं बाले कनीयांसं भजस्व मे ।

पञ्चवट्यामिति। ततः रामः कुम्भजन्मनः अगस्त्यस्य शासनात्, पञ्चानां वटानां समाहारः पञ्चवटी । तद्धितार्थेति तत्पुरुषः, संख्यापूर्व्वो द्विगुरिति द्विगुसंज्ञायां द्विगोरिति ङीप्, द्विगुरेकवचनमिति एकवचनम् । तस्यां पञ्चवट्यां विन्ध्याद्रिः प्रकृतौ वृद्धेः पूर्व्वावस्थायाम् इव अनपोढ़स्थितिः अनतिक्रान्तमर्य्यादः तस्थौ ॥ ३१ ॥

रावणावरजेति। तत्र पञ्चवट्यां मदनातुरा रावणावरजा शूर्पणखा । पूर्व्वपदात् संज्ञायामग इति णत्वम् । राघवं, निदाघार्त्ता घर्मतप्ता व्याकुला व्याली भुजङ्गी मलयद्रुमं चन्दनद्रुमम् इव, अभिपेदे प्राप ॥ ३२ ॥

सेति। सा शूर्पणखा सीतासन्निधौ एव कथितान्वया कथितवंशा सती तं रामं वव्रे वृतवती । तथाहि, अत्यारूढ़ः अतिप्रवृद्धः नारीणां मनोभवः कामः कालज्ञः अवसरज्ञः न भवतीति अकालज्ञः हि ॥ ३३ ॥

कलत्रवानिति। वृषः पुमान् । “वृषः स्याद् वासवे धर्म्मे सौरभेये च शुक्रले । पुं राशिभेदयोः शृङ्ग्यां मूषकश्रेष्ठयोरपि”

इति रामो वृषस्यन्तीं वृषस्कन्धः शशास ताम् ॥३४॥
ज्येष्ठाभिगमनात् पूर्व्वं तेनाप्यनभिनन्दिता।
साभूद्रामाश्रया भूयो नदीवोभयकूलभाक् ॥ ३५ ॥
संरम्भं मैथिलीहासः क्षणसौम्यां निनाय ताम्।
निवातस्तिमितां वेलां चन्द्रोदय इवोदधेः ॥ ३६ ॥
फलमस्योपहासस्य सद्यः प्राप्स्यसि पश्य माम्।

इति विश्वः। वृषं पुरुषम् आत्मार्थम् इच्छतीति वृषस्यन्ती कामुकी। "वृषस्यन्ती च कामुकी" इत्यमरः। सुप आत्मनः क्यजिति क्यच्प्रत्ययः, अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचीति असुगागमः, ततः लटः शत्रादेशः, उगितश्चेति ङीप्। श्लोकार्थस्तु, वृषस्कन्धो रामः वृषस्यन्तीं तां राक्षसीं हे बाले अहं कलत्रवान् मे कनीयांसं कनिष्ठं भजस्वेति शशास आज्ञापितवान् ॥ ३४ ॥

ज्येष्ठाभिगमनादिति। पूर्व्वं ज्येष्ठाभिगमनात् तेन लक्ष्मणेन अपि अनभिनन्दिता नाङ्गीकृता भूयः रामाश्रया सा राक्षसी उभे कूले भजतीति उभयकूलभाक् नदी इव अभूत्। सा हि यातायाताभ्यां पर्य्यायेण कूलद्वयगामिनी नदीसदृशी अभूत् इत्यर्थः ॥ ३५ ॥

संरम्भमिति। मैथिलीहासः क्षणं सौम्यां सौम्याकारां तां राक्षसीं, निवातेन स्तिमितां निश्चलाम् उदधेः वेलाम् अम्बुविकृतिम् अम्बुपूरम् इत्यर्थः। "अब्ध्यम्बुविकृतौ वेला" इत्यमरः। चन्द्रोदयः इव, संरम्भं संक्षोभं निनाय ॥ ३६ ॥

फलमिति। श्लोकद्वयेनान्वयः, अस्य उपहासस्य फलं सद्यः

मृग्याः परिभवो व्याघ्र्यामित्यवेहि त्वया कृतम् ॥३७॥
इत्युक्त्वा मैथिलीं भर्तुरङ्के निविशतीं भयात् ।
रूपं शूर्पणखानाम्नः सदृशं प्रत्यपद्यत ॥ ३८ ॥
लक्ष्मणः प्रथमं श्रुत्वा कोकिलामञ्जुवादिनीम् ।
शिवाघोरस्वनां पश्चाद् बुबुधे विकृतेति ताम् ॥ ३९ ॥
पर्णशालामथ क्षिप्रं विकृष्टासिः प्रविश्य सः ।
वैरूप्यपौनरुक्त्येन भीषणां तामयोजयत् ॥ ४० ॥

समाप्त्येव प्राप्स्यसि, मां पश्य, त्वया कर्त्र्या कृतम् उपहासरूपं कारणं व्याघ्र्यां विषये मृग्याः कर्त्र्याः परिभवः इति अवेहि ॥३७॥

इतीति । भयात् भर्त्तुः अङ्के निविशतीम् आलिङ्गन्तीं मैथिलीम् इत्युक्त्वा शूर्पणखा नाम्नः सदृशं शूर्पाकारनखयुक्ताम् इत्यर्थः रूपम् आकारं प्रत्यपद्यत स्वीचकार अदर्शयत् इत्यर्थः ॥ ३८ ॥

लक्ष्मण इति । लक्ष्मणः प्रथमं कोकिलावत् मञ्जुवादिनीं पश्चात् शिवावत् घोरस्वनां तां शूर्पणखां श्रुत्वा तस्याः स्वनं श्रुत्वा इत्यर्थः, विकृता मायाविनी इति बुबुधे बुद्धवान् । कर्त्तरि लिट् ॥ ३९ ॥

पर्णशालामिति । अथ सः लक्ष्मणः विकृष्टासिः कोशोद्धृतखड्गः सन् क्षिप्रं पर्णशालां प्रविश्य भीषयति इति भीषणाम् । नन्द्यादित्वात् ल्युः कर्त्तरि । तां राक्षसीं वैरूप्यस्य पौनरुक्त्यं द्वैगुण्यं लक्षणया, तेन अयोजयत् योजितवान् । स्वभावत एव विकृतां तां कर्णादिच्छेदेन पुनरतिविकृतामकरोदित्यर्थः ॥४०॥

सा वक्रनखधारिण्या वेणुकर्कशपर्व्वया ।
अङ्कुशाकारयाङ्गुल्या तावतर्ज्जयदम्बरे ॥ ४१ ॥
प्राप्य चाशु जनस्थानं खरादिभ्य स्तथाविधम् ।
रामोपक्रममाचख्यौ रक्षःपरिभवं नवम् ॥ ४२ ॥
मुखावयवलूनां तां नैर्ऋता यत् पुरो दधुः ।
रामाभियायिनां तेषां तदेवाभूदमङ्गलम् ॥ ४३ ॥

सेति । सा वक्रनखं धारयतीति वक्रनखधारिणी तया वेणुवत् कर्कशपर्व्वया अत एव अङ्कुशस्य आकारः इव आकारः यस्याः सा तया अङ्गुल्या तौ राघवौ अम्बरे व्योम्नि स्थिता । "अम्बरं व्योम्नि वाससि" इत्यमरः । अतर्ज्जयत् अभर्त्सयत् । तर्ज्जभर्त्सन इति धातोश्चौरादिकादनुदात्तेत्त्वादात्मनेपदेन भाव्यं तथापि चक्षिङोङित्करणात् ज्ञापकादनुदात्तेत्त्वनिमित्तस्यानित्यत्वात् परस्मैपदसूत्रमित्युक्तम् आख्यातचन्द्रिकायां तर्ज्जयते भर्त्सयते तर्ज्जतीत्यपि दृश्यते क्वचिच्चिति ॥ ४१ ॥

प्राप्येति । सा आशु जनस्थानं प्राप्य खरादिभ्यः राक्षसेभ्यः तथाविधं स्वाङ्गच्छेदात्मकम् उपक्रम्यते इति उपक्रमः । कर्म्मणि घञ्प्रत्ययः । रामस्य कर्त्तुः उपक्रमः रामोपक्रमं रामेणादावुपक्रान्तम् इत्यर्थः, उपज्ञोपक्रमं तदाद्याचिख्यासायामिति क्लीवत्वम् । तत् नवं रक्षसां कर्म्मभूतानां परिभवम् आचख्यौ च ॥ ४२ ॥

मुखेति । नैर्ऋता राक्षसाः । "नैर्ऋतो यातुरक्षसी" इत्यमरः । मुखावयवेषु कर्णादिषु लूनां छिन्नां तां पुरः दधुः अग्रे

उदायुधानापततस्तान् दृप्तान् प्रेक्ष्य राघवः।
निदधे विजयाशंसां चापे सीताञ्च लक्ष्मणे ॥ ४४ ॥
एको दाशरथिः कामं यातुधानाः सहस्रशः।
ते तु यावन्त एवाजौ तावांश्च ददृशे स तैः ॥ ४५ ॥
असज्जनेन काकुत्स्थः प्रयुक्तमथ दूषणम्।
न चक्षमे शुभाचारः स दूषणमिवात्मनः ॥ ४६ ॥
तं शरैः प्रतिजग्राह खरत्रिशिरसौ च सः।

चक्षुः इति यत् तत् एव रामाभियायिनां रामम् अभिद्रवतां तेषाम् अमङ्गलम् अभूत् ॥ ४३ ॥

उदिति। उदायुधान् उद्यतायुधान् आपततः आगच्छतः दृप्तान् तान् खरादीन् प्रेक्ष्य राघवः चापे विजयस्य आशंसाम् आशां लक्ष्मणे सीतां च निदधे। सीतारक्षणे लक्ष्मणं नियुज्य स्वयं युद्धाय सन्नद्धः इति भावः ॥ ४४ ॥

एक इति। दाशरथिः रामः एकः अद्वितीयः यातुधानाः कामं सहस्रशः सन्ति इति शेषः, तैः यातुधानैः तु सः रामः आजौ ते यातुधानाः यावन्तः यावत्संख्यकाः एव तावान् तावत्संख्यकश्च ददृशे ॥ ४५ ॥

असदिति। अथ शुभाचारः रणे साधुचारी सद्वृत्तश्च सः काकुत्स्थः असज्जनेन दुर्जनेन रक्षोजनेन च प्रयुक्तं प्रेषितम् उच्चारितं च दूषणं दूषणाख्यं राक्षसम् आत्मनः दूषणं दोषम् इव न चक्षमे न सेहे प्रतिकर्तुं प्रवृत्तः इत्यर्थः ॥ ४६ ॥

तमिति। सः रामः तं दूषणं खरत्रिशिरसौ च शरैः प्रतिजग्राह प्रतिजहार इत्यर्थः। क्रमशः यथाक्रमं प्रयुक्ताः अपि

क्रमशस्ते पुनस्तस्य चापात् सममिवोद्ययुः ॥ ४७ ॥
तैस्त्रयाणां शितैर्वाणैर्यथापूर्व्वविशुद्धिभिः ।
आयुर्देहातिगैः पीतं रुधिरन्तु पतत्त्रिभिः ॥ ४८ ॥
तस्मिन् रामशरोत्कृत्ते बले महति रक्षसाम् ।
उत्थितं ददृशेऽन्यच्च कबन्धेभ्यो न किञ्चन ॥ ४९ ॥
सा वाणवर्षिणं रामं योधयित्वा सुरद्विषाम् ।
अप्रबोधाय सुष्वाप गृध्रच्छाये वरूथिनी ॥ ५० ॥

इति शेषः तस्य ते शराः पुनः चापात् समं युगपदिव उद्ययुः । अतिलघुहस्तः इति भावः ॥ ४७ ॥

तैरिति । देहम् अतीत्य भित्त्वा गच्छन्तीति देहातिगाः तैः यथा स्थिता पूर्व्वं विशुद्धिः येषां तैः अतिवेगत्वेन देहभेदात् प्रागिव रुधिरलेपरहितैरित्यर्थः शितैस्तीक्ष्णैः तैर्वाणैः त्रयाणां खरादीनाम् आयुः पीतं रुधिरं तु पतत्त्रिभिः पीतम् ॥ ४८ ॥

तस्मिन्निति । तस्मिन् रामशरैः उत्कृत्ते छिन्ने महति रक्षसां बले उत्थितम् उत्थानक्रियाविशिष्टं प्राणिनां कबन्धेभ्यः शिरोहीनशरीरेभ्यः । "कबन्धोऽस्त्री क्रियायुक्तम् अपमूर्द्धकलेवरम्" इत्यमरः । अन्यच्च अन्यत् किञ्चन न ददृशे । कबन्धेभ्य इत्यत्रान्यारादिति पञ्चमी । निःशेषं हतम् इत्यर्थः ॥ ४९ ॥

सेति । सा सुरद्विषां वरूथिनी वाणवर्षिणं रामं योधयित्वा युद्धं कारयित्वा गृध्राणां छाया गृध्रच्छायम् । छायाबाहुल्ये इति क्लीवत्वम् । तस्मिन् अप्रबोधाय अपुनर्बोधाय सुष्वाप ममार इत्यर्थः । अत्र सुरतश्रान्तकान्तासमाधिर्व्यज्यते ॥ ५० ॥

राघवास्त्रविदीर्णानां रावणं प्रति रक्षसाम् ।
तेषां शूर्पणखैवैका दुष्प्रवृत्तिहराऽभवत् ॥ ५१ ॥
निग्रहात् स्वसु राप्तानां वधाच्च धनदानुजः ।
रामेण निहते मेने पदं दशसु मूर्द्धसु ॥ ५२ ॥
रक्षसा मृगरूपेण वञ्चयित्वा स राघवौ ।
जहार सीतां पक्षीन्द्रप्रयासक्षणविघ्नितः ॥ ५३ ॥
तौ सीतान्वेषिणौ गृध्रं लूनपक्षमपश्यताम् ।
प्राणैर्दशरथप्रीते रनृणं कण्ठवर्त्तिभिः ॥ ५४ ॥

राघवेति । एका शूर्पवत् नखानि यस्याः सा शूर्पणखा । पूर्व्वपदात् संज्ञायामिति णत्वम्, नखमुखात् संज्ञायामिति ङीप् प्रतिषेधः । सा एव रावणं प्रति राघवास्त्रैः विदीर्णानां हतानां तेषां रक्षसां खरादीनां दुष्प्रवृत्तिः वार्त्तां तां हरति प्रापयति इति दुष्प्रवृत्तिहरा अभवत् । हरतेरनुद्यमनेऽजित्यच्-प्रत्ययः ॥ ५१ ॥

निग्रहादिति । स्वसुः शूर्पणखायाः निग्रहात् अङ्गच्छेदात् आप्तानां बन्धूनां खरादीनां वधाच्च कारणात् धनदानुजः रावणः रामेण दशसु मूर्द्धसु पदं पादं निहितं मेने ॥ ५२ ॥

रक्षसेति । सः रावणः मृगरूपेण रक्षसा मारीचेन राघवौ वञ्चयित्वा प्रतार्य्य पक्षीन्द्रस्य जटायुषः प्रयासेन युद्धरूपेण क्षणं विघ्नितः सञ्जातविघ्नः सन् सीतां जहार ॥ ५३ ॥

ताविति । सीतान्वेषिणौ तौ राघवौ लूनपक्षं रावणेन छिन्नपक्षं कण्ठवर्त्तिभिः प्राणैः दशरथप्रीतेः दशरथसख्यस्य

स रावणहृतां ताभ्यां वचसाचष्ट मैथिलीम् ।
आत्मनः सुमहत् कर्म्म व्रणै रावेद्य संस्थितः ॥५५॥
तयोस्तस्मिन् नवीभूत पितृव्यापत्तिशोकयोः ।
पितरीवाग्निसंस्कारात् परा ववृतिरे क्रियाः ॥ ५६ ॥
वधनिर्द्धूतशापस्य कबन्धस्योपदेशतः ।
मुमूर्च्छ सख्यं रामस्य समानव्यसने हरौ ॥ ५७ ॥
स हत्वा बालिनं वीरः तत्पदे चिरकाङ्क्षिते ।

अनृणम् ऋणैः विमुक्तं गृध्रं जटायुषम् अपश्यतां दृष्टवन्तौ । दृशेर्लङि रूपम् ॥ ५४ ॥

स इति । सः जटायुः रावणहृतां मैथिलीं ताभ्यां रामलक्ष्मणाभ्याम् । क्रियाग्रहणमपि कर्त्तव्यमिति सम्प्रदानत्वाच्चतुर्थी । वचसा वाग्वृत्त्या आचष्ट, आत्मनः सुमहत् कर्म्म युद्धरूपं व्रणैः आवेद्य संस्थितः मृतः ॥ ५५ ॥

तयोरिति । व्यापत्तिः मरणं नवीभूतः पितृव्यापत्तिशोकः ययोः तौ तयोः राघवयोः तस्मिन् गृध्रे पितरीव अग्निसंस्कारात् अग्निसंस्कारम् आरभ्य पराः उत्तराः क्रियाः ववृतिरे अवर्त्तन्त तस्य पितृवदौर्द्ध्वदेहिकं चक्रतुः इत्यर्थः ॥५६॥

वधेति । वधेन रामकृतेन निर्द्धूतशापस्य देवभुवं गतस्य कबन्धस्य रक्षोविशेषस्य उपदेशतः रामस्य समानव्यसने समानापदि सख्यार्थिनि इत्यर्थः हरौ कपौ सुग्रीवे । "शुकाहिकपिभेकेषु हरि र्ना कपिले त्रिषु" इत्यमरः । सख्यं मुमूर्च्छ ववृधे ॥ ५७ ॥

स इति । वीरः सः रामः बालिनं सुग्रीवाग्रजं हत्वा चिर-

धातोः स्थान इवादेशं सुग्रीवं संन्यवेशयत् ॥ ५८ ॥
इतस्ततश्च वैदेहीमन्वेष्टुं भर्त्तृचोदिताः ।
कपयश्चेरुरार्त्तस्य रामस्येव मनोरथाः ॥ ५९ ॥
प्रवृत्तावुपलब्धायां तस्याः सम्पातिदर्शनात् ।
मारुतिः सागरं तीर्णः संसारमिव निर्म्ममः ॥ ६० ॥
दृष्टा विचिन्वता तेन लङ्कायां राक्षसीवृता ।

काङ्क्षिते तत्पदे बालिस्थाने, धातोः स्थाने आदेशम् इव आदेशभूतं धात्वन्तरमिव इत्यर्थः, सुग्रीवं संन्यवेशयत् स्थापितवान् । यथा अस्तेर्भूरिति अस्तिधातोः स्थाने आदेशो भूधातु रस्तिकार्य्यमशेषं समभिधत्ते तद्वत् इति भावः । आदेशो नाम शब्दान्तरस्य स्थाने विधीयमानं शब्दान्तरमभिधीयते ॥ ५८ ॥

इतस्ततश्चेति । वैदेहीम् अन्वेष्टुं मार्गितुं भर्त्रा सुग्रीवेण चोदिताः प्रयुक्ताः कपयः हनुमत्प्रमुखाः, आर्त्तस्य विरहातुरस्य रामस्य मनोरथाः कामाः इव, इतस्ततः चेरुः नानादेशेषु बभ्रमुश्च ॥ ५९ ॥

प्रवृत्ताविति । सम्पातिर्नाम जटायुषः ज्यायान् भ्राता तस्य दर्शनात् तन्मुखात् इति भावः, तस्याः सीतायाः प्रवृत्तौ वार्त्तायाम् । "वार्त्ता प्रवृत्तिर्वृत्तान्तः" इत्यमरः । उपलब्धायां ज्ञातायां सत्यां मारुतस्यापत्यं पुमान् मारुतिः हनुमान् सागरं ममेत्येतदव्ययम् ममतावाचि तद्रहितः निर्ममः निःस्पृहः संसारम् अविद्याबन्धनमिव, तीर्णः ततार । तरतेः कर्त्तरि क्तः ॥ ६० ॥

दृष्टेति । लङ्कायां रावणराजधान्यां विचिन्वता मृगय-

जानकी विषवल्लीभिः परीतेव महौषधिः ॥ ६१ ॥
तस्यै भर्त्तुरभिज्ञानमङ्गुलीयं ददौ कपिः।
प्रत्युद्गतमिवानुष्णैस्तदानन्दाश्रुविन्दुभिः ॥ ६२ ॥
निर्वाप्य प्रियसन्देशैः सीतामक्षवधोद्धतः।
स ददाह पुरीं लङ्कां क्षणसोढ़ारिनिग्रहः ॥ ६३ ॥
प्रत्यभिज्ञानरत्नञ्च रामायादर्शयत् कृती।
हृदयं स्वयमायातं वैदेह्या इव मूर्त्तिमत् ॥ ६४ ॥

मारुतिना राक्षसीभिः वृता जानकी, विषवल्लीभिः परीता परिवृता महौषधिः सञ्जीवनी लतेव, दृष्टा ॥ ६१ ॥

तस्या इति। कपिः हनुमान् भर्त्तुः रामस्य सम्बन्धि अभिज्ञानं प्रत्यभिज्ञानसाधकम् अङ्गुलीयम् ऊर्म्मिकाम्। "अङ्गुलीयकमूर्म्मिका" इत्यमरः। जिह्वामूलाङ्गुलेश्छ इति छप्रत्ययः। तस्यै जानक्यै ददौ। किंविधमङ्गुलीयम्? अनुष्णैः शीतलैः तस्याः आनन्दाश्रुविन्दुभिः प्रत्युद्गतमिव स्थितम्। भर्त्रभिज्ञानदर्शनादानन्दवाष्पो जातः इत्यर्थः ॥ ६२ ॥

निर्वाप्येति। सः कपिः प्रियस्य रामस्य सन्देशैः वाचिकैः सीतां निर्वाप्य सुखयित्वा अक्षस्य रावणकुमारस्य वधेन उद्धतः दृप्तः क्षणं सोढ़ः अरेः इन्द्रजितः कर्त्तुः निग्रहः बाधा ब्रह्मास्त्रबन्धनरूपा येन सः तथोक्तः सन् लङ्कां पुरीं ददाह भस्मीचकार ॥ ६३ ॥

प्रत्यभीति। कृती कृतकृत्यः कपिः स्वयमायातं मूर्त्तिमत् वैदेह्याः हृदयमिव स्थितं तस्याः एव प्रत्यभिज्ञानरत्नञ्च रामाय अदर्शयत् ॥ ६४ ॥

स प्राप हृदयन्यस्तमणिस्पर्शनिमीलितः ।
अपयोधरसंसर्गां प्रियालिङ्गननिर्वृतिम् ॥ ६५ ॥
श्रुत्वा रामः प्रियोदन्तं मेने तत्सङ्गमोत्सुकः ।
महार्णवपरिक्षेपं लङ्कायाः परिखालघुम् ॥ ६६ ॥
स प्रतस्थेऽरिनाशाय हरिसैन्यैरनुद्रुतः ।
न केवलं धरापृष्ठे व्योम्नि सम्बाधवर्त्तिभिः ॥ ६७ ॥
निविष्टमुदधेः कूले तं प्रपेदे विभीषणः ।
स्नेहाद्राक्षसलक्ष्म्येव बुद्धिमाविश्य नोदितः ॥ ६८ ॥

स इति । हृदये वक्षसि न्यस्तस्य धृतस्य मणेः अभिज्ञानरत्नस्य स्पर्शेन निमीलितः मोहितः सः रामः अविद्यमानः पयोधरः संसर्गः स्तनसम्पर्कः यस्याः तां तथाभूतां प्रियायाः आलिङ्गनेन या निर्वृतिः आनन्दः तां प्राप ॥ ६५ ॥

श्रुत्वेति । प्रियायाः उदन्तं वार्त्ताम् । "उदन्तः साधुवार्त्तयोः" इति विश्वः । श्रुत्वा तस्याः सीतायाः सङ्गमे उत्सुकः रामः लङ्कायाः सम्बन्धी यः महार्णवः एव परिक्षेपः परिवेष्टः तं परिखालघुं दुर्गवेष्टनवत् सुतरं मेने ॥ ६६ ॥

स इति । केवलं भुवः पृष्ठे भूतले न किन्तु व्योम्नि च सम्बाधवर्त्तिभिः सङ्कटगामिभिः हरिसैन्यैः कपिबलैः अनुद्रुतः अन्वितः सन् सः रामः अरिनाशाय प्रतस्थे चचाल ॥ ६७ ॥

निविष्टमिति । उदधेः कूले निविष्टं तं रामं विशेषेण भीषयते विभीषणः रावणानुजः राक्षसः लक्ष्म्या स्नेहात् बुद्धिं कर्त्तव्यताज्ञानम् आविश्य चोदितः प्रणोदित इव प्रपेदे प्राप्तः॥ ६८॥

तस्मै निशाचरैश्वर्य्यं प्रतिशुश्राव राघवः।
काले खलु समारब्धाः फलं बध्नन्ति नीतयः॥ ६८॥
स सेतुं बन्धयामास प्लवगैर्लवणाम्भसि।
रसातलादिवोन्मग्नं शेषं स्वप्नाय शार्ङ्गिणः॥ ७०॥
तेनोत्तीर्य्य पथा लङ्कां रोधयामास पिङ्गलैः।
द्वितीयं हेमप्राकारं कुर्व्वद्भिरिव वानरैः॥ ७१॥
रणः प्रववृते तत्र भीमः प्लवगरक्षसाम्।
दिग्विजृम्भितकाकुत्स्थ-पौलस्त्यजयघोषणः॥ ७२॥

तस्मा इति। राघवः तस्मै विभीषणाय। प्रत्याङ्भ्यां श्रुवः पूर्व्वस्य कर्त्ता इति सम्प्रदानत्वाच्चतुर्थी। निशाचरैश्वर्य्यं राक्षसाधिपत्यं प्रतिशुश्राव प्रतिज्ञातवान्। तथाहि, काले अवसरे समारब्धाः प्रक्रान्ताः नीतयः फलं बध्नन्ति गृह्णन्ति जनयन्तीत्यर्थः खलु॥ ६८॥

स इति। सः रामः लवणं क्षारम् अम्भः यस्य असौ लवणाम्भाः तस्मिन् लवणाब्धौ प्लवगैः प्रयोज्यैः शार्ङ्गिणः विष्णोः स्वप्नाय शयनाय रसातलात् पातालात् उन्मग्नम् उत्थितं शेषमिव स्थितं सेतुं बन्धयामास॥ ७०॥

तेनेति। रामः तेन पथा सेतुमार्गेण उत्तीर्य्य सागरम् इति शेषः, पिङ्गलैः सुवर्णवर्णैः अत एव द्वितीयं हेमप्राकारं कुर्व्वद्भिरिव स्थितैः वानरैः लङ्कां रोधयामास॥ ७१॥

रण इति। तत्र लङ्कायां प्लवगानां रक्षसाञ्च भीमः भयङ्करः दिग्विजृम्भितं काकुत्स्थपौलस्त्ययोः रामरावणयोः जय-

पादपाविद्धपरिघः शिलानिष्पिष्टमुद्गरः ।
अतिशस्त्रनखन्यासः शैलरुग्णमतङ्गजः ॥ ७३ ॥
अथ रामशिरश्छेद-दर्शनोद्भ्रान्तचेतनाम् ।
सीतां मायेति शंसन्ती त्रिजटा समजीवयत् ॥७४॥
कामं जीवति मे नाथः इति सा विजहौ शुचम् ।

घोषणं जयशब्दः यस्मिन् सः तथोक्तः रणः प्रववृते प्रवृत्तः । "अस्त्रियां समरानीकरणाः कलहविग्रहौ" इत्यमरः ॥ ७२ ॥

पादपेति । किंविधो रणः ? पादपैः वृक्षैः आविद्धाः भग्नाः परिघाः लोहबद्धकाष्ठानि यस्मिन् सः तथोक्तः । "परिघः परिघातनः" इत्यमरः । शिलाभिः निष्पिष्टाः चूर्णिताः मुद्गराः अयोघनाः यस्मिन् सः तथोक्तः । "द्रुघने मुद्गरघनौ" इत्यमरः । अतिशस्त्राः अस्त्राण्यतिक्रान्ताः नखन्यासाः यस्मिन् सः तथोक्तः शैलैः रुग्णाः भग्नाः मतङ्गजाः यस्मिन् सः तथोक्तः ॥ ७३ ॥

अथेति । अथ अनन्तरं छिद्यते इति छेदः खण्डः शिरः एव छेदः इति विग्रहः । रामशिरश्छेदस्य विद्युज्जिह्वाख्यराक्षस-मायानिर्मितस्य दर्शनेन उद्भ्रान्तचेतनां गतसंज्ञां सीतां त्रिजटा नाम काचित् सीतापक्षपातिनी राक्षसी माया कल्पितं नत्वेतत् सत्यमिति शंसन्ती ब्रुवाणा । शप्श्यनोर्नित्यमिति नित्यं नुमागमः । समजीवयत् ॥ ७४ ॥

काममिति । सा सीता मे नाथः जीवतीति हेतोः शुचं शोकं कामं विजहौ किन्तु प्राक् पूर्वम् अस्य नाथस्य अन्तं नाशं सत्यं यथार्थं मत्वा जीविता जीवितवत्यस्मीति हेतोः लज्जिता

प्राज्ञत्वा सत्यमस्यान्तं जीवितास्मीति लज्जिता ॥ ७५ ॥

गरुड़ापातविश्लिष्ट-मेघनादास्त्रबन्धनः ।
दाशरथ्योः क्षणक्लेशः स्वप्नवृत्त इवाभवत् ॥ ७६ ॥

ततो बिभेद पौलस्त्यः शक्त्या वक्षसि लक्ष्मणम् ।
रामस्त्वनाहतोऽप्यासीत् विदीर्णहृदयः शुचा ॥ ७७ ॥

स मारुतिसमानीत-महौषधिहतव्यथः ।
लङ्कास्त्रीणां पुनश्चक्रे विलापाचार्य्यकं शरैः ॥ ७८ ॥

लज्जावती । कर्त्तरि क्तः । दुःखादपि दुःसहो लज्जाभरः इति भावः ॥ ७५ ॥

गरुड़ेति । गरुड़ः तार्च्यः तस्य आपातेन आगमनेन विश्लिष्टं मेघनादस्य इन्द्रजितः अस्त्रेण नागपाशेन बन्धनं यस्मिन् सः तथोक्तः क्षणक्लेशः दाशरथ्योः रामलक्ष्मणयोः स्वप्नवृत्तः स्वप्नावस्थायां भूतः इव अभवत् ॥ ७६ ॥

तत इति । ततः पौलस्त्यः रावणः शक्त्या कासूनामकेनायुधेन । "कासूसामर्थ्ययोः शक्तिः" इत्यमरः । लक्ष्मणं वक्षसि बिभेद विदारयामास । रामस्तु अनाहतोऽपि अहतोऽपि शुचा शोकेन विदीर्णहृदयः आसीत् ॥ ७७ ॥

स इति । सः लक्ष्मणः मारुतिना मरुत्सुतेन हनुमता समानीतया महौषध्या सञ्जीवन्या हतव्यथः सन् पुनः शरैः लङ्कास्त्रीणां विलापे परिदेवने । "विलापः परिदेवनम्" इत्यमरः । आचार्य्यकम् आचार्य्यकर्म्म । योपधाद्गुरूपोत्तमाद्वुञ् इति वुञ् । चक्रे । पुनरपि राक्षसान् जघानेति व्यज्यते ॥ ७८ ॥

स नादं मेघनादस्य धनुश्चेन्द्रायुधप्रभम् ।
मेघस्येव शरत्कालो न किञ्चित् पर्य्यशेषयत् ॥ ७९ ॥
कुम्भकर्णः कपीन्द्रेण तुल्यावस्थः स्वसुः कृतः ।
रुरोध रामं शृङ्गीव टङ्कच्छिन्नमनःशिलः ॥ ८० ॥
अकाले बोधितो भ्रात्रा प्रियस्वप्नो वृथा भवान् ।
रामेषुभि रितीवासौ दीर्घनिद्रां प्रवेशितः ॥ ८१ ॥
इतराण्यपि रक्षांसि पेतु र्वानरकोटिषु ।

स नादमिति । सः लक्ष्मणः, शरत्कालः मेघस्य इव, मेघनादस्य इन्द्रजितः नादं सिंहनादम् अन्यत्र तर्जितम् इन्द्रायुधप्रभं शक्रधनुप्रभं धनुश्च किञ्चित् अल्पमपि न पर्य्यशेषयत् नावशेषितवान् तमवधीत् इत्यर्थः ॥ ७९ ॥

कुम्भकर्ण इति । कपीन्द्रेण सुग्रीवेण स्वसुः शूर्पणखायाः तुल्यावस्थः नासाकर्णच्छेदेन सदृशः कृतः कुम्भकर्णः टङ्केन शिलाभेदकशस्त्रेण छिन्ना मनःशिला रक्तवर्णधातुविशेषः यस्य सः तथोक्तः । "टङ्कः पाषाणभेदनः" इति, धातुर्मनः शिलाद्यद्रेः इति च अमरः । शृङ्गी शिखरी इव, रामं रुरोध ॥ ८० ॥

अकाल इति । प्रियस्वप्नः इष्टनिद्रः अनुजः भवान् वृथा भ्रात्रा रावणेन अकाले बोधितः इतीव असौ कुम्भकर्णः रामेषुभिः रामवाणैः दीर्घनिद्रां मरणं प्रवेशितः गमितः । यथा लोकेषु इष्टवस्तुविनाशदुःखितस्य ततोऽपि भूयिष्ठमुपपाद्यते तद्वत् इति भावः ॥ ८१ ॥

इतराणीति । इतराणि रक्षांसि अपि वानरकोटिषु,

रजांसि समरोत्थानि तच्छोणितनदीष्विव ॥ ८२ ॥
निर्ययावथ पौलस्त्यः पुन र्युद्धाय मन्दिरात् ।
अरावण मरामं वा जगदद्येति निश्चितः ॥ ८३ ॥
रामं पदाति मालोक्य लङ्केशञ्च वरूथिनम् ।
हरियुग्यं रथं तस्मै प्रजिघाय पुरन्दरः ॥ ८४ ॥
त माधूतध्वजपटं व्योमगङ्गोर्म्मिवायुभिः ।
देवसूतभुजालम्बी जैत्र मध्यास्त राघवः ॥ ८५ ॥

समरोत्थानि रजांसि तेषां रक्षसां शोणितनदीषु रक्तप्रवाहेषु इव, पेतुः निपत्य मृतानि इत्यर्थः ॥ ८२ ॥

निर्ययाविति । अथ पौलस्त्यः रावणः अद्य जगत् अरावणं रावणशून्यं अरामं रामशून्यं वा भवेदिति निश्चितः निश्चितवान् । कर्त्तरि क्तः । विजयमरणयो रन्यतरंनिश्चयवान् पुन र्युद्धाय मन्दिरात् निर्ययौ निर्जगाम ॥ ८३ ॥

राममिति । पादाभ्यामततीति पदातिः तं पादचारिणं रामम्, वरूथः रथगुप्तिः । "रथगुप्तिर्वरूथो ना" इत्यमरः । अत्र वरूथेन रथो लक्ष्यते । वरूथिनं रथिनं लङ्केशं च आलोक्य पुरन्दरः इन्द्रः युगं वहन्तीति युग्याः रथाश्वाः । तद्वहति रथयुगप्रासङ्गमिति यत्प्रत्ययः । हरियुग्यं कपिलवर्णाश्वम् । "शुकाहिकपिभेकेषु हरि र्ना कपिले त्रिषु" इत्यमरः । रथं तस्मै रामाय प्रजिघाय प्रहितवान् ॥ ८४ ॥

तमिति । राघवः व्योमगङ्गोर्म्मिवायुभिः आधूतध्वजपटं मार्गवशात् इति भावः । जेतैव जैत्रः जयनशीलः तं जैत्रम् । जेतृशब्दात् तृनन्तात् प्रज्ञादिभ्यश्चेति स्वार्थेऽण् प्रत्ययः । तं रथं

मातलिस्तस्य माहेन्द्रमामुमोच तनुच्छदम् ।
यत्रोत्पलदलक्लैब्य मस्त्राण्यापुः सुरद्विषाम् ॥ ८६ ॥
अन्योन्यदर्शनप्राप्त-विक्रमावसरं चिरात् ।
रामरावणयो र्युद्धं चरितार्थ मिवाभवत् ॥ ८७ ॥
भुजमूर्द्धोरुबाहुल्यादेकोऽपि धनदानुजः ।
ददृशे ह्ययथापूर्व्वो मातृवंश इव स्थितः ॥ ८८ ॥

देवसूतभुजालम्बी मातलिहस्तावलम्बः सन् अध्यास्त अधिष्ठितवान् । आसेर्लङ् ॥ ८५ ॥

मातलिरिति । मातलिः इन्द्रसारथिः माहेन्द्रं तनुः छाद्यते अनेनेति तनुच्छदः वर्म्म । पुंसि संज्ञायां घः प्रायेणेति घः । तं तस्य रामस्य आमुमोच आसञ्जयामास यत्र तनुच्छदे सुरद्विषाम् अस्त्राणि उत्पलदलानां यत् क्लैब्यं नपुंसकत्वं निरर्थकत्वं तत् आपुः ॥ ८६ ॥

अन्योन्येति । चिरात् अन्योन्यदर्शनेन प्राप्तविक्रमावसरं रामरावणयोः युद्धं योधनं चरितार्थं सफलम् अभवत् इव । प्राक् पराक्रमावसरदौर्ल्लभ्यात् विफलस्य अद्य तल्लाभात् साफल्यमुत्प्रेक्षते ॥ ८७ ॥

भुजेति । यथाभूतः पूर्व्वं यथापूर्व्वः । सुप्‌सुपेति समासः । यथा पूर्व्वो न भवतीति अयथापूर्व्वः निहतबन्धुत्वाद्रक्षःपरिवारशून्यः इत्यर्थः अत एव एकोऽपि सन् धनदानुजः रावणः भुजाश्च मूर्द्धानश्च ऊरवः पादाश्च भुजमूर्द्धोरु । प्राण्यङ्गत्वात् द्वन्द्वैकवद्भावः । तस्य बाहुल्यात् बहुत्वात् हेतोः । तद्बहुत्वे यादवः "दशास्यो विंशतिभुज चतुष्पान् मातृमन्दिरे" इति । मातृवंशे

जेतारं लोकपालानां स्वमुखैरर्च्चितेश्वरम्।
रामस्तुलितकैलास मरातिं बह्वमन्यत॥ ८९॥
तस्य स्फुरति पौलस्त्यः सीतासङ्गमशंसिनि।
निचखानाधिकक्रोधः शरं सव्येतरे भुजे॥ ९०॥
रावणस्यापि रामास्तो भित्त्वा हृदय माशुगः।

मातृसम्बन्धिनि वर्गे स्थितः इव ददृशे दृष्टः हि। "वंशो वेणौ कुले वर्गे" इति विश्वः। अत्र रावणमातुरचोजातित्वात् तद्वर्गो रक्षवर्ग इति लभ्यते, अतश्चैकोऽपि अनेकरक्षःपरिवृतः इव लक्ष्यते इत्यर्थः॥ ८८॥

जेतारमिति। लोकपालानाम् इन्द्रादीनां जेतारम्। कर्तृकर्म्मणोः कृतीति कर्म्मणि षष्ठी। स्वमुखैः स्वशिरोभिः अर्च्चितेश्वरं तुलितकैलासम् उत्चिप्तरुद्राद्रिम् एवं शौर्य्यवीर्य्यसत्त्वसम्पन्नं महावीर्य्यम् अरातिं शत्रुं रामः गुणग्राहित्वात् जेतव्योत्कर्षस्य जेतृस्योत्कर्षहेतुत्वाच्च बहु अमन्तत साधुः मद्विक्रमस्यायं पर्य्याप्तो विषय इति बहुमानमकरोत् इत्यर्थः। बह्विति क्रियाविशेषणम्॥ ८९॥

तस्येति। अधिकक्रोधः पौलस्त्यः स्फुरति स्पन्दमाने अत एव सीतासङ्गमशंसिनि तस्य रामस्य सव्यः इतरः यस्मात् सव्येतरे दक्षिणे। न बहुव्रीहाविति इतरशब्दस्य सर्व्वनामसंज्ञाप्रतिषेधः। भुजे शरं निचखान, निखातवान्॥ ९०॥

रावणस्येति। रामेण अस्तः क्षिप्तः आशुगः वाणः, विश्रवसोऽपत्यं पुमान् रावणः। विश्रवःशब्दादपत्येऽर्थेऽणप्रत्यये सति, विश्रवसो विश्रवणरवणाविति रवणादेशः। तस्य रावणस्य अपि

विवेश भुवमाख्यातु मुरगेभ्य इव प्रियम् ॥ ८१ ॥
वचसैव तयो र्वाक्य मस्त्रमस्त्रेण निघ्नतोः ।
अन्योऽन्यजयसंरम्भो ववृधे वादिनोरिव ॥ ८२ ॥
विक्रमव्यतिहारेण सामान्याभूद् द्वयोरपि ।
जयश्रीरन्तरा वेदिः मत्तवारणयोरिव ॥ ८३ ॥
कृतप्रतिकृतप्रीतैः तयोर्मुक्तां सुरासुरैः ।
परस्परशरव्राताः पुष्पवृष्टिं न सेहिरे ॥ ८४ ॥

हृदयं वक्षः भित्त्वा विदार्य्य उरगेभ्यः पातालवासिभ्यः प्रियम् आख्यातुमिव भुवं विवेश ॥ ८१ ॥

वचसेति । वाक्यं वचसैव अस्त्रम् अस्त्रेण निघ्नतोः प्रति-कुर्व्वतोः तयोः रामरावणयोः, वादिनोः कथकयोः इव, अन्योन्यविषये जयसंरम्भः ववृधे ॥ ८२ ॥

विक्रमेति । जयश्रीः विक्रमस्य व्यतिहारेण पर्य्यायक्रमेण तयोः द्वयोः अपि अन्तरा मध्ये । अव्ययमेतत् । वेदिः वेद्याकारा भित्तिः मत्तवारणयोः इव, सामान्या साधारणा अभूत् नत्वन्य-तरनियता इत्यर्थः । अत्र मत्तवारणोरित्यत्र द्वयोरित्यत्र च अन्तरान्तरेण युक्ते इति द्वितीया न भवति अन्तराशब्द-स्योक्तरीत्या अन्यत्रान्वयात् । मध्ये कामपि भित्तिं कृत्वा गजौ योधयन्तीति प्रसिद्धिः ॥ ८३ ॥

कृतेति । स्वयमस्त्रप्रयोगः कृतं प्रतिकृतं परकृतप्रतीकारः ताभ्यां प्रीतैः सुरासुरैः यथासंख्यं तयोः रामरावणयोः मुक्तां पुष्पवृष्टिं द्वयीम् इति शेषः परस्परं शरव्राताः न सेहिरे ।

अयःशङ्कुचितां रक्षः शतघ्नीमथ शत्रवे ।
हृतां वैवस्वतस्येव कूटशाल्मलिमक्षिपत् ॥ ९५ ॥
राघवो रथमप्राप्तां तामाशाञ्च सुरद्विषाम् ।
अर्द्धचन्द्रमुखैर्वाणैश्चिच्छेद कदलीसुखम् ॥ ९६ ॥
अमोघं सन्दधे चास्मै धनुष्येकधनुर्द्धरः ।

अहमेवालं किं त्वयेति चान्तराल एव इतरेतरवाणवृष्टिरितरेतरपुष्पवृष्टिमवारयत् इत्यर्थः ॥ ९४ ॥

अय इति । अथ रक्षः रावणः अयसः शङ्कुभिः कीलैः चितां कीर्णां शतघ्नीं लौहकण्टककीलितयष्टिविशेषम् "शतघ्नी तु चतुस्ताला लौहकण्टकसञ्चिता यष्टिः" इति केशवः । हृतां विजयलक्ष्मीं, वैवस्वतस्य अन्तकस्य कूटशालमलिमिव, शत्रवे राघवाय अक्षिपत् क्षिप्तवान् । कूटशाल्मलिरिव कूटशालमलिरिति व्युत्पत्त्या वैवस्वतगदायाः गौणी संज्ञा । कूटशाल्मलिर्नाम एकमूलप्रकृतिः कण्टकी वृक्षविशेषः । "रोचनः कूटशाल्मलिः" इत्यमरः । तस्मादृक्षस्य गदायाः अयःशङ्कुचितत्वात् अनुसन्धेयम् ॥ ९५ ॥

राघव इति । राघवः रथम् अप्राप्तं तां शतघ्नीं सुरद्विषां रक्षसाम् आशां विजयतृष्णाञ्च । "आशा तृष्णा दिशः प्रोक्ता" इति विश्वः । अर्द्धचन्द्रः इव मुखं येषां तैः वाणैः कदलीवत् सुखं यथा तथा चिच्छेद । अथवा कदल्यामिव सुखं अक्लेशः यस्मिन् कर्म्मणि तदिति विग्रहः ॥ ९६ ॥

अमोघमिति । एकः अद्वितीयः धनुर्धरः रामः प्रियायाः शोकः एव शल्यं तस्य निष्कर्षणम् उद्धारकं यत् औषधं तत्

ब्राह्म मस्त्रं प्रियाशोक-शल्यनिष्कर्षणौषधम् ॥ ६७ ॥
तद् व्योम्नि शतधा भिन्नं ददृशे दीप्तिमन्मुखम् ॥
वपु र्महोरगस्येव करालफणमण्डलम् ॥ ६८ ॥
तेन मन्त्रप्रयुक्तेन निमेषार्द्धा दपातयत् ।
स रावणशिरःपङ्क्तिं मज्ञातव्रणवेदनाम् ॥६६॥
बालार्कप्रतिमेवाप्सु वीचिभिन्ना पतिष्यतः ।
रराज रक्षःकायस्य कण्ठच्छेदपरम्परा ॥ १०० ॥
मरुतां पश्यतां तस्य शिरांसि पतितान्यपि ।

अमोघं ब्राह्मं ब्रह्मदेवताकम् अस्त्रम् अभिमन्त्रितं वाणम् अस्मै रावणाय च, तद्वधार्थम् इत्यर्थः, धनुषि सन्दधे ॥ ६७ ॥

तदिति । व्योम्नि शतधा भिन्नं प्रसृतं दीप्तिमन्ति मुखानि यस्य तत् ब्रह्मास्त्रम्, करालं भीषणं तुङ्गं वा फणमण्डलं यस्य तत् तत्तोक्तम् । "करालो दन्तुरे तुङ्गे करालो भीषणेऽपि च" इति विश्वः । महोरगस्य शेषस्य वपुः इव, ददृशे दृष्टम् ॥६८॥

तेनेति । सः रामः मन्त्रप्रयुक्तेन तेन अस्त्रेण अज्ञातव्रण-वेदनाम् अतिशैघ्र्यात् अननुभूतव्रणदुःखां रावणशिरःपङ्क्तिं निमेषार्द्धात् अपातयत् पातयामास ॥ ६६ ॥

बालेति । पतिष्यतः आसन्नपातस्य रक्षःकायस्य रावणकले-वरस्य छिद्यन्ते इति छेदाः खण्डाः कण्ठानां ये छेदाः तेषां परम्परा पङ्क्तिः, वीचिभिः भिन्ना नाना कृता अप्सु बालार्कस्य प्रतिमा प्रतिविम्बमिव,रराज । अर्कस्य बालविशेषणमारुण्यार्थम् इति भावः ॥ १०० ॥

मरुतामिति । पतितानि तस्य रावणस्य शिरांसि पश्यता-

मनो नातिविशश्वास पुनः सन्धानशङ्किनाम् ॥ १०१ ॥

अथ मदगुरुपक्षैर्लोकपालद्विपाना-
मनुगतमलिवृन्दैर्गण्डभित्तीर्विहाय ।
उपनतमणिबन्धे मूर्ध्नि पौलस्त्यशत्रोः
सुरभिसुरविमुक्तं पुष्पवर्षं पपात ॥ १०२ ॥

यन्ता हरेः सपदि संहृतकार्मुकज्य-
मापृच्छ्य राघवमनुष्ठितदेवकार्य्यम् ।
नामाङ्करावणशराङ्कितकेतुयष्टि-

मपि पुनःसन्धानशङ्किनाम्, पूर्व्वं तथादर्शनात् इति भावः । मरुताम् अमराणाम् "मरुतौ पवनामरौ" इत्यमरः । मनः न अतिविशश्वास अतिविश्वासं न प्राप ॥ १०१ ॥

अथेति । अथ मदेन गजगण्डसञ्चारसंक्रान्तेन गुरुपक्षैः भारायमाणपक्षैः अलिवृन्दैः लोकपालद्विपानामैरावतादीनां गगनवर्त्तिनां गण्डभित्तीः विहाय अनुगतं सुरभि सुगन्धि "सुरभिश्चम्पके स्वर्णे जातीफलवसन्तयोः । गन्धफले सौरभेय्यां सल्लकीशाल्भेदयोः सुगन्धौ च मनोज्ञे च,वाच्यवत् सुरभि स्मृतम्" इति विश्वः । सुरविमुक्तं पुष्पवर्षम् उपनतः आसन्नः मणिबन्धः राज्याभिषेकसमये भावी यस्य तस्मिन् । पौलस्त्यशत्रोः रामस्य मूर्द्ध्नि पपात । इदमेव राज्याभिषेकसूचकमिति भावः ॥१०२

यन्तेति । हरेः इन्द्रस्य यन्ता मातलिः सपदि संहृतकार्मुकज्यम् अनुष्ठितं देवकार्य्यं रावणवधरूपं येन तं राघवम् आपृच्छ्य साधु यामीत्यामन्त्र्य, नामाङ्कैः नामाक्षरचिह्नैः रावणशरैः अङ्किता चिह्निता केतुयष्टिः ध्वजदण्डः यस्य तं हरीणैं

मूर्द्ध्नि रथं हरिसहस्रयुगं निनाय ॥ १०३ ॥
रघुपतिरपि जातवेदो विशुद्धां प्रगृह्य प्रियां
प्रियसुहृदि विभीषणे संगमय्य श्रियं वैरिणः।
रविसुतसहितेन तेनानुयातः ससौमित्रिणा
भुजविजितविमानरत्नाधिरूढ़ः प्रतस्थे पुरीम् ॥१०४॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ
रावणवधो नाम द्वादशः सर्गः।

वाजिनां सहस्रेण युज्यते इति हरिसहस्रयुक् तम्। "यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु। हरिः" इत्युभयत्राप्यमरः। रथम् ऊर्द्ध्वं निनाय नीतवान् ॥ १०३ ॥

रघुपतिरिति। रघुपतिः अपि जातवेदसि अग्नौ विशुद्धां जातशुद्धिं प्रियां सीतां प्रगृह्य स्वीकृत्य, प्रियसुहृदि विभीषणे वैरिणः रावणस्य श्रियं राजलक्ष्मीं संगमय्य सङ्गतां कृत्वा। गमेर्ण्यन्तात् ल्यप्प्रत्ययः, मितां ह्रस्व इति ह्रस्वः, ल्यपि लघुपूर्व्वादिति णेरयादेशः। रविसुतसहितेन सुग्रीवयुक्तेन ससौमित्रिणा सलक्ष्मणेन तेन विभीषणेन अनुयातः अनुगतः सन्। विमानं रत्नमिव विमानरत्नमित्युपमितसमासः। भुजविजितं यद्विमानरत्नं पुष्पकं तत् आरूढ़ः सन् पुरीम् अयोध्यां प्रतस्थे। समवप्रविभ्यः स्थ इत्यात्मनेपदम्। अत्र प्रस्थानक्रियाया अकर्म्मकत्वेऽपि तदङ्गभूतोद्देशक्रियापेक्षया सकर्म्मकत्वम्। अस्ति च धातूनां क्रियान्तरोपसर्ज्जनकस्वार्थाभिधायकत्वम्, यथा तण्डुलान् पचतीत्यादावादानक्रियागर्भः पाकोऽभिधीयत इति॥१०४॥

इति श्रीमहामहोपाध्याय-कोलाचल मल्लिनाथसूरिविरचितायां
रघुवंशटीकायां सञ्जीवनी-समाख्यायां द्वादशः सर्गः।

## त्रयोदशः सर्गः ।

---

अथात्मनः शब्दगुणं गुणज्ञः
पदं विमानेन विगाहमानः ।
रत्नाकरं वीक्ष्य मिथः स जायां
रामाभिधानो हरिरित्युवाच ॥ १ ॥
वैदेहि ! पश्यामलयात् विभक्तं
मत्सेतुना फेनिल मम्बुराशिम् ।

त्रैलोक्यशल्योद्धरणाय सिन्धौ चकार बन्धं मरणं रिपूणाम् ।
पुण्यं प्रणामं भुवनाभिरामं रामं विरामं विपदां मुपासे ॥

अथेति । अथ प्रस्थानानन्तरम्, जानातीति ज्ञः । इगुपधेत्यादिना कप्रत्ययः । गुणानां ज्ञः गुणज्ञः रत्नाकरादिवर्णगुणाभिज्ञः इत्यर्थः सः रामाभिधानः हरिः विष्णुः शब्दः गुणः यस्य तत् शब्दगुणम् आत्मनः स्वस्य पदं विष्णुपदम् आकाशम् इत्यर्थः। "वियद् विष्णुपदम्" इत्यमरः। "शब्दगुणमाकाशम्" इति तार्किकाः । विमानेन पुष्पकेण विगाहमानः सन् रत्नाकरं वीक्ष्य मिथः रहसि । "मिथोऽन्योन्यं रहस्यपि" इत्यमरः । जायां पत्नीं सीताम् इति वक्ष्यमाणप्रकारेण उवाच । रामस्य हरिरित्यभिधानं निरङ्कुशमहिमद्योतनार्थम् । मिथोग्रहणं गोष्ठीविश्रम्भसूचनार्थम् ॥ १ ॥

वैदेहीति । हे वैदेहि ! सीते ! आ मलयात् मलयपर्य्यन्तम्।

छायापथेनेव शरत्प्रसन्न-
माकाश माविष्कृतचारुतारम् ॥ २ ॥
गुरो र्यियक्षोः कपिलेन मेध्ये
रसातलं संक्रमिते तुरङ्गे ।
तदर्थ मुर्वीमवदारयद्भिः
पूर्व्वैः किलायं परिवर्द्धितो नः ॥ ३ ॥
गर्भं दधत्यर्कमरीचयोऽस्मात्
विवृद्धिमात्राश्नुवते वसूनि ।

पञ्चम्यपाङ्परिभिरिति पञ्चमी। पदद्वयं चैतत्। मत्सेतुना विभक्तं द्विधा कृतम् अत्यायतसेतुना इत्यर्थः। हर्षाधिक्याच्च मद्ग्रहणम्। फेनिलं फेनवन्तम्। फेनादिलच्चेतीलच्प्रत्ययः। चिप्रकारी चाहम् इति भावः। अम्बुराशिम्, छायापथेन विभक्तं शरत्प्रसन्नम् आविष्कृतचारुतारम् आकाशम् इव, पश्य। मम महानयं प्रयासस्त्वदर्थं इति हृदयम्। छायापथो नाम ज्योतिश्चक्रमध्यवर्त्ती कश्चित् तिरश्चीनोऽवकाशः ॥ २ ॥

गुरोरिति। यियक्षोः यष्टुमिच्छोः। यजेः सन्नन्तादुप्रत्ययः। गुरोः सगरस्य मेध्ये अश्वमेधार्हे तुरङ्गे कपिलेन मुनिना रसातलं पातालं संक्रमिते सति, तदर्थम् उर्व्वीम् अवदारयद्भिः खनद्भिः नः अस्माकं पूर्व्वैः वृद्धैः सगरसुतैः अयं समुद्रः परिवर्द्धितः किल। किलेत्यैतिह्ये। अतो नः पूज्यः इति भावः। यद्यपि तुरङ्गहारी शतक्रतुः तथापि तस्य कपिलसमीपे दर्शनात् स एवेति भ्रान्तिः, तन्मत्वैव कविना कपिलेनेति निर्दिष्टम् ॥ ३ ॥

गर्भमिति। अर्कमरीचयः अस्मात् अब्धेः, अपादानात् गर्भ-

अविन्धनं वह्निमसौ बिभर्त्ति
प्रह्लादनं ज्योति रजन्यनेन ॥ ४ ॥

तां ता मवस्थां प्रतिपद्यमानं
स्थितं दश व्याप्य दिशो महिम्ना।
विष्णोरिवास्यानवधारणीय-
मीदृक्तया रूप मियत्तया वा ॥ ५ ॥

नाभिप्ररूढाम्बुरुहासनेन
संस्तूयमानः प्रथमेन धात्रा ॥

भस्मयं दधति, वृध्यर्थम् इत्यर्थः। अयमर्थो दशमसर्गे ताभि-
र्गर्भं इत्यत्र स्पष्टोक्तः। अयं लोकोपकारी इति भावः।
अत्र अब्धौ वसूनि धनानि। "धने रत्नं वसु स्मृतम्" इति
विश्वः। विद्वज्जिम् अश्नुवते प्राप्नुवन्ति, सन्तद्दान् इत्यर्थः। असौ
आपः इन्धनं दाह्यं यस्य तद्दाहकं वह्निं बिभर्त्ति। अपकारे-
ऽप्याश्रितं न त्यजति इति भावः। अनेन प्रह्लादनं ज्योतिः चन्द्रः
अजनि जनितम्। जनेः र्ण्यन्तात् कर्म्मणि लुङ्। सौम्यः इति
भावः॥ ४ ॥

तां तामिति। तां ताम् अनेकाम्। नित्यवीप्सयोरिति
वीप्सायां द्विरुक्तिः। अवस्थाम् अक्षोभाद्यवस्थाम्, विष्णुपक्षे
सत्त्वाद्यवस्थाम्, प्रतिपद्यमानं भजमानं महिम्ना दश दिशः व्याप्य
स्थितं विष्णोरिव अस्य रत्नाकरस्य रूपं स्वरूपम् उक्तरीत्या बहु-
प्रकारत्वात् व्यापकत्वाच्च ईदृक्तया इयत्तया वा प्रकारतः परि-
माणतश्च अनवधारणीयं दुर्निरूपम्॥ ५ ॥

नाभीति। युगान्ते कल्पान्ते उचिता परिचिता योगः

अमुं युगान्तोचितयोगनिद्रः
संहृत्य लोकान् पुरुषोऽधिशेते ॥ ६ ॥
पक्षच्छिदा गोत्रभिदात्तगन्धाः
शरण्यमेनं शतशो महीध्राः ।
नृपा इवोपप्लविनः परेभ्यो
धर्म्मोत्तरं मध्यम माश्रयन्ते ॥ ७ ॥
रसातलादादिभवेन पुंसा
भुवः प्रयुक्तोद्वहनक्रियायाः ।

स्वात्मनिष्ठेव निद्रेव निद्रा यस्य सः पुरुषः विष्णुः लोकान् संहृत्य, नाभ्यां प्ररूढ़ं यत् अम्बुरुहं पद्मं तदासनेन तन्नाभिकमलाश्रयेण प्रथमेण धाता दक्षादीनामपि स्रष्टा पितामहेन संस्तूयमानः सन्, अमुम् अधिशेते अमुष्मिन् शेते इत्यर्थः । कल्पान्तेऽप्यस्ति इति भावः ॥ ६ ॥

पक्षेति । पक्षच्छिदा गोत्रभिदा इन्द्रेण । उभयत्र सत्सुद्विषेत्यादिना क्विप् । आत्तगन्धाः हृतगर्वाः अभिभूताः इत्यर्थः । "गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः" इति विश्वः । "आत्तगर्वोऽभिभूतः स्यात्" इत्यमरः । महीं धारयन्तीति महीध्राः पर्व्वताः । मूलविभुजादित्वात् कप्रत्ययः । शतं शतं शतशः शरण्यं रक्षणसमर्थम् एनं समुद्रम्, परेभ्यः शत्रुभ्यः उपप्लविनः भयवन्तः नृपाः धर्म्मोत्तरं धर्म्मप्रधानं मध्यमं मध्यभूपालम् इव, आश्रयन्ते । "अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः" इति कामन्दकः । आर्त्तबन्धुः इति भावः ॥ ७ ॥

अस्याच्छमम्भः प्रलयप्रवृद्धं
मुहूर्तवक्त्राभरणं बभूव ॥ ८ ॥
मुखार्पणेषु प्रकृतिप्रगल्भाः
स्वयं तरङ्गाधरदानदक्षः ।
अनन्यसामान्यकलत्रवृत्तिः
पिबत्यसौ पाययते च सिन्धुः ॥ ९ ॥

रसातलादिति । आदिभवेन पुंसा आदिवराहेण रसातलात् प्रयुक्तोद्वहनक्रियायाः कृतोद्धरणक्रियायाः, विवाहक्रिया च व्यज्यते, भुवो भूदेवतायाः प्रलये प्रवृद्धम् अस्य अब्धेः अच्छम् अम्भः मुहूर्त्तं वक्त्राभरणं लज्जारक्षणार्थं मुखावगुण्ठनं बभूव । तदुक्तम्, "उद्धृतासि वराहेण कृष्णेन शतबाहुना" इति ॥ ८ ॥

मुखेति । अन्येषां पुंसां सामान्या साधारणा न भवतीति अनन्यसामान्या कलत्रेषु वृत्तिः भोगः यस्य सः तथोक्तः इममेवार्थं प्रतिपादयति, तरङ्गः एव अधरः तस्य दाने समर्पणे दक्षः चतुरः असौ समुद्रः मुखार्पणेषु प्रकृत्या सख्यादिभिर्विना प्रगल्भाः धृष्टाः सिन्धूः नदीः । "सिन्धुः समुद्रे नद्यां च" इति विश्वः । स्वयं पिबति पाययते च तरङ्गाधरम् इति शेषः । न पादम्याङ्यमेत्यादिना पिबतेर्ण्यन्तान्नित्यं परस्मैपदनिषेधः, गतिबुद्धीत्यादिना सिन्धूनां कर्म्मत्वम् । दम्पत्योर्युगपत् परस्पराधरपानमनन्यसाधारणम् इति भावः ॥ ९ ॥

ससत्वमादाय नदीमुखाम्भः
संमीलयन्तो विवृताननत्वात् ।
अमी शिरोभि स्तिमयः सरन्ध्रै-
रूर्द्ध्वं वितन्वन्ति जलप्रवाहान् ॥ १० ॥

मातङ्गनक्रैः सहसोत्पतद्भि-
र्भिन्नान् द्विधा पश्य समुद्रफेनान् ।
कपोलसंसर्पितयाय एषां
व्रजन्ति कर्णक्षणचामरत्वम् ॥ ११ ॥

वेलानिलाय प्रसृता भुजङ्गा
महोर्म्मिविस्फूर्ज्जथुनिर्विशेषाः ।

ससत्वमिति । अमी तिमयः सत्स्यविशेषाः । तदुक्तम्, "अस्ति मत्स्य स्तिमिर्नाम शतयोजनमायतः" इति । विवृताननत्वात् व्यात्तमुखत्वात् हेतोः आननविवृत्त्या इत्यर्थः ससत्वं मत्स्यादिप्राणिसंहितं नदीमुखाम्भः आदाय संमीलयन्तः चञ्चुपुटानि सङ्घट्टयन्तः सन्तः सरन्ध्रैः शिरोभिः जलप्रवाहान् ऊर्द्ध्वं वितन्वन्ति । जलयन्त्रक्रीड़ासमाधिर्व्यज्यते ॥ १० ॥

मातङ्गेति । सहसा उत्पतद्भिः मातङ्गनक्रैः मातङ्गाकारैः ग्राहैः द्विधा भिन्नान् समुद्रफेनान् पश्य, ये फेनाः एषां जलमातङ्गनक्राणां कपोलेषु संसर्पितया संसर्पणेन हेतुना कर्णेषु क्षणं चामरत्वं व्रजन्ति ॥ ११ ॥

वेलेति । वेलानिलाय वेलानिलं पातुम् इत्यर्थः । क्रियार्थोपपदेत्यादिना चतुर्थी । प्रसृताः निर्गताः महोर्म्मीणां विस्फ-

सूर्य्यांशुसम्पर्कसमृद्धरागै-
र्व्यज्यन्त एते मणिभिः फणास्थैः ॥ १२ ॥

तवाधरस्पर्द्धिषु विद्रुमेषु
पर्य्यस्तमेतत् सहसोर्म्मिवेगात् ।
ऊर्द्धाङ्कुरप्रोतमुखं कथञ्चित्
क्लेशादपक्रामति शङ्खयूथम् ॥ १३ ॥

प्रवृत्तमात्रेण पयांसि पातु-
मावर्त्तवेगाद् भ्रमता घनेन ।
आभाति भूयिष्ठमयं समुद्रः
प्रमथ्यमानो गिरिणेव भूयः ॥ १४ ॥

र्त्यः उद्रेकः । द्वितोऽयुजित्यधुच्प्रत्ययः । तस्मात् निर्विशेषाः दुर्ग्रहभेदाः एते भुजङ्गाः सूर्य्यांशुसम्पर्केण समृद्धरागैः प्रवृद्धकान्तिभिः फणास्थैः मणिभिः व्यज्यन्ते उन्नीयन्ते ॥ १२ ॥

तवेति । तव अधरस्पर्द्धिषु अधरसदृशेषु इत्यर्थः विद्रुमेषु प्रवालेषु सहसा ऊर्म्मिवेगात् पर्य्यस्तं प्रोत्क्षिप्तम् ऊर्द्धाङ्कुरैः विद्रुमप्ररोहैः प्रोतमुखं स्यूतवदनम् एतत् शङ्खानां यूथं वृन्दं कथञ्चित् क्लेशात् अपक्रामति विलम्ब्यापसरति इत्यर्थः ॥ १३ ॥

प्रवृत्तेति । पयांसि पातुं प्रवृत्तः एव प्रवृत्तमात्रः न तु पीतवान् तेन आवर्त्तवेगात् "स्यादावर्त्तोऽम्भसां भ्रमः" इत्यमरः । भ्रमता घनेन अयं समुद्रः भूयः पुनरपि गिरिणा मन्दरेण प्रमथ्यमानः इव भूयिष्ठम् अत्यन्तम् आभाति ॥ १४ ॥

दूरा दयश्चक्रनिभस्य तन्वी
तमालतालीवनराजिनीला।
आभाति वेलालवणाम्बुराशे-
र्धारानिबद्धेव कलङ्करेखा॥ १५॥
वेलानिलः केतकरेणुभि स्ते
सम्भावयत्याननमायताक्षि।
मा मक्षमं मण्डनकालहाने-
र्वेत्तीव बिम्बाधरबद्धतृष्णम्॥ १६॥
एते वयं सैकतभिन्नशुक्ति-
पर्य्यस्तमुक्तापटलं पयोधेः।

दूरादिति। अयश्चक्रनिभस्य लवणाम्बुराशेः दूरात् तन्वी अणुत्वेन अवभासमाना तमालतालीवनराजिभिः नीला वेला तीरभूमिः धारानिबद्धा चक्राश्रिता कलङ्करेखा मालिन्यरेखा इव आभाति। "मालिन्यरेखान्तु कलङ्कमाहुः" इति दण्डी॥१५

वेलानिल इति। हे आयताक्षि! "वेला स्यात् तीर-नीरयोः" इति विश्वः। वेलानिलः केतकरेणुभिः ते आननं सम्भावयति। किमर्थमित्यपेक्षायामुत्प्रेक्ष्यते, बिम्बाधरे बद्धतृष्णां मां मण्डनेन आभरणक्रियया कालहानिः विलम्बः तस्य अक्षमम् असहमानम्। कर्म्मणि षष्ठी। कालहानिमसहमानं वेत्तीव किम्, नो चेत् कथं सम्भावयेत् इत्यर्थः॥ १६॥

एत इति। एते वयं सैकतेषु भिन्नाभिः शुक्तिभिः पर्य्य-स्तानि परितः क्षिप्तानि मुक्तानां पटलानि यस्मिन् तत् तथोक्तं

प्राप्ता मुहूर्त्तेन विमानवेगात्
कूलं फलावर्ज्जितपूगमालम् ॥ १७ ॥

कुरुष्व तावत् करभोरु पश्चा-
न्मार्गे मृगप्रेक्षिणि दृष्टिपातम् ।
एषा विदूरीभवतः समुद्रात्
सकानना निष्पततीव भूमिः ॥ १८ ॥

क्वचित् पथा सञ्चरते सुराणां
क्वचिद् घनानां पततां क्वचिच्च ।
यथाविधो मे मनसोऽभिलाषः
प्रवर्त्तते पश्य तथा विमानम् ॥ १९ ॥

फलैः आवर्ज्जिताः आनमिताः पूगमालाः यस्मिन् तत् पयोधेः कूलं विमानवेगात् मुहूर्त्तेन प्राप्ता ॥ १७ ॥

कुरुष्वेति । "मणिबन्धादाकनिष्ठं करस्य करभो बहिः" इत्यमरः । करभः इव ऊरू यस्याः सा करभोरूः । ऊरूत्तर-पदादौपम्ये इत्यूङ् । तस्याः सम्बुद्धिः, हे करभोरु ! मृगवत् प्रेक्षते इति विग्रहः,'हे मृगप्रेक्षिणि ! तावत् पश्चात् मार्गे लङ्घिताध्वनि दृष्टिपातं कुरुष्व । एषा सकानना भूमिः विदूरी-भवतः समुद्रात् पिष्पतति निष्क्रामति इव । विदूरशब्दाद् विशेष्यनिघ्नात् च्विः ॥ १८ ॥

क्वचिदिति । हे देवि ! विमानं पुष्पकं मे मनसः अभिलापः यथाविधः तथा प्रवर्त्तते, पश्य । क्वचित् सुराणां पथा सञ्चरते, क्वचित् घनानां क्वचित् पततां पक्षिणां च पथा सञ्चरते । सम-स्तृतीयायुक्तादिति संपूर्व्वाच्चरतेरात्मनेपदम् ॥ १९ ॥

असौ महेन्द्रद्विपदानगन्धि-
स्त्रिमार्गगावीचिविमर्दशीतः ।
आकाशवायुर्दिनयौवनोत्था-
नाचामति स्वेदलवान् मुखे ते ॥ २० ॥
करेण वातायनलम्बितेन
स्पृष्टस्त्वया चण्डि कुतूहलिन्या ।
आमुञ्चतीवाभरणं द्वितीय-
मुद्भिन्नविद्युद्वलयो घनस्ते ॥ २१ ॥
अमी जनस्थानमपोढविघ्नं
मत्वा समारब्धनवोटजानि ।

असाविति। महेन्द्रद्विपदानगन्धिः ऐरावतमदगन्धिः त्रिभिः मार्गैः गच्छतीति त्रिमार्गगा गङ्गा । तद्धितार्थेत्यादिना उत्तरपदसमासः । तस्याः वीचीनां विमर्देन सम्पर्केण शीतः असौ आकाशवायुः दिनयौवनत्थान् मध्याह्नसम्भवात् ते मुखे स्वेदलवान् आचामति हरति । अनेन सुरपथसञ्चारो दर्शितः ॥ २० ॥

करेणेति । हे चण्डि ! कोपने ! "चण्डस्त्वत्यन्तकोपनः" इत्यमरः । कुतूहलिन्या विनोदार्थिन्या त्वया कर्त्र्या वातायने गवाक्षे लम्बितेन अवसंसितेन करेण स्पृष्टः उद्भिन्नविद्युद्वलयः घनः ते द्वितीयम् आभरणं वलयम् आमुञ्चति इव अर्पयति इव । चण्डीत्यनेन कोपनशीलत्वात् भीतः क्षिप्रं त्वां मुञ्चति मेव इति व्यज्यते ॥ २१ ॥

अमी इति । अमी चीरभृतः तापसाः वनस्थानम् अपोढ-

अध्यासते चीरभृतो यथास्वं
चिरोज्झितान्याश्रममण्डलानि ॥ २२ ॥
सैषा स्थली यत्र विचिन्वता त्वां
भ्रष्टं मया नूपुरमेक मुर्व्याम् ।
अदृश्यत त्वच्चरणारविन्द-
विश्लेषदुःखादिव बद्धमौनम् ॥ २३ ॥
त्वं रक्षसा भीरु यतोऽपनीता
तं मार्गमेताः कृपया लता मे ।

विघ्नम् अस्तविघ्नं मत्वा समारब्धा नवाः उटजाः पर्णशालाः येषु तानि । "पर्णशालोटजोऽस्त्रियाम्" इत्यमरः । चिरोज्झितानि राक्षसभयात् इत्यर्थः आश्रममण्डलानि आश्रमविभागान् यथास्वं स्वम् अनतिक्रम्य अध्यासते अधितिष्ठन्ति ॥ २२ ॥

सैषेति । सा पूर्व्वानुभूता स्थली एषा, दृश्यते इत्यर्थः । यत्र स्थल्यां त्वां विचिन्वता अन्विष्यता मया त्वच्चरणाविन्देन यः विश्लेषः वियोगः तेन यत् दुःखं तस्मात् इव बद्धमौनं निःशब्दम् । उर्व्यां भ्रष्टम् एकं नूपुरं मञ्जीरः । "मञ्जीरो नूपुरोऽस्त्रियाम्" इत्यमरः । अदृश्यत दृष्टम् । हेतूत्प्रेक्षा ॥ २३ ॥

त्वमिति । हे भीरु ! भयशीले ! ऊङुत इत्यूङ्, ततो नदीत्वात् सम्बुद्धौ ह्रस्वः । त्वं रक्षसा रावणेन यतः येन मार्गेण । सार्व्वविभक्तिकास्तसिः । अपनीता अपहृता तं मार्गं वागिन्द्रियाभावात् वक्तुम् अशक्नुवन्त्यः एताः लताः आवर्ज्जिताः नमिताः पल्लवाः पाणिस्थानीयाः याभिः ताभिः शाखाभिः स्वावयवभूताभिः कृपया मे अदर्शयन् हस्तचेष्टया दर्शयन् इत्यर्थः ।

अदर्शयन् वक्तुमशक्नुवन्त्यः
शाखाभि रावर्ज्जितपल्लवाभिः ॥ २४ ॥

मृग्यश्च दर्भाङ्कुरनिर्व्यपेक्षा-
स्तवागतिज्ञं समबोधयन्माम् ।
व्यापारयन्त्यो दिशि दक्षिणस्या-
मुत्पक्ष्मराजीनि विलोचनानि ॥ २५ ॥

एतद्गिरेर्माल्यवतः पुरस्ता-
दाविर्भवत्यम्बरलेखि शृङ्गम् ।
नवं पयो यत्र घनै र्मया च
त्वद्विप्रयोगाश्रु समं विसृष्टम् ॥ २६ ॥

"शाखा वृक्षान्तरे भुजे" इति विश्वः । लतादीनामपि ज्ञानमस्त्येव । "तदुक्तं मनुना, अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विता" इति ॥ २४ ॥

मृग्यश्चेति । दर्भाङ्कुरेषु भक्ष्येषु निर्व्यपेक्षाः निस्पृहाः मृग्यः मृगाङ्गनाश्च उत्पक्ष्मराजीनि विलोचनानि दक्षिणस्यां दिशि व्यापारयन्त्यः प्रवर्त्तयन्त्यः सत्यः तव अगतिज्ञं गत्यनभिज्ञं मां समबोधयन् दृष्टिचेष्टया त्वद्गतिमबोधयन् इत्यर्थः ॥ २५ ॥

एतदिति । माल्यवतः नाम गिरेः अम्बरलेखि अभ्रङ्कषं शृङ्गम् एतत् पुरस्तात् अग्रे आविर्भवति । यत्र शृङ्गे घनैः मेघैः नवं पयः मया तद्विप्रयोगेन यत् अश्रु तच्च समं युगपत् विसृष्टम् । मेघदर्शनाद्दर्पतुल्यमश्रु मुक्तम् इति भावः ॥ २६ ॥

गन्धश्च धाराहतपल्वलानां
कादम्बमर्द्धोद्गतकेसरञ्च ।
स्निग्धाश्च केकाः शिखिनां बभूवु-
र्यस्मिन्नसह्यानि विना त्वया मे ॥ २७ ॥

पूर्व्वानुभूतं स्मरता च यत्र
कम्पोत्तरं भीरु तवोपगूढम् ।
गुहाविसारीण्यतिवाहितानि
मया कथञ्चिद् घनगर्ज्जितानि ॥ २८ ॥

आसारसिक्तक्षितिबाष्पयोगा-
न्मामक्षिणोद् यत्र विभिन्नकोशैः ।

गन्धश्चेति । यस्मिन् शृङ्गे धाराभिः वर्षधाराभिः आहतानां पल्वलानां गन्धश्च, अर्द्धोद्गतकेसरं कादम्बं नीपकुसुमञ्च, स्निग्धाः मधुराः शिखिनां बर्हिणाम् । "शिखिनौ वह्निवर्हिणौ" इत्यमरः । केकाश्च, त्वया विना मे असह्यानि बभूवुः । नपुंसकमनपुंसकेनेति नपुंसकैकशेषः ॥ २७ ॥

पूर्व्वेति । किं च, हे भीरु ! यत्र शृङ्गे पूर्व्वानुभूतं कम्पोत्तरं कम्पप्रधानं तव उपगूढम् उपगूहनं स्मरता मया गुहाविसारीणि घनगर्ज्जितानि कथञ्चित् अतिवाहितानि स्मारकत्वेनोद्दीपकत्वात् क्लेशेन गमितानि इत्यर्थः ॥ २८ ॥

आसारेति । यत्र शृङ्गे विभिन्नकोशैः विकसितकुड्मलैः नवकन्दलैः कन्दलीपुष्पैः अरुणवर्णैः आसारेण धारासम्पातेन । "धारासम्पात आसारः" इत्यमरः । सिक्तायाः क्षितेः बाष्पस्य

विडम्ब्यमाना नवकन्दलैस्ते
विवाहधूमारुणलोचनश्रीः ॥ २९ ॥
उपान्तवानीरवनोपगूढा-
न्यालक्ष्यपारिप्लवसारसानि ।
दूरावतीर्णा पिबतीव खेदा-
दमूनि पम्पासलिलानि दृष्टिः ॥ ३० ॥
अत्रावियुक्तानि रथाङ्गनाम्ना
मन्योन्यदत्तोत्पलकेसराणि ।
द्वन्द्वानि दूरान्तरवर्त्तिना ते
मया प्रिये सस्पृहमीक्षितानि ॥ ३१ ॥

धूमवर्णस्य योगात् हेतोः विडम्ब्यमाना अनुक्रियमाणा ते विवाहधूमेन अरुणा लोचनयोः, सादृश्यात् स्मर्य्यमाणा इति शेषः, माम् अक्षिणोत् अपीड़यत् ॥ २९ ॥

उपान्तेति । उपान्तवानीरवनोपगूढ़ानि पार्श्ववञ्जुल-वनच्छन्नानि आलक्ष्याः ईषत् दृश्याः पारिप्लवाः अचलाः सारसाः येषु तानि अमूनि पम्पासलिलानि पम्पासरोजलानि दूरात् अवतीर्णा मे दृष्टिः अत एव खेदात् पिबति इव न विहातु मुत्सहते इत्यर्थः ॥ ३० ॥

अत्रेति । अत्र पम्पासरसि अन्योन्यस्मै दत्तोत्पलकेसराणि अवियुक्तानि रथाङ्गनाम्नां द्वन्द्वानि चक्रवाकमिथुनानि ते तव दूरान्तरवर्त्तिना दूरदेशवर्त्तिना मया हे प्रिये ! सस्पृहं साभि-लाषम् ईक्षितानि तदानीं त्वा मत्स्मार्य्यम् इत्यर्थः ॥ ३१ ॥

इमां तटाशोकलतां च तन्वीं
स्तनाभिरामस्तवकाभिनम्राम् ।
त्वत्प्राप्तिबुद्ध्या परिरब्धुकामः
सौमित्रिणा साश्रुरहं निषिद्धः ॥ ३२ ॥

अमूर्विमानान्तरलम्बिनीनां
श्रुत्वा स्वनं काञ्चनकिङ्किणीनाम् ।
प्रत्युद्व्रजन्तीव खमुत्पतन्त्यो
गोदावरीसारसपङ्क्तयस्त्वाम् ॥ ३३ ॥

एषा त्वया पेशलमध्ययाऽपि
घटाम्बुसंवर्द्धितबालचूता ।

इमामिति । किं च, स्तनवत् अभिरामाभ्यां स्तवकाभ्याम् अभिनम्रां तन्वीम् इमां तटाशोकलताम् अतः त्वत्प्राप्तिबुद्ध्या त्वमेव प्राप्तेति भ्रान्त्या परिरब्धुम् आलिङ्गितुं कामः यस्य सः अहं सौमित्रिणा लक्ष्मणेन साश्रुः निषिद्धः नेयं सीतेति निवारितः । परिरब्धुकाम इत्यत्र "तुङ्कामनसोरपि" इति वचनात् मकारलोपः ॥ ३२ ॥

अमूरिति । विमानस्य अन्तरेषु अवकाशेषु लम्बन्ते याः तासां काञ्चनकिङ्किणीनां स्वनं श्रुत्वा स्वयूथशब्दभ्रमात् खम् आकाशं उत्पतन्त्यः अमूः गोदावरीसारसपङ्क्तयः त्वां प्रत्युद्व्रजन्ति इव ॥ ३३ ॥

एषेति । पेशलमध्ययाऽपि भाराक्षमयाऽपि इत्यर्थः, त्वया घटाम्बुभिः संवर्द्धिताः बालचूताः यस्याः सा उन्मुखाः अस्य

आनन्दयत्युन्मुखकृष्णसारा
दृष्टा चिरात् पञ्चवटी मनो मे ॥ ३४ ॥
अत्रानुगोदं मृगयानिवृत्त-
स्तरङ्गवातेन विनीतखेदः।
रहस्त्वदुत्सङ्गनिषण्णमूर्द्धा
स्मरामि वानीरगृहेषु सुप्तः ॥ ३५ ॥
भ्रूभेदमात्रेण पदान्मघोनः
प्रभ्रंशयां यो नहुषं चकार।

दभिमुखाः त्वत्त वर्द्धिताः एव कृष्णसाराः यस्याः सा चिरात् दृष्टा एषा पञ्चवटी मे मनः आनन्दयति आह्लादयति। पञ्च-वटीशब्दः पूर्व्वमेव व्याख्यातः ॥ ३४ ॥

अत्रेति। अत्र पञ्चवट्यां गोदा गोदावरी तस्याः समीपे अनुगोदम्। अनुर्यत्समयेत्यव्ययीभावः। मृगयायाः निवृत्तः तरङ्गवातेन विनीतखेदः रहो रहसि। अत्यन्तसंयोगे द्वितीया। त्वदुत्सङ्गनिषण्णमूर्द्धा सन् अहं वानीरगृहेषु सुप्तः स्मरामि। वाक्यार्थः कर्म्म। सुप्त इति यत् तत् स्मरामि इत्यर्थः ॥ ३५ ॥

भ्रूभेदेति। यः मुनिः भ्रूभेदमात्रेण भ्रूभङ्गमात्रेणैव नहुषं राजानं मघोनः पदात् इन्द्रत्वात् प्रभ्रंशयाञ्चकार प्रभ्रंशयति स्म। आविलाम्भः परिशुद्धिहेतोः कलुषजलप्रसादहेतोः तस्य मुनेः अगस्त्यस्य, अगस्त्यस्योदये शरदि जलं प्रसीदतीति उक्तं प्राक्, भूमौ भवः भौमः स्थानपरिग्रहः आश्रमोऽयं दृश्यते इति शेषः।

तस्याविलाम्भः परिशुद्धिहेतो-
र्भौमो मुनेः स्थानपरिग्रहोऽयम् ॥ ३६ ॥

त्रेताग्निधूमाग्र मनिन्द्यकीर्त्ते-
स्तस्येद माक्रान्तविमानमार्गम्।
घ्रात्वा हविर्गन्धि रजोभिमुक्तः
समश्नुते मे लघिमान मात्मा ॥ ३७ ॥

एतन्मुने मानिनि शातकर्णेः
पञ्चाप्सरो नाम विहारवारि।
आभाति पर्य्यन्तवनं विदूरा-
न्मेघान्तरालक्ष्य मिवेन्दुविम्बम् ॥ ३८ ॥

भौम इत्यनेन दिव्योऽप्यस्तीत्युक्तम्। परिगृह्यते इति परिग्रहः स्थानमेव परिग्रहः इति विग्रहः ॥ ३६ ॥

त्रेतेति। अनिन्द्यकीर्त्तेः तस्य अगस्त्यस्य आक्रान्तविमानमार्गं हविर्गन्धोऽस्यास्तीति हविर्गन्धि, त्रयः एव त्रेता अग्नित्रयम्। "अग्नित्रयमिदं त्रेता" इत्यमरः। पृषोदरादित्वादित्वम्। त्रेतेत्यग्नयः त्रेताग्नयः तेषां धूमाग्रम् इदं घ्रात्वा आघ्राय रजोगुणात् विमुक्तः मे मम आत्मा अन्तःकरणं लघिमानं लघुत्वगुणं समश्नुते प्राप्नोति ॥ ३७ ॥

एतदिति। हे मानिनि! शातकर्णेः मुनेः सम्बन्धि पञ्चाप्सरो नाम पञ्चाप्सर इति प्रसिद्धम्। पञ्च अप्सरसः यस्मिन् इति विग्रहः। पर्य्यन्तेषु वनानि यस्य तत् पर्य्यन्तवनं एतत् विहारवारि क्रीड़ासरः विदूरात्, मेघानाम् अन्तरे मध्ये आल-

पुरा स दर्भाङ्कुरमात्रवृत्ति-
श्चरन् मृगैः सार्द्धमृषि र्मघोना।
समाधिभीतेन किलोपनीतः
पञ्चाप्सरोयौवनकूटबन्धम् ॥ ३९ ॥
तस्यायमन्तर्हितसौधभाजः
प्रसक्तसङ्गीतमृदङ्गघोषः।
वियद्गतः पुष्पकचन्द्रशालाः
क्षणं प्रतिश्रुन्मुखराः करोति ॥ ४० ॥

क्ष्यम् ईषत् दृश्यम्। "आ ईषदर्थेऽभिव्याप्तौ" इत्यमरः। इन्दुबिम्बम् इव, आभाति ॥ ३८ ॥

पुरेति। पुरा पूर्व्वस्मिन् काले दर्भाङ्कुरमात्रवृत्तिः तन्मात्राहारः मृगैः सार्द्धं सह चरन् सः ऋषिः समाधेः तपसः भीतेन मघोना इन्द्रेण पञ्चानाम् अप्सरसां यौवनम्। तद्धितार्थेत्यादिना उत्तरपदसमासः। तदेव कूटबन्धं कपटयन्त्रम् उपनीतः। "उन्माथः कूटयन्त्रं स्यात्" इत्यमरः। किलेत्यैतिह्ये। मृगसाहचर्य्यात् मृगवदेव बद्धः इति भावः ॥ ३९ ॥

तस्येति। अन्तर्हितसौधभाजः जलान्तर्गतप्रासादगतस्य तस्य शातकर्णेः अयं प्रसक्तः सन्ततः सङ्गीतमृदङ्गघोषः वियद्गतः सन् पुष्पकस्य चन्द्रशालाः शिरोगृहाणि। "चन्द्रशाला शिरोगृहम्" इति हलायुधः। क्षणं प्रतिश्रुद्भिः प्रतिध्वानैः मुखराः ध्वनतीः करोति। "स्त्री प्रतिश्रुत् प्रतिध्वाने" इत्यमरः ॥ ४० ॥

हविर्भुजामेधवतां चतुर्णां
मध्ये ललाटन्तपसप्तसप्तिः ।
असौ तपस्यत्यपरस्तपस्वी
नाम्ना सुतीक्ष्णश्चरितेन दान्तः ॥ ४१ ॥

अमुं सहासप्रहितेक्षणानि
व्याजार्द्धसन्दर्शितमेखलानि ।
नालं विकर्तुं जनितेन्द्रशङ्कं
सुराङ्गनाविभ्रमचेष्टितानि ॥ ४२ ॥

हविरिति । नाम्ना सुतीक्ष्णः सुतीक्ष्णनामा चरितेन दान्तः सौम्यः असौ अपरः तपस्वी एधवताम् इन्धनवताम् । "काष्ठं दार्व्विन्धनं त्वेधः" इत्यमरः । चतुर्णां हविर्भुजाम् अग्नीनां मध्ये ललाटं तपतीति ललाटन्तपः सूर्य्यः । असूर्य्यललाटयोर्दृशितपोरिति खश्प्रत्ययः, अरुर्द्विषदित्यादिना मुमागमः । ललाटन्तपः सप्तसप्तिः सप्ताश्वः सूर्य्यः यस्य सः तथोक्तः सन् तपस्यति तपश्चरति । कर्म्मणो रोमन्थतपोभ्यां वर्त्तिचरोरिति क्यङ्, तपसः परस्मैपदञ्चेति वक्तव्यम् ॥ ४१ ॥

अमुमिति । जनितेन्द्रशङ्कं तपसा इति शेषः । अमुं सुतीक्ष्णं सहासं प्रहितानि ईक्षणानि दृष्टयः येषु तानि व्याजेन केनचित् मिषेण । "पुंस्यर्द्धोऽर्द्धं समेंऽशके" इति विश्वः । अर्द्धम् ईषत् सन्दर्शिताः मेखलाः येषु तानि सुराङ्गनानां विभ्रमाः विलासाः एव चेष्टितानि विकर्त्तुं स्खलयितुम् अलं समर्थानि न बभूवुः इति शेषः ॥ ४२ ॥

एषोऽक्षमालावलयं मृगाणां
कण्डूयितारं कुशसूचिलावम् ।
सभाजने मे भुज मूर्द्ध्वबाहुः
सव्येतरं प्राध्वमितः प्रयुङ्क्ते ॥ ४३ ॥
वाचंयमत्वात् प्रणतिं ममैषः
कम्पेन किञ्चित् प्रतिगृह्य मूर्द्ध्नः ।
दृष्टिं विमानव्यवधानमुक्तां
पुनः सहस्रार्च्चिषि सन्निधत्ते ॥ ४४ ॥

एष इति । ऊर्द्ध्वबाहुः एषः सुतीक्ष्णः अक्षमालेव वलयं अस्य तं मृगाणां कण्डूयितारं कुशाः एव सूचयः ताः लूनातीति कुशसूचिलावः तम् । कर्म्मण्यणित्यण् । एभिर्विशेषणैः जय-शीलत्वं भूतदया कर्म्मक्षमत्वञ्च द्योत्यते । सव्यादितरं दक्षिणं भुजं मे मम सभाजने सम्मानननिमित्ते । निमित्तात् कर्म्मयोग इति सप्तमी । इतः प्राध्वं प्रकृतानुकूलबन्धं प्रयुङ्क्ते । "अनु-कूलार्थकं प्राध्वम्" इत्यमरः । अव्ययञ्चैतत् ॥ ४३ ॥

वाचंयमत्वादिति । एषः सुतीक्ष्णः वाचं यच्छतीति वाचं-यमः मौनव्रती । वाचि यमो व्रत इति खच्प्रत्ययः, वाचंयम-पुरन्दरौ चेति मुम् । तस्य भावः तत्त्वात् मम प्रणतिं किञ्चित् मूर्द्ध्नः कम्पेन प्रतिगृह्य विमानेन व्यवधानं तिरोधानं तस्मात् मुक्ताम् । अपेतापोढ़मुक्तपतितेति पञ्चमीसमासः । दृष्टिं पुनः सहस्रार्च्चिषि सूर्य्ये सन्निधत्ते सम्यक् धत्ते इत्यर्थः । अन्यथा अकर्म्मकत्वप्रसङ्गात् ॥ ४४ ॥

अदः शरण्यं शरभङ्गनाम्न-
स्तपोवनं पावनमाहिताग्नेः।
चिराय सन्तर्प्य समिद्भिरग्निं
यो मन्त्रपूतां तनुमप्यहौषीत्॥ ४५॥

छायाविनीताध्वपरिश्रमेषु
भूयिष्ठसम्भाव्यफलेष्वमीषु।
तस्यातिथीनामधुना सपर्य्या
स्थिता सुपुत्रेष्विव पादपेषु॥ ४६॥

धारास्वनोद्गारिदरीमुखोऽसौ
शृङ्गाग्रलग्नाम्बुदवप्रपङ्कः।

अद इति। शरणे रक्षणे साधु शरण्यं पावयतीति पावनम् अदः दृश्यमानं तपोवनम् आहिताग्नेः शरभङ्गनाम्नः मुनेः सम्बन्धि, यः शरभङ्गः चिराय अग्निं समिद्भिः सन्तर्प्य तर्पयित्वा ततः मन्त्रैः पूतां शुद्धां तनुम् अपि अहौषीत् हुतवान्। जुहोतेर्लुङ्॥ ४५॥

छायेति। अधुना अस्मिन् काले तस्य शरभङ्गस्य सम्बन्धिनी अतिथीनां सपर्य्या अतिथिपूजा। "पूजा नमस्यापचितिः सपर्य्यार्हणाः समाः" इत्यमरः। छायाभिः विनीतः अपनीतः अध्वपरिश्रमः यैः तेषु भूयिष्ठानि बहुतमानि सम्भाव्यानि श्लाघ्यानि फलानि येषां तेषु अमीषु पादपेषु आत्मवृत्तेषु सुपुत्रेष्विव स्थिता, पुत्रैरिव पादपै रनुष्ठीयते इत्यर्थः॥४६॥

धारेति। धाराः निर्झराः, यद्वा धारया सातत्येन स्वनो-

बध्नाति मे बन्धुरगात्रि चक्षुः
दृप्तः ककुद्मानिव चित्रकूटः ॥ ४७ ॥
एषा प्रसन्नस्तिमितप्रवाहा
सरिद्विदूरान्तरभावतन्वी ।
मन्दाकिनी भाति नगोपकण्ठे
मुक्तावली कण्ठगतेव भूमेः ॥ ४८ ॥
अयं सुजातोऽनुगिरं तमालः
प्रवालमादाय सुगन्धि यस्य ।

द्रारि दरी एव मुखं यस्य सः शृङ्गं शिखरं विषाणञ्च तस्य अग्रे लग्नः अम्बुदः एव वप्रपङ्कः वप्रक्रीड़ासक्तपङ्कः यस्य सः असौ चित्रकूटः हे बन्धुरगात्रि ! उन्नतानताङ्गि ! "बन्धुरं तून्नतानतम्" इत्यमरः । दृप्तः ककुद्मान् वृषभः इव, मे चक्षुः बध्नाति नान्यासक्तं करोति ॥ ४७ ॥

एषेति । प्रसन्नः निर्मलः स्तिमितः निस्पन्दः प्रवाहः यस्याः सा विदूरस्य अन्तरस्य मध्यवर्त्त्यवकाशस्य भावात् तन्वी दूरदेशवर्त्तित्वात् तनुत्वेन अवभासमाना मन्दाकिनी नाम काचित् चित्रकूटनिकटगा एषा सरित् नगोपकण्ठे, भूमेः कण्ठगता मुक्तावली इव भाति। अत्र नगस्य गिरेस्तत्वमुपकण्ठस्य कण्ठत्वञ्च गम्यते ॥ ४८ ॥

अयमिति । गिरेः समीपे अनुगिरम् । गिरेश्च सेनकस्येति समासान्तः टच्प्रत्ययः । सुजातः तमालः अयं दृश्यते । यस्य तमालस्य शोभनः गन्धः यस्य तत् सुगन्धि । गन्धस्येत्यादिना इकारः समासान्तः । प्रवालं पल्लवम् आदाय मया वै यवा-

यवाङ्कुरापाण्डुकपोलशोभी
मया वतंसः परिकल्पित स्ते॥ ४९ ॥

अनिग्रहत्रासविनीतसत्त्व-
मपुष्पलिङ्गात् फलबन्धिवृक्षम्।
वनं तपःसाधन मेतदत्रे-
राविष्कृतोदग्रतरप्रभावम् ॥ ५० ॥

अत्राभिषेकाय तपोधनानां
सप्तर्षिहस्तोद्धृतहेमपद्माम्।
प्रवर्त्तयामास किलानुसूया
त्रिस्रोतसं त्र्यम्बकमौलिमालाम् ॥ ५१ ॥

ङ्कुरवत् आपाण्डौ कपोले शोभते यः सः अवतंसः परि-कल्पितः॥ ४९ ॥

अनिग्रहेति। अनिग्रहत्रासा दण्डभयरहिता अपि विनीताः सत्त्वाः जन्तवः यस्मिन् तत् अपुष्पलिङ्गात् पुष्पनिमित्तं विना एव फलबन्धिनः फलग्राहिणः वृक्षाः यस्मिन् तत् अत एव आविष्कृतोदग्रतरप्रभावम् अत्रेः मुनेः तपसः साधनं वनम् एतत् ॥ ५० ॥

अत्रेति। अत्र वने अनुसूया अत्रिपत्नी, सप्त च ते ऋष-यश्च सप्तर्षयः। दिक्संख्ये संज्ञायामिति समासः। तेषां हस्तैः उद्धृतानि हेमपद्मानि यस्याः तां त्र्यम्बकमौलिमालां हर-शिरःस्रजं त्रिस्रोतसं भागीरथीं तपोधनानाम् ऋषीणाम् अभिषेकाय स्नानाय, प्रवर्त्तयामास, किलेत्यैतिह्ये॥ ५१ ॥

वीरासनै ध्यानजुषा मृषीणा-
ममी समध्यासितवेदिमध्याः ।
निवातनिष्कम्पतया विभान्ति
योगाधिरूढा इव शाखिनोऽपि ॥ ५२ ॥

त्वया पुरस्ता दुपयाचितो यः
सोऽयं वटः श्याम इति प्रतीतः ।
राशि र्मणीना मिव गारुडानां
सपद्मरागः फलितो विभाति ॥ ५३ ॥

क्वचित् प्रभालेपिभिरिन्द्रनीलै-
र्मुक्तामयी यष्टि रिवानुविद्धा ।

वीरेति । वीरासनैः जयसाधनैः ध्यानं जुषन्ते सेवन्ते ध्यानजुषः तेषां तैः उपविश्य ध्यायताम् ऋषीणां सम्बन्धिनः समध्यासितवेदिमध्याः । इदं वीरासनस्थानीयम् । अमी शाखिनः अपि निवातनिष्कम्पतया योगाधिरूढाः इव ध्यानभाजः इव विभान्ति । ध्यायन्तोऽपि निश्चलाङ्गा भवन्ति । वीरासने वशिष्ठः, "एकपादमथैकस्मिन् विन्यस्योरुणि संस्थितम् । इतरस्मिंस्तथा चान्यं वीरासनमुदाहृतम् ॥" इति ॥ ५२ ॥

त्वयेति । त्वया पुरस्तात् पूर्वं यः उपयाचितः प्रार्थितः । तथा च रामायणे, "न्यग्रोधं तमुपस्थाय वैदेही वाक्यमब्रवीत् । नम स्तेऽस्तु महावृक्ष पारयेन्मे व्रतं पतिः ॥" इति । श्याम इति प्रतीतः सः वटः अयं फलितः सन्, सपद्मरागः गारुडानां मणीनां राशिः इव विभाति ॥ ५३ ॥

क्वचिदित्यादिभि श्चतुर्भिः श्लोकैः प्रयागे गङ्गायमुनासङ्गमं

अन्यत्र माला सितपङ्कजाना-
मिन्दीवरै रुत्खचितान्तरेव ॥ ५४ ॥
क्वचित् खगानां प्रियमानसानां
कादम्बसंसर्गवतीव पङ्क्तिः।
अन्यत्र कालागुरुदत्तपत्रा
भक्तिर्भुवश्चन्दनकल्पितेव ॥ ५५ ॥
क्वचित् प्रभा चान्द्रमसी तमोभि-
श्छायाविलीनैः शवलीकृतेव।

वर्णयति क्वचिदिति। हे अनवद्याङ्गि! यमुनातरङ्गैः भिन्न प्रवाहा मिश्रौघा गङ्गा जाह्नवी विभाति त्वं पश्य। केव? क्वचित् प्रदेशे प्रभया लिम्पन्ति सन्निहितमिति प्रभालेपिभिः इन्द्रनीलैः अनुविद्धा सह गुम्फिता मुक्तामयी यष्टिः इव हारावलिः इव विभाति। अन्यत्र प्रदेशे इन्दीवरैः नीलोत्पलैः उत्खचितान्तरा सह ग्रथिता सितपङ्कजानां पुण्डरीकाणां माला इव, विभातीति सर्व्वत्र सम्बन्धः ॥ ५४ ॥

क्वचिदिति। क्वचित् कादम्बसंसर्गवती नीलहंससंसृष्टा प्रियं मानसं नाम सरः येषां तेषां खगानां राजहंसानां पङ्क्तिः इव। "राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः" इत्यमरः। अन्यत्र कालागुरुणा दत्तपत्रा रचितमकरिका भुवः चन्दनकल्पिता भक्तिः इव ॥ ५५ ॥

क्वचिदिति। क्वचित् छायासु विलीनैः स्थितैः तमोभिः शवलीकृता कर्व्वुरीकृता चान्द्रमसी प्रभा चन्द्रिका इव। अन्यत्र

अन्यत्र शुभ्रा शरदभ्रलेखा
रन्ध्रेष्विवालक्ष्य नभःप्रदेशा ॥ ५६ ॥
क्वचिच्च कृष्णोरगभूषणेव
भस्माङ्गरागा तनुरीश्वरस्य ।
पश्यानवद्याङ्गि ! विभाति गङ्गा
भिन्नप्रवाहा यमुनातरङ्गैः ॥ ५७ ॥
समुद्रपत्न्यो र्जलसन्निपाते
पूतात्मना मत्र किलाभिषेकात् ।
तत्त्वाववोधेन विनापि भूय
स्तनुत्यजां नास्ति शरीरबन्धः ॥ ५८ ॥
पुरं निषादाधिपते रिदं तत्
यस्मिन् मया मौलिमणिं विहाय ।

रन्ध्रेषु आलक्ष्य नभःप्रदेशा शुभ्रा शरदभ्रलेखा शरन्मेघपङ्क्तिः इव ॥ ५६ ॥

क्वचिदिति । क्वचित् कृष्णोरगभूषणा भस्माङ्गरागा ईश्वरस्य तनुः इव विभाति । शेषो व्याख्यातः । कलापकम् ॥ ५७ ॥

समुद्रेति । अत्र समुद्रपत्न्योः गङ्गायमुनयोः जलसन्निपाते सङ्गमे अभिषेकात् स्नानात् पूतात्मनां तनुत्यजां पुंसां तत्त्वावबोधेन तत्त्वज्ञानेन विनापि प्रारब्धशरीरत्यागानन्तरं भूयः पुनः शरीरबन्धः शरीरयोगः नास्ति किल । अन्यत्र ज्ञानादेव मुक्तिः अत्र स्नानादेव मुक्तिः इत्यर्थः ॥ ५८ ॥

पुरमिति । निषादाधिपतेः गुहस्य तत् पुरम् इदं यस्मिन

जटासु बद्धास्वरुदत् सुमन्त्रः
कैकेयि ! कामाः फलिता स्तवेति ॥ ५९ ॥
पयोधरैः पुण्यजनाङ्गनानां
निर्विष्टहेमाम्बुजरेणु यस्याः ।
ब्राह्मं सरः कारण माप्तवाचो
बुद्धेरिवाव्यक्त मुदाहरन्ति ॥ ६० ॥
जलानि या तीरनिखातयूपा
वहत्ययोध्यामनु राजधानीम् ।

पुरे मया मौलिमणिं विहाय जटासु बद्धासु रचितासु सतीसु सुमन्त्रः हे कैकेयि ! तव कामाः मनोरथाः फलिताः सफलाः जाताः इति अरुदत् । रुदिरश्रुविमोचने लुङ् ॥ ५९ ॥

पयोधरैरिति । पुण्यजनाङ्गनानां यक्षस्त्रीणां पयोधरैः स्तनैः निर्विष्टः उपभुक्तः हेमा अम्बुजरेणु र्यस्य तत् । तत्र ताः क्रीड़न्तीति व्यज्यते । ब्रह्मणः इदं ब्राह्मम् । नस्तद्धित इति टिलोपः । ब्राह्मं सरः मानसाख्यं यस्याः सरय्वाः, बुद्धेः महत्तत्त्वस्य अव्यक्तं प्रधानम् इव कारणम् आप्तस्य वाचः आप्तवाचः वेदाः यद्वा बहुव्रीहिणा मुनयः उदाहरन्ति प्रवदन्ति ॥ ६० ॥

जलानीति । यूपः संस्कृतः पशुबन्धनार्थः दारुविशेषः । तीरनिखातयूपा या सरयूः तुरङ्गमेधाः अश्वमेधाः तेषु अवभृथार्थमेव अवतीर्णैः अवरूढैः इक्ष्वाकुभिः इक्ष्वाकुगोत्रापत्यैः पूर्व्वैः। तद्राजत्वादणो लुक् । पुण्यतरीकृतानि अतिशयेन पुण्यानि कृतानि जलानि अयोध्यां राजधानीं नगरीम् अनु समीपे तया

तुरङ्गमेधावभृतावतीर्णै-
रिक्ष्वाकुभिः पुण्यतरीकृतानि ॥ ६१ ॥

यां सैकतोत्सङ्गसुखोचितानां
प्राज्यैः पयोभिः परिवर्द्धितानाम् ।
सामान्यधात्रीमिव मानसं मे
सम्भावयत्युत्तरकोशलानाम् ॥ ६२ ॥

सेयं मदीया जननीव तेन
मान्येन राज्ञा सरयूर्वियुक्ता ।
दूरे वसन्तं शिशिरानिलैर्मां
तरङ्गहस्तैरुपगूहतीव ॥ ६३ ॥

लक्षितया इत्यर्थः । अनुशब्दस्य लक्षणेत्थम्भूतेत्यादिना कर्म्मप्रवचनीयत्वात् तद्योगे द्वितीया । वहति प्रापयति ॥ ६१ ॥

यामिति । यां सरयूं मे मानसं कर्त्तृ, सैकतं पुलिनं तत् एव उत्सङ्गः तत्र यत् सुखं तत्र उचितानां प्राज्यैः प्रभूतैः पयोभिः अम्बुभिः क्षीरैश्च । "पयः क्षीरं पयोऽम्बु च" इत्यमरः । परिवर्द्धितानां पुष्टानाम् उत्तरकोशलानाम् उत्तरकोशलेश्वराणां सामान्यधात्रीं साधारणमातरम् इव, सम्भावयति : "धात्री जनन्यामलकी वसुमत्युपमातृषु" इति विश्वः ॥ ६२ ॥

सेति । मदीया जननी कौशल्या इव मान्येन पूज्येन तेन राज्ञा दशरथेन वियुक्ता सा इयं सरयूः दूरे वसन्तं प्रोष्यागच्छन्तम् इत्यर्थः मां पुत्रभूतं शिशिरानिलैः तरङ्गैः एव हस्तैः उपगूहति इव आलिङ्गति इव ॥ ६३ ॥

विरक्तसन्ध्याकपिशं पुरस्तात्
यतो रजः पार्थिवमुज्जिहीते।
शङ्के हनूमत्कथितप्रवृत्तिः
प्रत्युद्गतो मां भरतः ससैन्यः ॥ ६४ ॥

अद्धा श्रियं पालितसङ्गराय
प्रत्यर्पयिष्यत्यनघां स साधुः।
हत्वा निवृत्ताय मृधे खरादीन्
संरक्षितां त्वामिव लक्ष्मणो मे ॥ ६५ ॥

विरक्तेति। विरक्ता अतिरक्ता या सन्ध्या तद्वत् कपिशं ताम्रं पृथिव्याः इदं पार्थिवं रजः धूलिः पुरस्तात् अग्रे यतः यस्मात् कारणात् उज्जिहीते उद्गच्छति, तस्मात् हनुरस्यास्तीति हनूमान्। शरादीनाञ्चेति दीर्घः। तेन कथिता प्रवृत्तिः अस्मदागमनवार्त्ता यस्मै सः भरतः ससैन्यः सन् मां प्रत्युद्गत इति शङ्के तर्कयामि। "शङ्का भयवितर्कयोः" इति शब्दार्णवे। अत्र यत्तदोर्नित्यसम्बन्धात् तच्छब्दलाभः ॥ ६४ ॥

अद्धेति। किं च, साधुः सज्जनः सः भरतः। "साधुः वार्द्धुषिके चारौ सज्जने चापि वाच्यवत्" इति विश्वः। पालितसङ्गराय पालितपितृप्रतिज्ञाय मे मह्यम् अनघाम् अदोषां भोगाभावात् अनुच्छिष्टां किन्तु संरक्षितां श्रियम्, मृधे युद्धे खरादीन् हत्वा निवृत्ताय लक्ष्मणः संरक्षिताम् अनघां त्वामिव, प्रत्यर्पयिष्यति अद्धा सत्यम्। "सत्ये त्वद्धाञ्जसा द्वयम्" इत्यमरः ॥ ६५ ॥

असौ पुरस्कृत्य गुरुं पदातिः
पश्चादवस्थापितवाहिनीकः ।
वृद्धै रमात्यैः सह चीरवासा
मामर्घ्यपाणि र्भरतोऽभ्युपैति ॥ ६६ ॥

पित्रा विसृष्टां मदपेक्षया यः
श्रियं युवाप्यङ्कगतामभोक्ता ।
इयन्ति वर्षाणि तया सहोग्र
मभ्यस्यतीव व्रतमासिधारम् ॥ ६७ ॥

एतावदुक्तवति दाशरथौ तदीया
मिच्छां विमान मधिदेवतया विदित्वा ।

असाविति । असौ पदातिः पादचारी चीरवासाः वल्कलवसनः भरतः पश्चात् पृष्ठभागे अवस्थापिता वाहिनी सेना येन :स तथोक्तः सन् । नद्यृतश्चेति कप् । गुरुं वशिष्ठं पुरस्कृत्य वृद्धैः अमात्यैः सह अर्घ्यपाणिः सन् माम् अभ्युपैति ॥ ६६ ॥

पित्रेति । यः भरतः पित्रा विसृष्टां दत्ताम् अङ्कम् उत्सङ्गं गताम् अपि यां श्रियं युवा अपि मदपेक्षया मद्भक्त्या अभोक्ता सन् । तृन्नन्तत्वान्नलोकेति षष्ठीनिषेधः । इयन्ति वर्षाणि एतावतः वत्सरान् । अत्यन्तसंयोगे द्वितीया । तया श्रिया सह, स्त्रियेति गम्यते, उग्रं दुश्चरम् आसिधारं नाम व्रतम् अभ्यस्यति इव वर्त्तयति इव । "युवा युवत्या सार्द्धं यत् मुग्धभर्त्तृवदाचरेत् । अन्तर्निवृत्तसङ्गः स्यात् आसिधारव्रतं हि तत् ।" इति यादवः । इदञ्चासिधारा वाङ्गमणतुल्यत्वादासिधारव्रतमित्युक्तम् ॥ ६७ ॥

एतावदिति । दाशरथौ रामे एतावत् उक्तवति सति विमानं

ज्योतिष्पथादवततार सविस्मयाभि-
रुद्वीचितं प्रकृतिभिर्भरतानुगाभिः॥ ६८॥
तस्मात् पुरःसरविभीषणदर्शितेन
सेवाविचक्षणहरीश्वरदत्तहस्तः।
यानादवातरददूरमहीतलेन
मार्गेण भङ्गिरचितस्फाटिकेन रामः॥ ६९॥
इक्ष्वाकुवंशगुरवे प्रयतः प्रणम्य
सभ्रातरं भरतमर्घ्यपरिग्रहान्ते।

पुष्पकं कर्तृ तदीयां रामसम्बन्धिनीम् इच्छाम् अधिदेवतया मिषेण विदित्वा तत्प्रेरितं सत् इत्यर्थः सविस्मयाभिः भरतानुगाभिः प्रकृतिभिः प्रजाभिः उद्वीचितं ज्योतिष्पथात् आकाशात् अवततार॥ ६८॥

तस्मादिति। रामः सेवायां विचक्षणः कुशलः हरीश्वरः सुग्रीवः तेन दत्तः हस्तः हस्तावलम्बः यस्य तादृशः सन् स्थलज्ञत्वात् पुरःसरः विभीषणः तेन दर्शितेन अदूरं महीतलं यस्य तेन भङ्गिभिः विच्छित्तिभिः रचितस्फाटिकेन सोपानपर्व्वणा मार्गेण तस्मात् यानात् पुष्पकात् अवातरत् अवतीर्णवान्। तरतेर्लङ्॥ ६९॥

इक्ष्वाक्विति। प्रयतः सः रामः इक्ष्वाकुवंशगुरवे वशिष्ठाय प्रणम्य नमस्कृत्य अर्घ्यस्य परिग्रहः स्वीकारः तस्य अन्ते पर्य्यश्रुः परिगतानन्दवाष्पः सन् सभ्रातरं भरतम् अस्वजत आलिङ्गत्, तस्मिन् रामे भक्त्या अपोढ़ः परिहृतः पितृराज्यमहाभिषेकः

पर्य्यश्रु रस्वजत मूर्द्धनि चोपजघ्रौ
तद्भक्त्यपोढपितृराज्यमहाभिषेके ॥ ७० ॥

श्मश्रुप्रवृद्धिजनिताननविक्रियांश्च
प्लक्षान् प्ररोहजटिलानिव मन्त्रिवृद्धान् ।
अन्वग्रहीत् प्रणमतः शुभदृष्टिपातैः
वार्त्तानुयोगमधुराक्षरया च वाचा ॥ ७१ ॥

दुर्ज्जातबन्धुरयमृक्षहरीश्वरो मे
पौलस्त्य एष समरेषु पुरःप्रहर्त्ता ।
इत्यादृतेन कथितौ रघुनन्दनेन
व्युत्क्रम्य लक्ष्मणमुभौ भरतो ववन्दे ॥ ७२ ॥

येन तस्मिन् मूर्द्धनि उपजघ्रौ च। घ्रागन्धोपादाने, लिटि रूपम् ॥ ७० ॥

श्मश्र्विति । श्मश्रूणां मुखरोम्णां प्रवृद्धया संस्काराभावात् अभिवृद्धया जनिता आननेषु विक्रिया विकृतिः येषां तान् अत एव प्ररोहैः शाखावलम्बिभिः अधोमुखैः मूलैः जटिलान् जटावतः प्लक्षान् न्यग्रोधान् इव स्थितान् प्रणमतः मन्त्रिवृद्धान् च शुभैः कृपार्द्रैः दृष्टिपातैः वार्त्तस्य अनुयोगेन कुशलप्रश्नेन मधुराक्षरया वाचा च अन्वग्रहीत् अनुगृहीतवान् ॥ ७१ ॥

दुर्ज्जात इति । अयं मे दुर्ज्जातबन्धुः आपद्बन्धुः । "दुर्ज्जातं व्यसनं प्रोक्तम्" इति विश्वः । ऋक्षहरीश्वरः सुग्रीवः, एषः समरेषु पुरःप्रहर्त्ता पौलस्त्यः विभीषणः इति आदृतेन आदरवता । कर्त्तरि क्तः । रघूणां नन्दनेन रामेण कथितौ

सौमित्रिणा तदनु संससृजे स चैन
मुत्थाप्य नम्रशिरसं भृश मालिलिङ्ग।
रूढ़ेन्द्रजित्प्रहरणव्रणकर्कशेन
क्लिश्यन्निवास्य भुजमध्यमुरःस्थलेन ॥ ७३ ॥
रामाज्ञया हरिचमूपतयस्तदानीं
कृत्वा मनुष्यवपुरारुरुहुर्गजेन्द्रान्।

उभौ विभीषणसुग्रीवौ लक्ष्मणम् अनुजम् अपि व्युत्क्रम्य आलिङ्गनादिभिः असम्भाव्य भरतः ववन्दे ॥ ७२ ॥

सौमित्रिणेति। तत् अनु सुग्रीवादिवन्दनानन्तरं सः भरतः सौमित्रिणा संससृजे सङ्गतः। सृज विसर्गे दैवादिकात् कर्त्तरि लिट्। नम्रशिरसं प्रणतम् एनं सौमित्रिम् उत्थाप्य भृशं गाढ़म् आलिलिङ्ग च। किं कुर्व्वन्? रूढ़ेन्द्रजित्प्रहरणव्रणैः कर्कशेन अस्य सौमित्रेः उरःस्थलेन भुजमध्यं स्वकीयं क्लिश्यन् इव पीडयन् इव। क्लिश्नातिरयं सकर्म्मकः क्लिश्नाति भुवनत्रयमिति दर्शनात्। ननु रामायणे, "ततो लक्ष्मणमासाद्य वैदेहीञ्च परन्तप। अभिवाद्य ततः प्रीतो भरतो नाम चाब्रवीत्॥" इति भरतस्य कानिष्ठं प्रतीयते किमर्थं ज्यैष्ठ्यमवलम्ब्य आर्ज्जवेन श्लोको व्याख्यातः सत्यम्। किन्तु रामायणश्लोकार्थष्टीकाकृतोक्तः श्रूयताम्, ततो लक्ष्मणमासाद्येत्यादिश्लोके आसादनं लक्ष्मणवैदेह्योः, अभिवादनं तु वैदेह्या एव, अन्यथा पूर्व्वोक्तं भरतस्य ज्यैष्ठ्यं विरुध्येतेति ॥ ७३ ॥

रामेति। तदानीं हरिचमूपतयः रामाज्ञया मनुष्यवपुः कृत्वा गजेन्द्रान् आरुरुहुः, बहुधा मदवारिधाराः क्षरत्सु वर्षत्सु

तेषु क्षरत्सु बहुधा मदवारिधाराः
शैलाधिरोहणसुखान्युपलेभिरे ते ॥ ७४ ॥
सानुप्लवः प्रभुरपि क्षणदाचराणां
भेजे रथान् दशरथप्रभवानुशिष्टः।
मायाविकल्परचितैरपि ये तदीयै
र्न स्यन्दनैस्तुलितकृत्रिमभक्तिशोभाः ॥ ७५ ॥
भूयस्ततो रघुपतिर्विलसत्पताक
मध्यास्त कामगति सावरजो विमानम्।

तेषु गजेन्द्रेषु ते कतियूथनाथाः शैलाधिरोहणसुखानि उपलेभिरे अनुबभूवुः। ७४ ॥

सानुप्लव इति। सानुप्लवः सानुगः। "अभिसारस्त्वनुसरः सहायोऽनुप्लवोऽनुगः" इति यादवः। क्षणदाचराणां प्रभुः विभीषणोऽपि प्रभवत्यस्मादिति प्रभवः जनकः दशरथः प्रभवः यस्य सः दशरथप्रभवः रामः तेन अनुशिष्टः आज्ञप्तः सन् रथान् भेजे। तानेव विशिनष्टि, ये रथाः मायाविकल्परचितैः सङ्कल्पविशेषनिर्म्मितैरपि तदीयैः विभीषणीयैः स्यन्दनैः तुलितकृत्रिमभक्तिशोभाः तुलिता समीकृता कृत्रिमा क्रियया निर्वृत्ता भक्तीनां शोभा येषां ते तथोक्ताः न भवन्ति तेऽपि तत्साम्यं न लभन्ते इत्यर्थः। कृत्रिमेत्यत्र ड्वितः क्त्रिरिति क्त्रिप्रत्ययः, क्त्रेर्मम् नित्यमिति ममागमः। ७५ ॥

भूय इति। ततः रघुपतिः सावरजः भरतलक्ष्मणसहितः सन् विलसत्पताकं कामेन इच्छानुसारेण गतिः यस्य तत्

दोषातनं बुधबृहस्पतियोगदृश्य
स्तारापतिस्तरलविद्युदिवाभ्रवृन्दम् ॥ ७६ ॥

तत्रेश्वरेण जगतां प्रलयादिवोर्वीं
वर्षात्ययेन रुचमभ्रघनादिवेन्दोः।
रामेण मैथिलसुतां दशकण्ठकृच्छ्रात्
प्रत्युद्धृतां धृतिमतीं भरतो ववन्दे ॥ ७७ ॥

लङ्केश्वरप्रणतिभङ्गदृढव्रतं तत्
वन्द्यं युगं चरणयोर्जनकात्मजायाः।
ज्येष्ठानुवृत्तिजटिलञ्च शिरोऽस्य साधो
रन्योन्यपावनमभूदुभयं समेत्य ॥ ७८ ॥

विमानं भूयः पुनरपि, बुधबृहस्पतिभ्यां योगेन दृश्यः दर्शनीयः तारापतिः चन्द्रः दोषाभवं दोषातनम्। सायञ्चिरं प्राह्णे इत्यादिना दोषाशब्दादव्ययात् ट्युप्रत्ययः। तरलविद्युत् चञ्चलतड़ित् अभ्रवृन्दम् इव, अध्यास्त अधिष्ठितवान् ॥ ७६ ॥

तत्रेति। तत्र विमाने, जगताम् ईश्वरेण आदिवराहेण प्रलयात् उर्व्वीम् इव, वर्षात्ययेन शरदागमेन अभ्रघनात् मेघसङ्घातात् इन्दोः रुचं चन्द्रिकाम् इव, रामेण दशकण्ठः एव कृच्छ्रं सङ्कटं तस्मात् प्रत्युद्धृतां धृतिमतीं सन्तोषवतीं मैथिलसुतां सीतां भरतः ववन्दे ॥ ७७ ॥

लङ्केश्वरेति। लङ्केश्वरस्य रावणस्य प्रणतीनां भङ्गेन निरासेन दृढव्रतम् अखण्डितपातिव्रत्यम् अत एव वन्द्यं तत् जनकात्मजायाः चरणयोः युगम्, ज्येष्ठानुवृत्त्या जटिलं जटायुक्तं

क्रोशार्द्धं प्रकृतिपुरःसरेण गत्वा
काकुत्स्थः स्तिमितजवेन पुष्पकेण ।
शत्रुघ्नप्रतिविहितोपकार्य्यमार्य्यः
साकेतोपवनमुदारमध्युवास ॥ ७९ ॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ
दण्डकाप्रत्यागमनो नाम
त्रयोदशः सर्गः ।

---

साधोः सज्जनस्य अस्य भरतस्य शिरश्च इत्युभयं समेत्य मिलित्वा अन्योन्यस्य पावनं शोधकम् अभूत् ॥ ७८ ॥

क्रोशेति । आर्य्यः पूज्यः काकुत्स्थः रामः प्रकृतयः प्रजाः पुरःसराः यस्य तेन स्तिमितजवेन मन्दवेगेन पुष्पकेण, क्रोशः अध्वपरिमाणविशेषः, क्रोशार्द्धं क्रोशैकदेशं गत्वा शत्रुघ्नेन प्रतिविहिताः सज्जिताः उपकार्य्याः पटभवनानि यस्मिन् तत् उदारं महत् साकेतस्य अयोध्यायाः उपवनम् अध्युवास अधितष्ठौ । "साकेतः स्यादयोध्यायां कोशला नन्दिनी तथा" इति यादवः ॥ ७९ ॥

इति श्रीमहामहोपाध्याय-कोलाचलमल्लिनाथसूरि-विरचितायां
रघुवंशटीकायां सञ्जीवनीसमाख्यायां त्रयोदशः सर्गः ॥१३॥

---

## चतुर्दशः सर्गः ।

भर्तुः प्रणाशा दथ शोचनीयं
दशान्तरं तत्र समं प्रपन्ने ।
अपश्यतां दाशरथी जनन्यौ
छेदादिवोपघ्नतरोर्व्रतत्यौ ॥ १ ॥
उभावुभाभ्यां प्रणतौ हतारी
यथाक्रमं विक्रमशोभिनौ तौ ।

सञ्जीवनं मैथिलकन्यकायाः सौन्दर्य्यसर्व्वस्वमहानिधानम् ।
शशाङ्कपङ्केरुहयोः समानं रामस्य वन्दे रमणीय मास्यम् ॥

भर्त्तुरिति । अथ उपवनाधिष्ठानानन्तरं दाशरथी रामलक्ष्मणौ, उपघ्नतरोः आश्रयवृक्षस्य । उपघ्नमाश्रय इति निपातः । छेदात् व्रतत्यौ लते इव । "वल्ली तु व्रततिर्लता" इत्यमरः । भर्त्तुः-दशरथस्य प्रणाशात् शोचनीयं दशान्तरम् अवस्थान्तरम् । "अवस्थायां वस्त्रान्ते स्याद्दशापि" इति विश्वः। प्रपन्ने प्राप्ते जनन्यौ कौशल्यासुमित्रे तत्र साकेतोपवने समं युगपत् अपश्यताम् । दृशेः कर्त्तरि लङ् ॥ १ ॥

उभाविति । यथाक्रमं स्वस्वमातृपूर्व्वकं प्रणतौ नमस्कृतवन्तौ हतारी हतशत्रुकौ विक्रमशोभिनौ तौ उभौ रामलक्ष्मणौ उभाभ्यां मातृभ्याम् अस्रैः अश्रुभिः अन्धतया हेतुना।

विसृष्ट मस्रान्धनया न दृष्टौ
ज्ञातौ सुतस्पर्शसुखोपलम्भात् ॥ २ ॥
आनन्दजः शोकज मश्रु बाष्प-
स्तयो रशीतं शिशिरो बिभेद ।
गङ्गासरय्वो र्जलमुष्णतप्तं
हिमाद्रिनिस्यन्द इवावतीर्णः ॥ ३ ॥
ते पुत्रयो नैर्ऋतशस्त्रमार्गा-
नार्द्रा निवाङ्गे सदयं स्पृशन्त्यौ ।
अपीप्सितं चत्रकुलाङ्गनानां
न वीरसूशब्द मकामयेताम् ॥ ४ ॥

"अस्रमश्रु च शोणितम्" इति यादवः । विसृष्टं न दृष्टौ किन्तु सुतस्पर्शेन यत् सुखं तस्य उपलम्भात् अनुभवात् ज्ञातौ ॥ २ ॥

आनन्दज इति । तयोः मात्रोः आनन्दजः शिशिरः बाष्पः शोकजम् अशीतम् उष्णम् अश्रु, उष्णतप्तं ग्रीष्मतप्तं गङ्गासरय्वोः जलं कर्म्म अवतीर्णो हिमाद्रेः निस्यन्दः निर्झरः इव, बिभेद । आनन्देन शोक स्तिरस्कृतः इत्यर्थः ॥ ३ ॥

ते इति । ते मातरौ पुत्रयोः अङ्गे शरीरे नैर्ऋतशस्त्राणां राक्षसशस्त्राणां मार्गान् व्रणान् आर्द्रान् सरसान् इव सदयं स्पृशन्त्यौ चत्रकुलाङ्गनानाम् ईप्सितम् इष्टम् अपि वीरसूः वीरमातेति शब्दं न अकामयेताम् । वीरप्रसवो दुःखहेतुः इति भावः ॥ ४ ॥

क्लेशावहा भर्त्तुरलक्षणाहं
सीतेति नाम स्व मुदीरयन्ती ।
स्वर्गप्रतिष्ठस्य गुरो र्महिष्या-
वभक्तिभेदेन वधू र्ववन्दे ॥ ५ ॥

उत्तिष्ठ वत्से ननु सानुजोऽसौ
वृत्तेन भर्त्ता शुचिना तवैव ।
कृच्छ्रं महत् तीर्ण इति प्रियार्हां
ता मूचतु स्ते प्रिय मप्यमिथ्या ॥ ६ ॥

अथाभिषेकं रघुवंशकेतोः
प्रारब्ध मानन्दजलै र्जनन्यः ।

क्लेशावहेति । आवहतीति आवहा, भर्त्तुः क्लेशावहा क्लेशकारिणी अत एव अलक्षणा अहं सीतेति स्वं नाम उदीरयन्ती स्वर्गं प्रतिष्ठा आस्पदं यस्य तस्य स्वर्गस्थितस्य गुरोः श्वशुरस्य महिष्यौ श्वश्रौ वधूः स्नुषा । "वधूः स्नुषा वधूर्जाया" इत्यमरः । अभक्तिभेदेन ववन्दे । स्वर्गप्रतिष्ठस्येत्यनेन श्वश्रूवैधव्यदर्शनदुःखं सूचितम् ॥ ५ ॥

उत्तिष्ठेति । ननु वत्से ? उत्तिष्ठ असौ सानुजः भर्त्ता तव एव शुचिना वृत्तेन महत् कृच्छ्रं दुःखं तीर्णः तीर्णवान्, इति प्रियार्हां तां वधूं प्रियमपि अमिथ्या सत्यं ते श्वश्रौ ऊचतुः । उभयं दुर्वचम् इति भावः ॥ ६ ॥

अथेति । अथ जनन्यः आनन्दजलैः आनन्दाश्रुभिः प्रारब्धं प्रक्रान्तं रघुवंशकेतोः रामस्य अभिषेकम् अमात्यवृद्धाः तीर्थेभ्यः

निर्वर्त्तयामासुरमात्यवृद्धा-
स्तीर्थाहृतैः काञ्चनकुम्भतोयैः ॥ ७ ॥

सरित्समुद्रान् सरसीश्च गत्वा
रक्षःकपीन्द्रैरुपपादितानि।
तस्यापतन् मूर्द्ध्नि जलानि जिष्णो-
र्विन्ध्यस्य मेघप्रभवा इवापः ॥ ८ ॥

तपस्विवेशक्रिययापि तावद्
यः प्रेक्षणीयः सुतरां बभूव।
राजेन्द्रनेपथ्यविधानशोभा
तस्योदितासीत् पुनरुक्तदोषा ॥ ९ ॥

गङ्गाप्रमुखेभ्यः आहृतैः आनीतैः काञ्चनकुम्भतोयैः निर्वर्त्तयामासुः निष्पादयामासुः ॥ ७ ॥

सरिदिति। रक्षःकपीन्द्रैः सरितः गङ्गाद्याः समुद्रान् पूर्व्वादीन्, सरसीः मानसादीश्च गत्वा उपपादितानि उपनीतानि जलानि जिष्णोः जयशीलस्य। ग्लाजिस्थश्च गस्नुरिति गस्नुप्रत्ययः। तस्य रामस्य मूर्द्ध्नि, विन्ध्यस्य विन्ध्याद्रेः मूर्द्ध्नि मेघप्रभवाः आपः इव, अपतन् ॥ ८ ॥

तपस्वीति। यः रामः तपस्विवेशक्रियया अपि तपस्विवेशरचनया अपि सुतराम् अत्यन्तं प्रेक्षणीयः तावत् दर्शनीयः बभूव, तस्य राजेन्द्रनेपथ्यविधानेन राजवेशरचनया उदिता या शोभा सा पुनरुक्तं नाम दोषः यस्याः सा पुनरुक्तदोषा द्विगुणा आसीत् ॥ ९ ॥

स मौलरक्षोहरिभिः ससैन्य-
स्तूर्य्यस्वनानन्दितपौरवर्गः।
विवेश सौधोद्गतलाजवर्षा-
मुत्तोरणामन्वयराजधानीम् ॥ १० ॥

सौमित्रिणा सावरजेन मन्द-
माधूतबालव्यजनो रथस्थः।
धृतातपत्रो भरतेन साक्षा-
दुपायसङ्घात इव प्रवृद्धः ॥ ११ ॥

प्रासादकालागुरुधूमराजि
स्तस्याः पुरो वायुवशेन भिन्ना।
वनान्निवृत्तेन रघूत्तमेन
मुक्ता स्वयं वेणिरिवाबभासे ॥ १२ ॥

स इति। सः रामः ससैन्यः तूर्य्यस्वनैः आनन्दितपौरवर्गः सन् मूले भवाः मौलाः मन्त्रिवृद्धाः तैः रक्षोभिः हरिभिश्च सह सौधेभ्यः उद्गतलाजवर्षाम् उत्तोरणाम् अन्वयराजधानीम् अयोध्यां विवेश प्रविष्टवान् ॥ १० ॥

सौमित्रिणेति। सावरजेन शत्रुघ्नयुक्तेन सौमित्रिणा लक्ष्मणेन मन्दम् आधूते बालव्यजने चामरे यस्य सः रथस्थः भरतेन धृतातपत्रः एवं चतुर्व्यूहः रामः प्रवृद्धः साक्षादुपायानां सामादीनां सङ्घातः समष्टिरिव विवेशेति पूर्व्वेण सम्बन्धः ॥ ११ ॥

प्रासादेति। वायुवशेन भिन्ना प्रासादे यः कालागुरुधूमः तस्य राजिः रेखा वनात् निवृत्तेन रघूत्तमेन रामेण स्वयं मुक्ता

श्वश्रूजनानुष्ठितचारुवेशां
कर्णीरथस्थां रघुवीरपत्नीम् ।
प्रासादवातायनदृश्यबन्धैः
साकेतनार्य्योऽञ्जलिभिः प्रणेमुः ॥ १३ ॥
स्फुरत्प्रभामण्डल मानुसूयं
सा बिभ्रती शाश्वत मङ्गरागम् ।
रराज शुद्धेति पुनः स्वपुर्य्यै
सन्दर्शिता वह्निगतेव भर्त्रा ॥ १४ ॥
वेश्मानि रामः परिवर्हवन्ति
विश्राण्य सौहार्दनिधिः सुहृद्भ्यः ।

तस्याः पुरः पुर्य्या वेणिः इव आवभासे । पुरोऽपि पतिव्रता-समाधि रता: । "न प्रोषिते तु संस्कुर्य्यां न वेणीञ्च प्रमोचयेत्" इति हारीतः ॥ १२ ॥

श्वश्रूजनेति । श्वश्रूजनैः अनुष्ठितचारुवेशां कृतसौम्यनेपथ्याम् । "आकल्पवेषौ नेपथ्यम्" इत्यमरः । कर्णीरथः स्त्रीयोग्यः अल्प-रथः । "कर्णीरथः प्रवहणम्" इति यादवः । तत्रस्थां रघुवीर-पत्नीं सीतां साकेतनार्य्यः प्रासादवातायनेषु दृश्यबन्धैः लक्ष्य-पुटैः अञ्जलिभिः प्रणेमुः ॥ १३ ॥

स्फुरदिति । स्फुरत्प्रभामण्डलम् आनुसूयम् अनुसूयया दत्तं शाश्वतं सदातनम् अङ्गरागं बिभ्रती सा सीता भर्त्रा स्वपुर्य्यै शुद्धेति सन्दर्शिता पुन वह्निगतेव रराज ॥ १४ ॥

वेश्मानीति । सुहृदः भावः सौहार्द्दं सौजन्यम् । भुजग-

वाष्पायमाणो बलिमन्निकेत-
मालेख्यशेषस्य पितुर्विवेश ॥ १४ ॥
कृताञ्जलि स्तत्र यदम्ब सत्या-
न्नाभ्रश्यत स्वर्गफलाद् गुरु र्नः
तच्चिन्त्यमानं सुकृतं तवेति
जहार लज्जां भरतस्य मातुः ॥१६ ॥
तथैव सुग्रीवविभीषणादी-
नुपाचरत् कृत्रिमसंविधाभिः ।

सिन्धूनां पूर्व्वपदस्येत्युभयपदवृद्धिः। सौहार्द्दनिधिः रामः सुहृद्भ्यः सुग्रीवादिभ्यः परिवर्त्तवन्ति उपकरणवन्ति वेश्मानि विश्राण्य दत्त्वा आलेख्यशेषस्य चित्रमात्रशेषस्य पितुः बलिमत् पूजायुक्तं निकेतं गृहं वाष्पायमाणः वाष्पम् उद्वमन् विवेश । वाष्पोष्मभ्या मुद्वमने इति क्यङ्प्रत्ययः ॥ १५ ॥

कृताञ्जलिरिति । तत्र निकेतने कृताञ्जलिः सन् रामः, हे अम्ब ? नः गुरुः पिता स्वर्गं फलं यस्य तस्मात् सत्यात् न अभ्रश्यत न भ्रष्टवान् इति यत् अभ्रंशनं तत् चिन्त्यमानं विचार्य्यमाणं तव सुकृतम् इत्येवं प्रकारेण, भरतस्य मातुः कैकेय्याः लज्जां जहार अपानयत् । राज्ञां प्रतिज्ञापरिपालनं स्वर्गसाधनम् इत्यर्थः । भरतग्रहणं तदपेक्षयापि कैकेय्यनुसरणद्योतनार्थम् ॥ १६ ॥

तथेति । सुग्रीवविभीषणादीन् संविधीयन्ते इति संविधाः भोग्यवस्तूनि कृत्रिमसंविधाभिः तथा तेन प्रकारेण एव उपा-

सङ्कल्पमात्रोदितसिद्धय स्ते
क्रान्ता यथा चेतसि विस्मयेन ॥ १७ ॥
सभाजनायोपगतान् स दिव्यान्
मुनीन् पुरस्कृत्य हतस्य शत्रोः ॥
शुश्राव तेभ्यः प्रभवादि वृत्तं
स्वविक्रमे गौरव माद्धानम् ॥ १८ ॥
प्रतिप्रयातेषु तपोधनेषु
सुखा दविज्ञातगतार्द्धमासान् ।
सीतास्वहस्तोपहृताग्य्रपूजा-
नृक्षःकपीन्द्रान् विससर्ज्ज रामः ॥ १९ ॥

परत् यथा सङ्कल्पमात्रेण इच्छामात्रेण उदितसिद्धयः ते सुग्रीवादयः चेतसि विस्मयेन क्रान्ताः आक्रान्ताः ॥ १७ ॥

सभाजनायेति । सः रामः सभाजनाय अभिवन्दनाय उपगतान् दिवि भवान् मुनीन् अगस्त्यादीन् पुरस्कृत्य हतस्य शत्रोः रावणस्य प्रभवादि जन्मादिकं स्वविक्रमे गौरवम् उत्कर्षम् आदधानं वृत्तं तेभ्यः मुनिभ्यः शुश्राव श्रुतवान् । विजितोत्कर्षाज्जेतु रुत्कर्षः इत्यर्थः ॥ १८ ॥

प्रतीति । तपोधनेषु मुनिषु प्रतिप्रयातेषु प्रतिनिवृत्य गतेषु सत्सु सुखात् अविज्ञातः एव गतः अर्द्धमासः येषां तान् अनन्तरं सीतायाः स्वहस्तेन उपहृता दत्ता अग्य्रपूजा उत्तमसम्भावना येभ्यः तान्, एतेन सौहार्द्दातिशय उक्तः । ऋक्षः-कपीन्द्रान् रामः विससर्ज्ज विसृष्टवान् ॥ १९ ॥

तच्चात्मचिन्तासुलभं विमानं
हृतं सुरारेः सह जीवितेन ।
कैलासनाथोद्वहनाय भूयः
पुष्पं दिवः पुष्पकमन्वमंस्त ॥ २० ॥
पितु र्नियोगा द्वनवास मेवं
निस्तीर्य्य रामः प्रतिपन्नराज्यः ।
धर्म्मार्थकामेषु समां प्रपेदे
यथा तथैवावरजेषु वृत्तिम् ॥ २१ ॥
सर्व्वासु मातृष्वपि वत्सलत्वात्
स निर्व्विशेषप्रतिपत्ति रासीत् ।

तच्चेति । तच्च आत्मचिन्तासुलभं स्वेच्छामात्रलभ्यं सुरारेः रावणस्य जीवितेन सह हृतं दिवः पुष्पं पुष्पवत् आभरणभूतं पुष्पकं विमानं भूयः पुनरपि कैलासनाथस्य कुवेरस्य उद्वहनाय अन्वमंस्त अनुज्ञातवान् । मन्यतेर्लुङ् । भूयोग्रहणेन पूर्व्वमप्येतत् कौवेरमेवेति सूच्यते ॥ २० ॥

पितुरिति । रामः एवं पितुः नियोगात् शासनात् वनवासं निस्तीर्य्य अनन्तरं प्रतिपन्नराज्यः सन् धर्म्मार्थकामेषु यथा तथैव अवरजेषु अनुजेषु समां वृत्तिं प्रपेदे अवैषम्येण व्यवहृतवान् इत्यर्थः ॥ २१ ॥

सर्व्वास्विति । सः रामः वत्सलत्वात् स्निग्धत्वात् न तु लोकप्रतीत्यर्थम् । "स्निग्धस्तु वत्सलः" इत्यमरः । सर्व्वासु मातृषु अपि निर्व्विशेषप्रतिपत्तिः तुल्यसत्कारः आसीत् । कथमिव ? चमूनां

षड़ाननापीतपयोधरासु
नेता चमूनामिव कृत्तिकासु ॥ २२ ॥

तेनार्थवान् लोभपराङ्मुखेन
तेन घ्नता विघ्नभयं क्रियावान्।
तेनास लोकः पितृमान् विनेत्रा
तेनैव शोकापनुदेन पुत्री ॥ २३ ॥

स पौरकार्य्याणि समीक्ष्य काले
रेमे विदेहाधिपते र्दुहित्रा।
उपस्थित श्चारु वपु स्तदीयं
कृत्वोपभोगोत्सुकयेव लक्ष्म्या ॥ २४ ॥

नेता षण्मुखः षड्भिः आननैः आपीताः पयोधराः स्तनाः यासां तासु कृत्तिकासु इव ॥ २२ ॥

तेनेति। लोकः लोभपराङ्मुखेन वदान्येन तेन रामेण अर्थवान् धनिकः आस बभूव। तिङन्तप्रतिरूपकमव्ययमेतत्। विघ्नेभ्यः भयं घ्नता नुदता तेन क्रियावान् अनुष्ठानवान्। विनेत्रा नियामकेन तेन पितृमान् पितृवन्नियच्छति इत्यर्थः। शोकमपनुदतीति शोकापनुदः सुखस्याहर्त्ता तेन। तुन्दशोकयोः परिमृजापनुदोरिति कप्रत्ययः। तेन पुत्री पुत्रवान् आस पुत्र-वदानन्दयति इत्यर्थः ॥ २३ ॥

स इति। सः रामः काले अवसरे पौराणां कार्य्याणि प्रयोजनानि समीक्ष्य विदेहाधिपतेः दुहित्रा सीतया, उप-भोगोत्सुकया अत एव तदीयं सीतासम्बन्धि चारु वपुः कृत्वा

तयो र्यथाप्रार्थित मिन्द्रियार्था-
नासेदुषोः सद्मसु चित्रवत्सु ।
प्राप्तानि दुःखान्यपि दण्डकेषु
सञ्चिन्त्यमानानि सुखान्यभूवन् ॥ २५ ॥

अथाधिकस्निग्धविलोचनेन
मुखेन सीता शरपाण्डुरेण ।
आनन्दयित्री परिणेतु रासी-
दनक्षरव्यञ्जितदौहृदेन ॥ २६ ॥

ता मङ्क मारोप्य कृशाङ्गयष्टिं
वर्णान्तराक्रान्तपयोधराग्राम् ।

स्थितया लक्ष्म्या इव, उपस्थितः सङ्गतः सन् रेमे । "उपस्थानं सङ्गतिः" इति यादवः ॥ २४ ॥

तयोरिति । चित्रवत्सु वनवासवृत्तान्तलेख्यवत्सु सद्मसु यथा प्रार्थितं यथेष्टम् इन्द्रियार्थान् इन्द्रियविषयान् शब्दादीन् आसेदुषोः प्राप्तवतोः तयोः सीतारामयोः दण्डकेषु दण्डकारण्येषु प्राप्तानि दुःखानि अपि विरहविलापान्वेषणादीनि सञ्चिन्त्यमानानि स्मर्य्यमाणानि सुखानि अभूवन् । स्मारकन्तु चित्रदर्शनमिति द्रष्टव्यम् ॥ २५ ॥

अथेति । अथ सीता अधिकस्निग्धविलोचनेन अत्यन्तमसृण लोचनेन शरवत् तृणविशेषवत् पाण्डुरेण अत एव अनक्षरम् अवाग्व्यापारं यथा भवति तथा व्यञ्जितं दौहृदं गर्भः येन तेन मुखेन परिणेतुः पत्युः आनन्दयित्री आसीत् ॥ २६ ॥

तामिति । प्रतीतः गर्भज्ञानवान् रमयति इति रमणः

विलज्जमानां रहसि प्रतीतः
पप्रच्छ रामां रमणोऽभिलाषम् ॥ २७ ॥
सा दृष्टनीवारबलीनि हिंस्रैः
सम्बद्धवैखानसकन्यकानि ।
इयेष भूयः कुशवन्ति गन्तुं
भागीरथीतीरतपोवनानि ॥ २८ ॥
तस्यै प्रतिश्रुत्य रघुप्रवीर-
स्तदीप्सितं पार्श्वचरानुयातः ।
आलोकयिष्यन् मुदिता मयोध्यां
प्रासाद मभ्रंलिह मारुरोह ॥ २९ ॥

प्रियां सर्गाङ्गयष्टिं वर्णान्तरेण नीलिम्ना आक्रान्तपयोधराग्रां विलज्जमानां तां रामां रहसि अङ्कम् आरोप्य अभिलाषं मनोरथं पप्रच्छ। एतच्च, "दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात्" इति शास्त्रात् न तु लौल्यादित्यनुसन्धेयम् ॥ २७ ॥

सेति। सा सीता हिंस्रैः दृष्टाः नीवाराः एव बलयः येषु तानि, तिर्य्यग्भिक्षुकादिदानं बलिः। सम्बद्धाः कृतसम्बन्धाः कृतसख्याः वैखानसानां कन्यकाः येषु तानि कुशवन्ति भागीरथीतीरतपोवनानि भूयः पुनरपि गन्तुम् इयेष अभिललाष ॥२८॥

तस्मै इति। रघुप्रवीरः रामः तस्यै सीतायै तत् पूर्व्वोक्तम् ईप्सितं मनोरथं प्रतिश्रुत्य पार्श्वचरैः तत्कालोचितैः अनुयातः सन् मुदितां ताम् अयोध्याम् आलोकयिष्यन् अभ्रंलिहोति

ऋद्धापणं राजपथं स पश्यन्
विगाह्यमानां सरयूञ्च नौभिः ।
विलासिभि श्चाध्युषितानि पौरैः
पुरोपकण्ठोपवनानि रेमे ॥ ३० ॥

स किंवदन्तीं वदतां पुरोगः
स्ववृत्त मुद्दिश्य विशुद्धवृत्तः ।
सर्पाधिराजोरुभुजो ऽपसर्पं
पप्रच्छ भद्रं विजितारिभद्रः ॥ ३१ ॥

निर्बन्धपृष्टः स जगाद सर्व्वं
स्तुवन्ति पौराश्चरितं तदीयम् ।

अभ्रंलिहम् अभ्रङ्कषं प्रासादम् आरुरोह । वहाभ्रेलिह इति खश्प्रत्ययः, अरुर्द्विषदिति मुमागमः ॥ २९ ॥

ऋद्धापणमिति । सः रामः ऋद्धाः समृद्धाः आपणाः पण्यभूमयः यस्मिन् तं राजपथं नौभिः समुद्रवाहिनौभिः विगाह्यमानां सरयूं च पश्यन् रेमे । विलासिन्यश्च विलासिनश्च विलासिनः । "पुमान् स्त्रिया" इत्येकशेषः ॥ ३० ॥

स इति । वदतां वाग्मिनां पुरोगः श्रेष्ठः विशुद्धवृत्तः सर्पाधिराजः शेषः तद्वत् उरू भुजौ यस्य सः विजितारिभद्रः विजितारिश्रेष्ठः सः रामः स्ववृत्तम् उद्दिश्य भद्रं भद्रनामकम् अपसर्पं चरं किंवदन्तीं जनवादं पप्रच्छ । "अपसर्पश्चरः स्पशः" इति "किंवदन्ती जनश्रुति," इति च अमरः ॥ ३१ ॥

निर्बन्धेति । निर्बन्धेन आग्रहेण पृष्टः सः अपसर्पः जगाद ।

अन्यत्र रक्षोभवनोषितायाः
परिग्रहा न्मानवदेव देव्याः ॥ ३२ ॥
कलत्रनिन्दागुरुणा किलैव-
मभ्याहतं कीर्त्तिविपर्य्ययेण ।
अयोघनेनाय इवाभितप्तं
वैदेहिबन्धो र्हृदयं विदद्रे ॥ ३३ ॥
कि मात्मनिर्वादकथा मुपेक्षे
जाया मदोषा मुत सन्त्यजामि ।
इत्येकपक्षाश्रयविक्लवत्वा-
दासीत् स दोलाचलचित्तवृत्तिः ॥ ३४ ॥

किमिति ? हे मानवदेव ! रक्षोभवने उषितायाः देव्याः सीतायाः परिग्रहात् स्वीकारात् अन्यत्र इतरांशे तं वर्जयित्वा इत्यर्थः, त्वदीयं सर्व्वं रचितं पौराः स्तुवन्ति ॥ ३२ ॥

कलत्रेति । एवं किल कलत्रनिन्दया, गुरुणा दुर्वहेण कीर्त्तिविपर्य्ययेण अपकीर्त्त्या अभ्याहतं वैदेहिबन्धोः वैदेही-वल्लभस्य । ङ्यापोः संज्ञाच्छन्दसोर्बहुलमिति ह्रस्वः, कालिदास इतिवत् । हृदयम् अयोघनेन अभितप्तं सन्तप्तम् अयः इव, विदद्रे विदीर्णम् । कर्त्तरि लिट् ॥ ३३ ॥

किमिति । आत्मनः निर्वादः अपवादः एव कथा तां किम् उपेक्षे ? उत अदोषां साध्वीं जायां सन्त्यजामि ? उभयत्रापि प्रश्ने लट् । इत्येकपक्षाश्रये अन्यतरपक्षपरिग्रहे विक्लवत्वात् अपरिच्छेदृत्वात् सः रामः दोला इव चला चित्तवृत्तिः यस्य सः आसीत् ॥ ३४ ॥

निश्चित्य चानन्यनिवृत्तिवाच्यं
त्यागेन पत्न्याः परिमार्ष्टु मैच्छत् ।
अपि स्वदेहात् किमुतेन्द्रियार्था्द्
यशोधनानां हि यशो गरीयः ॥ ३५ ॥
स सन्निपात्यावरजान् हतौजा-
स्तद्विक्रियादर्शनलुप्तहर्षान् ।
कौलीन मात्माश्रय माचचक्षे
तेभ्यः पुनश्चेद मुवाच वाक्यम् ॥ ३६ ॥
राजर्षिवंशस्य रविप्रसूते-
रुपस्थितः पश्यत कीदृशोऽयम् ।

निश्चित्येति । किं च, वाच्यम् अपवादं नास्ति अन्येन त्यागातिरिक्तोपायेन निवृत्तिः यस्य तत् अनन्यनिवृत्ति निश्चित्य पत्नीत्यागेन परिमार्ष्टुं परिहर्त्तुं ऐच्छत् । तथाहि, यशोधनानां पुंसां स्वदेहादपि यशः गरीयः गुरुतरम्, इन्द्रियार्थात् स्रक्चन्दनवनितादेः इन्द्रियविषयात् गरीयः इति किमुत वक्तव्यम् ? पञ्चमी विभक्ते इत्युभयत्रापि पञ्चमी । सीता चेन्द्रियार्थ एव ॥ ३५ ॥

स इति । हतौजाः निस्तेजस्कः सः रामः तस्य रामस्य विक्रियादर्शनेन लुप्तहर्षान् अवरजान् सन्निपात्य संगमय्य आत्माश्रयं स्वविषयकं कौलीनं निन्दां तेभ्यः आचचक्षे, पुनः इदं वाक्यम् उवाच च ॥ ३६ ॥

राजर्षीति । रवेः प्रसूतिः जन्म यस्य तस्य राजर्षिवंशस्य सदाचारशुचेः सद्वृत्तात् शुद्धात् मत्तः मत्सकाशात्, दर्पणस्य

मत्तः सदाचारशुचेः कलङ्कः
पयोद-वातादिव दर्पणस्य ॥ ३७ ॥
पौरेषु सोऽहं बहुलीभवन्त-
मपां तरङ्गेष्विव तैलविन्दुम् ।
सोढुं न तत्पूर्व्व मवर्ण मीशे
आलानिकं स्थाणुमिव द्विपेन्द्रः ॥ ३८ ॥
तस्यापनोदाय फलप्रवृत्ता-
वुपस्थितायामपि निर्व्यपेक्षः ।

पयोदवातात् इव अम्भःकणात् इत्यर्थः, कीदृशः अयं कलङ्कः उपस्थितः प्राप्तः ? पश्यत ॥ ३७ ॥

पौरेष्विति । सः अहम् अपां तरङ्गेषु तैलविन्दुम् इव, पौरेषु बहुलीभवन्तं प्रसरन्तं सः एव पूर्व्वः यस्य सः तं तत्-पूर्व्वम् अवर्णम् अपवादम् । "अवर्णाक्षेपनिर्व्वादपरीवादापवाद-वत्" इत्यमरः । द्विपेन्द्रः आलानमेव आलानिकम् । विनया-दित्वात् स्वार्थे ठक् । अथवा आलानं बन्धनं प्रयोजनमस्य इति आलानिकम् । प्रयोजनमिति ठक् । स्थाणुं स्तम्भम् इव, चूतवृक्ष इतिवत् सामान्यविशेषभावादपौनरुक्त्यं द्रष्टव्यम् । सोढुं न ईशे न शक्नोमि ॥ ३८ ॥

तस्येति । तस्य अवर्णस्य अपनोदाय फलप्रवृत्तौ अपत्यो-त्पत्तौ उपस्थितायां सत्याम् अपि निर्व्यपेक्षः निःस्पृहः सन् वैदेहसुताम्, पुरस्तात् पूर्व्वं पितुः आज्ञया समुद्रनेमिं समुद्रः नेमिरिव नेमिर्यस्याः सा भूमिः ताम् इव, त्यक्ष्यामि ॥ ३९ ॥

त्यच्यामि वैदेहसुतां पुरस्तात्
समुद्रनेमिं पितुराज्ञयेव ॥ ३९ ॥
अवैमि चैना मनघेति किन्तु
लोकापवादो बलवान् मतो मे ।
छाया हि भूमेः शशिनो मलत्वे-
नारोपिता शुद्धिमतः प्रजाभिः ॥ ४० ॥
रक्षोबधान्तो न च मे प्रयासो
व्यर्थः स वैरप्रतिमोचनाय ।
अमर्षणः शोणितकाङ्क्षया किं
पदा स्पृशन्तं दशति द्विजिह्वः ॥ ४१ ॥
तदेष सर्गः करुणार्द्रचित्तै-
र्न मे भवद्भिः प्रतिषेधनीयः ।

ननु सर्व्वथा साध्वी न त्याज्येत्याह, अवैमीति। एनां सीताम् अनघा साध्वी इति च अवैमि, किन्तु मे मम लोकापवादः बलवान् मतः । कुतः ? हि यस्मात् प्रजाभिः भूमेः छाया प्रतिबिम्बं शुद्धिमतः निर्मलस्य शशिनः मलत्वेन कलङ्कत्वेन आरोपिता, अतो लोकापवाद एव बलवान् इत्यर्थः ॥ ४० ॥

रक्ष इति । किं च, मे रक्षोबधान्तः प्रयासः व्यर्थः न, किन्तु सः वैरप्रतिमोचनाय वैरशोधनाय । तथाहि, अमर्षणः असहनः द्विजिह्वः सर्पः पदा पादेन स्पृशन्तं पुरुषं शोणित-काङ्क्षया दशति किम् ? किन्तु वैरनिर्यातनाय इत्यर्थः ॥ ४१ ॥

तदिति। तत् तस्मात् एषः मे सर्गः निश्चयः । "सर्गः स्वभाव-

यद्यर्थिता निर्हृतवाच्यशल्यान्
प्राणान् मया धारयितुं चिरं वः ॥ ४२ ॥
इत्युक्तवन्तं जनकात्मजायां
नितान्तरूक्षाभिनिवेशमीशम् ॥
न कश्चन भ्रातृषु तेषु शक्तो
निषेद्धुमासीदनुमोदितुं वा ॥ ४३ ॥
स लक्ष्मणं लक्ष्मणपूर्व्वजन्मा
विलोक्य लोकत्रयगीतकीर्त्तिः ।
सौम्येति चाभाष्य यथार्थभाषी
स्थितं निदेशे पृथगादिदेश ॥ ४४ ॥

निर्मोचननिश्चयवाध्यायरूष्टिषु" इत्यमरः। करुणार्द्रचित्तैः भवद्भिः न प्रतिषेधनीयः निर्हृतं वाच्यमेव शल्यं येषां तान् प्राणान् मया चिरं धारयितुं धारणं कारयितुं वः युष्माकम् अर्थिता अर्थित्वम् इच्छा यदि अस्ति इति शेषः ॥ ४२ ॥

इतीति। इत्युक्तवन्तं जनकात्मजायां विषये नितान्तरूक्षाभिनिवेशम् अतिक्रूराग्रहम् ईशं स्वामिनं तेषु भ्रातृषु मध्ये कश्चन अपि निषेद्धुं निवारयितुम् अनुमोदितुं प्रवर्त्तयितुं वा शक्तः न आसीत् पक्षद्वयस्यापि प्रबलत्वात् इत्यर्थः ॥ ४३ ॥

स इति। लोकत्रयगीतकीर्त्तिः यथार्थभाषी लक्ष्मणपूर्व्वजन्मा लक्ष्मणाग्रजः सः रामः निदेशे स्थितम् आज्ञाकारिणं लक्ष्मणं विलोक्य हे सौम्य! सुभग! इति आभाष्य च पृथक् भरतशत्रुघ्नाभ्यां विनाकृत्य आदिदेश आज्ञापयामास ॥ ४४ ॥

प्रजावती दोहदशंसिनी ते
तपोवनेषु स्पृहयालुरेव ।
स त्वं रथी तद्व्यपदेशनेयां
प्रापय्य वाल्मीकिपदं त्यजैनाम् ॥ ४५ ॥

स शुश्रुवान् मातरि भार्गवेण
पितुर्नियोगात् प्रहृतं द्विषद्वत् ।
प्रत्यग्रहीदग्रजशासनं त-
दाज्ञा गुरूणां ह्यविचारणीया ॥ ४६ ॥

अथानुकूलश्रवणप्रतीता-
मत्रस्नुभिर्युक्तधुरं तुरङ्गैः ।

प्रजावतीति । दोहदः गर्भिणीमनोरथः तत् शंसिनी ते प्रजावती भ्रातृजाया । "प्रजावती भ्रातृजाया" इत्यमरः । तपोवनेषु स्पृहयालुः एव सस्पृहा एव । स्पृहिगृहीत्यादिना आलुच्प्रत्ययः । सः त्वं रथी सन् तत् व्यपदेशेन दोहदमिषेण नेयां नेतव्याम् एनां सीतां वाल्मीकेः पदं स्थानं प्रापय्य गमयित्वा । विभाषाप इत्ययादेशः । त्यज ॥ ४५ ॥

स इति । पितुः नियोगात् शासनात् भार्गवेण जामदग्न्येन कर्त्रा । न लोकेत्यादिना षष्ठीप्रतिषेधः । मातरि द्विषतीव द्विषद्वत् । तत्र तस्येवेति वतिप्रत्ययः । प्रहृतं प्रहारं शुश्रुवान् श्रुतवान् । भाषायां सदवसश्रुव इति क्वसुप्रत्ययः । सः लक्ष्मणः तत् अग्रजशासनं प्रत्यग्रहीत्, हि यस्मात् गुरूणाम् आज्ञा अविचारणीया ॥ ४६ ॥

अथेति । अथ असौ लक्ष्मणः अनुकूलश्रवणेन प्रतीताम्

रथं सुमन्त्रप्रतिपन्नरश्मि-
मारोप्य वैदेहसुतां प्रतस्थे ॥ ४७ ॥
सा नीयमाना रुचिरान् प्रदेशान्
प्रियङ्करो मे प्रिय इत्यनन्दत्।
नाबुद्ध कल्पद्रुमतां विहाय
जातं त मात्मन्यसिपत्रवृक्षम् ॥ ४८ ॥
जुगूह तस्याः पथि लक्ष्मणो यत्
सव्येतरेण स्फुरता तदक्ष्णा।

इष्टाकर्णनेन तुष्टां वैदेहसुताम् अत्रस्नुभिः अभीरुभिः गर्भिणी-वहनयोग्यैः। त्रसिगृधिधृषिक्षिपेः क्नुरिति क्नुप्रत्ययः। तुरङ्गैः युक्तधुरं सुमन्त्रेण प्रतिपन्नरश्मिं गृहीतप्रग्रहं रथम् आरोप्य प्रतस्थे ॥ ४७ ॥

सेति सा सीता रुचिरान् प्रदेशान् नीयमाना प्राप्यमाणा सती मे मम प्रियः प्रियं करोतीति प्रियङ्करः प्रियकारी इति अनन्दत्। क्षेमप्रियेति चकारात् खच्प्रत्ययः। तं प्रियम् आत्मनि विषये कल्पद्रुमतां विहाय असिपत्रवृक्षं जातं न अबुद्ध न अज्ञासीत्। बुध्यतेर्लुङ्। असिपत्रः खड्गाकारदलः कोऽप्यपूर्व्वो वृक्षविशेषः। "असिपत्रो भवेत् कोषाकारे च नरकान्तरे" इति विश्वः। आसन्नघातुकः इति भावः ॥ ४८॥

जुगूहेति। पथि लक्ष्मणः यत् दुःखं तस्याः सीतायाः जुगूह प्रतिसंहृतवान् तत् गुरु भावि भविष्यत् दुःखम् अत्यन्त-लुप्तं प्रियदर्शनं यस्य तेन स्फुरता सव्येतरेण दक्षिणेन

आख्यात मस्यै गुरु भावि दुःख-
मत्यन्तलुप्तप्रियदर्शनेन ॥ ४८ ॥

सा दुर्निमित्तोपगताद् विषादात्
सद्यः परिम्लानमुखारविन्दा।
राज्ञः शिवं सावरजस्य भूया-
दित्याशशंसे करणै रवाह्यैः ॥ ५० ॥

गुरो र्नियोगाद् वनितां वनान्ते
साध्वीं सुमित्रातनयो विहास्यन्।
अवार्य्यतेवोत्थितवीचिहस्तै-
र्जह्नो र्दुहित्रा स्थितया पुरस्तात् ॥ ५१ ॥

अत्ता अस्यै सीतायै आख्यातम्। स्त्रीणां दक्षिणाक्षिस्फुरणं दुर्निमित्त माहुः ॥ ४८ ॥

सेति। सा सीता दुर्निमित्तेन दक्षिणाक्षिस्फुरणरूपेण उपगतात् प्राप्तात् विषादात् दुःखात् सद्यः परिम्लानमुखारविन्दा सती सावरजस्य सानुजस्य राज्ञः रामस्य शिवं भूयात् इति अवाह्यैः करणैः अन्तःकरणैः आशशंसे। शंसतेरपेक्षाया-मात्मनेपदमिष्यते। करणैः इति बहुवचनं क्रियावृत्त्यभिप्रायं, पुनः पुनराशशंसे इत्यर्थः ॥ ५० ॥

गुरोरिति। गुरोः ज्येष्ठस्य नियोगात् साध्वीं वनिताम् अत्याज्याम् इत्यर्थः, वनान्ते विहास्यन् त्यक्ष्यन् सुमित्रातनयः लक्ष्मणः पुरस्तात् अग्रे स्थितया जह्नोः दुहित्रा जाह्नव्या उत्थितैः वीचिहस्तैः अवार्य्यत इव। अकार्य्यं मा कुर्व्वित्य-वार्य्यत इव इत्युत्प्रेक्षा ॥ ५१ ॥

रथात् स यन्त्रा निगृहीतवाहात्
तां भ्रातृजायां पुलिनेऽवतार्य्य ।
गङ्गां निषादाहृतनौविशेष-
स्ततार सन्धा मिव सत्यसन्धः ॥ ५२ ॥
अथ व्यवस्थापितवाक् कथञ्चित्
सौमित्रि रन्तर्गतबाष्पकण्ठः ।
औत्पातिकं मेघ इवाश्मवर्षं
महीपतेः शासन मुज्जगार ॥ ५३ ।
ततोऽभिषङ्गानिलविप्रविद्धा
प्रभ्रश्यमानाभरणप्रसूना ॥

रथादिति । सत्यसन्धः सत्यप्रतिज्ञः सः लक्ष्मणः यन्त्रा सारथिना निगृहीतवाहात् रुद्धाश्वात् रथात् भ्रातृजायां पुलिने अवतार्य्य आरोप्य निषादेन किरातेन आहृतनौविशेषः आनीतनौकः सन् गङ्गां भागीरथीं, सन्धां प्रतिज्ञाम् इव, ततार । "सन्धा प्रतिज्ञा मर्य्यादा" इत्यमरः ॥ ५२ ॥

अथेति । अथ कथञ्चित् व्यवस्थापिता प्रकृतिम् आपादिता वाक् येन सः अन्तर्गतबाष्पः कण्ठः यस्य सः कण्ठस्तम्भिताश्रुः इत्यर्थः सौमित्रिः महीपतेः शासनम्, मेघः उत्पाते भवम् औत्पातिकम् अश्मवर्षं शिलावर्षम् इव, उज्जगार उद्गीर्णवान् । दारुणत्वेनावाच्यत्वादुज्जगारेत्युक्तम् ॥ ५३ ॥

तत इति । ततः, अभिषङ्गः पराभवः । "अभिषङ्गः पराभवः" इत्यमरः । सः एव अनिलः तेन विप्रविद्धा अभिहता प्रभ्रश्य-

स्वमूर्त्तिलाभप्रकृतिं धरित्रीं
लतेव सीता सहसा जगाम ॥ ५४ ॥

इक्ष्वाकुवंशप्रभवः कथं त्वां
त्यजेदकस्मात् पति रार्य्यवृत्तः ।
इति क्षितिः संशयितेव तस्यै
ददौ प्रवेशं जननी न तावत् ॥ ५५ ॥

सा लुप्तसंज्ञा न विवेद दुःखं
प्रत्यागतासुः समतप्यतान्तः ।
तस्याः सुमित्रात्मजयत्नलब्धो
मोहा दभूत् कष्टतरः प्रबोधः ॥ ५६ ॥

म्लानानि पतन्ति आभरणानि एव प्रसूनानि यस्याः सा सीता, लता इव, सहसा स्वमूर्त्तिलाभस्य स्वशरीरलाभस्य स्वोत्पत्तेः प्रकृतिं कारणं धरित्रीं जगाम भूमौ पपात इत्यर्थः ॥ ५४ ॥

इक्ष्वाक्विति । इक्ष्वाकुवंशप्रभवः महाकुलप्रसूतिः इत्यर्थः आर्य्यवृत्तः साधुचरितः पतिः भर्त्ता त्वाम् अकस्मात् अकारणात् कथं त्यजेत् ? असम्भावितम् इत्यर्थः, इति संशयिता इव सन्दिहाना इव तावत् त्यागहेतुज्ञानावधेः प्राक् इत्यर्थः जननी क्षितिः तस्यै सीतायै प्रवेशम् आत्मनि इति शेषः न ददौ ॥ ५५ ॥

सेति । लुप्तसंज्ञा नष्टचेतना मूर्च्छिता सा दुःखं न विवेद, प्रत्यागतासुः लब्धसंज्ञा सती अन्तः समतप्यत दुःखेनादह्यत इत्यर्थः । तपेः कर्म्मणि लङ् । कर्म्मकर्त्तरीति केचित् तत्र तप-

न चावदद्भर्त्तुरवर्णं मार्य्या
निराकरिष्णो र्वृजिना दृतेऽपि ।
आत्मानमेव स्थिरदुःखभाजं
पुनः पुन र्दुष्कृतिनं निनिन्द ॥
आश्वास्य रामावरजः सतीं ता-
माख्यातवाल्मीकिनिकेतमार्गः ।
निघ्नस्य मे भर्त्तृनिदेशरौक्ष्यं
देवि क्षमस्वेति बभूव नम्रः ॥ ५८ ॥

स्तपःकर्म्मकस्यैवेति यङ्नियमात् । तस्याः सीतायाः सुमित्रात्मजयत्नलब्धः प्रबोधः मोहात् कष्टतरः दुःखदः अभूत्, दुःखवेदनासम्भवात् इति भावः ॥ ५६ ॥

न चेति । आर्य्या साध्वी सा सीता वृजिनात् ऋते एनसा विनापि । "कलुषं वृजिनैनोऽघम्" इत्यमरः । अन्यारादितरर्त्ते इति पञ्चमी । निराकरिष्णोः निरासकस्य । अलं कृञिति इष्णुच्प्रत्ययः । भर्त्तुः अवर्णम् अपवादं न च अवदत् नैव अवादीत्, किन्तु स्थिरदुःखभाजम् अत एव दुष्कृतिनम् आत्मानं पुनः पुनः निनिन्द ॥ ५७ ॥

आश्वास्येति । रामावरजः लक्ष्मणः सतीं साध्वीं ताम् आश्वास्य आख्यातः उपदिष्टः वाल्मीकेः निकेतस्य आश्रमस्य मार्गः येन सः तथोक्तः सन् निघ्नस्य पराधीनस्य । "अधीनो निघ्न आयत्तः" इत्यमरः । मे भर्त्तुः निदेशेन स्वाम्यनुज्ञया हेतुना यत् रौक्ष्यं पारुष्यं तत् हे देवि ! क्षमस्व इति नम्रः प्रणतः बभूव ॥ ५८ ॥

सीता तमुत्थाप्य जगाद वाक्यं
प्रीतास्मि ते सौम्य चिराय जीव।
विड़ौजसा विष्णु रिवाग्रजेन
भ्राता यदित्थं परवानसि त्वम्॥ ५९॥

श्वश्रूजनं सर्व्वं मनुक्रमेण
विज्ञापय प्रापितमत्प्रणामः।
प्रजानिषेकं मयि वर्त्तमानं
सूनो रनुध्यायत चेतसेति॥ ६०॥

वाच्य स्त्वया मद्वचनात् स राजा
वह्नौ विशुद्धा मपि यत् समक्षम्।

सीतेति। सीता तं लक्ष्मणम् उत्थाप्य वाक्यं जगाद। किमिति? हे सौम्य! साधो! ते प्रीता अस्मि, चिराय चिरं जीव, यत् यस्मात्, विड़ौजसा इन्द्रेण विष्णुः इव, अग्रजेन ज्येष्ठेन भ्राता त्वम् इत्थं परवान् परतन्त्रः असि॥ ५९॥

श्वश्रूजनमिति। सर्व्वं श्वश्रूजनम् अनुक्रमेण प्रापितमत्प्रणामः सन् मत्प्रणाममुक्त्वा इत्यर्थः विज्ञापय। किमिति? निषिच्यते इति निषेकः, मयि वर्त्तमानं सूनोः त्वत्पुत्रस्य प्रजानिषेकं गर्भं चेतसा अनुध्यायत शिवमस्त्विति चिन्तयत इति॥ ६०॥

वाच्य इति। सः राजा त्वया मद्वचनात् मद्वचनमिति कृत्वा ल्यब्लोपे पञ्चमी। वाच्यः वक्तव्यः। किमित्यत आह, वह्नावित्यादिभिः सप्तभिः श्लोकैः। अक्ष्णोः समीपे समक्षम्। विभक्त्यर्थेऽव्ययीभावः सामीप्यार्थे वा, अव्ययीभावे शरदिति समासान्तः

मां लोकवादश्रवणादहासीः
श्रुतस्य किं तत् सदृशं कुलस्य ॥ ६१ ॥
कल्याणबुद्धेरथवा तवायं
न कामचारो मयि शङ्कनीयः ।
ममैव जन्मान्तरपातकानां
विपाकविस्फूर्ज्जथुरप्रसह्यः ॥ ६२ ॥
उपस्थितां पूर्व्वमपास्य लक्ष्मीं
वनं मया सार्द्धमसि प्रपन्नः ।

अग्प्रत्ययः । समक्षमग्नौ वह्नौ विशुद्धामपि मां लोकवादस्य मिथ्यापवादस्य श्रवणाद्धेतोः अहासीः अत्याक्षीः इति यत् तत् श्रुतस्य प्रख्यातस्य कुलस्य सदृशं किम् ? किन्त्वसदृशमित्यर्थः । यद्वा श्रुतस्य श्रवणस्य कुलस्य चेति योजना । कामचार्य्यसि इति भावः ॥ ६१ ॥

कल्याणेति । अथवा कल्याणबुद्धेः सुधियः तव कर्त्तुः मयि विषये अयं त्यागः न कामचारः इच्छया करणं न शङ्कनीयः, कामाचारशङ्कापि न क्रियते इत्यर्थः । किन्तु मम एव जन्मान्तर-पातकानाम् अप्रसह्यः विपच्यते इति विपाकः फलितः एव विस्फुर्ज्जथुः अशनिनिर्घोषः । "स्फूर्ज्जथुर्वज्रनिर्घोषे इत्यमरः ॥ ६२ ॥

उपस्थितामिति । पूर्व्वम् उपस्थितां प्राप्तां लक्ष्मीम् अपास्य मया सार्द्धं वनं प्रपन्नः असि प्राप्तः असि । तत् तस्मात् तया लक्ष्म्या अतिरोषात् त्वद्भवने आस्पदं प्रतिष्ठाम् । आस्पदं

तदास्पदं प्राप्य तयातिरोषात्
सोढ़ास्मि न त्वद्भवने वसन्ती ॥ ६३ ॥
निशाचरोपप्लुतभर्त्तृकाणां
तपस्विनीनां भवतः प्रसादात्।
भूत्वा शरण्या शरणार्थमन्यं
कथं प्रपत्स्ये त्वयि दीप्यमाने ॥ ६४ ॥
किंवा तवात्यन्तवियोगमोघे
कुर्य्यामुपेक्षां हतजीवितेऽस्मिन्।
स्याद्रक्षणीयं यदि मे न तेज-
स्त्वदीयमन्तर्गतमन्तरायः ॥ ६५ ॥

प्रतिष्ठायामिति निपातः। प्राप्य वसन्ती अहं सोढ़ा न अस्मि ॥ ६३ ॥

निशाचरेति। निशाचरैः उपप्लुताः पीड़िताः भर्त्तारः यासां ताः निशाचरोपप्लुतभर्त्तृकाः। नद्यृतश्चेति कप्प्रत्ययः। तासां तपस्विनीनां भवतः प्रसादात् अनुग्रहात् शरण्या शरणसमर्था भूत्वा अद्य त्वयि दीप्यमाने प्रकाशमाने सत्येव शरणार्थम् अन्यं तपस्विनं कथं प्रपत्स्ये? प्राप्स्यामि ॥ ६४ ॥

किंवा इति। किंवा अथवा तव सम्बन्धिना अत्यन्तेन पुनः प्राप्तिरहितेन वियोगेन मोघे निष्फले अस्मिन् हतजीविते तुच्छजीविते उपेक्षां कुर्य्यां कुर्य्यामेव, रक्षणीयं रक्षणार्हम् अन्तर्गतं कुक्षिस्थं त्वदीयं शुक्रं तेजः गर्भरूपम्। "शुक्रं तेजो रेतसी च वीजवीर्य्येन्द्रियाणि च" इत्यमरः। मे मम अन्तरायः विघ्नः न स्यात् यदि ॥ ६५ ॥

साहं तपः सूर्य्यनिविष्टदृष्टि-
रूर्द्ध्वं प्रसूते श्चरितुं यतिष्ये।
भूयो यथा मे जननान्तरेऽपि
त्वमेव भर्त्ता न च विप्रयोगः॥ ६६॥

नृपस्य वर्णाश्रमपालनं यत्
स एव धर्म्मो मनुना प्रणीतः।
निर्वासिता प्येव मत स्त्वयाहं
तपस्विसामान्य मवेक्षणीया॥ ६७॥

तथेति तस्याः प्रतिगृह्य वाचं
रामानुजे दृष्टिपथं व्यतीते।

सेति। साहं प्रसूतेः ऊर्द्ध्वं सूर्य्यनिविष्टदृष्टिः सती तथाविधं तपः चरितुं यतिष्ये, यथा भूयः तेन तपसा मे मम जननान्तरे अपि त्वम् एव भर्त्ता स्याः विप्रयोगश्च स्यान्न॥ ६६॥

नृपस्येति। वर्णानां ब्राह्मणादीनाम् आश्रमाणां ब्रह्मचर्य्यादीनां च पालनं यत् सः एव नृपस्य धर्म्मः मनुना प्रणीतः उक्तः, अतः कारणात् एवं त्वया निर्वासिता निष्कासितापि अहं तपस्विभिः सामान्यं साधारणं यथा भवति तथा अवेक्षणीया, कलत्रदृष्ट्यभावेऽपि वर्णाश्रमदृष्टिः सीतायां कर्त्तव्या इत्यर्थः॥६७॥

तथेति। तथेति तस्याः सीतायाः वाचं प्रतिगृह्य अङ्गीकृत्य रामानुजे लक्ष्मणे दृष्टिपथं व्यतीते अतिक्रान्ते सति सा सीता व्यसनातिभारात् दुःखातिरेकात् मुक्तकण्ठं यथा स्यात् तथा वागबला इत्यर्थः, विग्ना भीता कुररी इव उत्क्रोशी

सा मुक्तकण्ठं व्यसनातिभारा
च्चक्रन्द विग्ना कुररीव भूयः ॥ ६८ ॥
नृत्यं मयूराः कुसुमानि वृक्षा
दर्भानुपात्तान् विजहुर्हरिण्यः।
तस्याः प्रपन्ने समदुःखभाव
मत्यन्त मासी द्रुदितं वनेऽपि ॥ ६९ ॥
तामभ्यगच्छद्रुदितानुसारी
कविः कुशेध्माहरणाय यातः।
निषादविद्धाण्डजदर्शनोत्थः
श्लोकत्व मापद्यत यस्य शोकः ॥ ७० ॥

इव। उत्क्रोशकुररौ समौ” इत्यमरः। भूयो भूयिष्ठं चक्रन्द चुक्रोश ॥ ६८ ॥

नृत्यमिति। मयूराः नृत्यं विजहुः त्यक्तवन्तः, वृक्षाः कुसुमानि, हरिण्यः उपात्तान् दर्भान्, इत्थं तस्याः सीतायाः समदुःखभावं प्रपन्ने तुल्यदुःखत्वं प्राप्ते वने अपि अत्यन्तं रुदितम् आसीत्, यथा रामगेहेऽपि इत्यपिशब्दार्थः ॥ ६९ ॥

तामिति। कुशेध्माहरणाय यातः कविः वाल्मीकिः रुदितानुसारी सन् तां सीताम् अभ्यगच्छत् अभिगमनं चक्रे। दयालुतयेत्याह, निषादेति। निषादेन व्याधेन विद्धस्य अण्डजस्य क्रौञ्चस्य दर्शनेन उत्थः उत्पन्नः यस्य शोकः श्लोकत्वम् आपद्यत श्लोकरूपेणावोचत् इत्यर्थः। स च श्लोकः पठ्यते। “मा निषाद! प्रतिष्ठां त्वमगमः शाश्वतीः समाः। यत् क्रौञ्चमिथुनादेक

त मश्रु नेत्रावरणं प्रमृज्य
सीता विलापा द्विरता ववन्दे।
तस्यै मुनि र्दोहदलिङ्गदर्शी
दाश्वान् सुपुत्त्राशिष मित्युवाच ॥ ७१ ॥

जाने विसृष्टां प्रणिधानत स्त्वां
मिथ्यापवादक्षुभितेन भर्त्त्रा ।
तन्मा व्यथिष्ठा विषयान्तरस्थं
प्राप्तासि वैदेहि पितु र्निकेतम् ॥ ७२ ॥

मवधीः काममोहितम् ॥ " इति । तिरश्चामपि दुःखं न सेहे किमुतान्येषाम् ? इति भावः ॥ ७० ॥

तमिति । सीता विलापात् विरता सती नेत्रावरणं दृष्टि-प्रतिबन्धकम् अश्रु प्रमृज्य तं मुनिं ववन्दे। दोहदलिङ्गदर्शी गर्भचिह्नदर्शी मुनिः तस्यै सीतायै सुपुत्त्राशिषं तत्प्राप्तिहेतुभूतां दाश्वान् दत्तवान् इति वक्ष्यमाणप्रकारेण उवाच । दाश्वान् साह्वान् मीढ्वांश्चेति क्वस्वन्तो निपातः ॥ ७१ ॥

जाने इति । त्वां मिथ्यापवादेन क्षुभितेन भर्त्रा विसृष्टां त्यक्तां प्रणिधानतः समाधिदृष्ट्या जाने । हे वैदेहि! विषया-न्तरस्थं देशान्तरस्थं पितुः जनकस्य एव निकेतं गृहं प्राप्ता असि । तत् तस्मात् मा व्यथिष्ठाः मा शोचीः । व्यथेर्लुङ् । न माङ्योगे इत्यडागमप्रतिषेधः । भर्त्रोपेक्षितानां पितृगृहवास एव उचितः इति भावः ॥ ७२ ॥

उत्खातलोकत्रयकण्टकेऽपि
सत्यप्रतिज्ञेऽप्यविकत्थनेऽपि ।
त्वां प्रत्यकस्मात् कलुषप्रवृत्ता-
वस्त्येव मन्यु र्भरताग्रजे मे ॥ ७३ ॥

तवोरुकीर्त्तिः श्वशुरः सखा मे
सतां भवोच्छेदकरः पिता ते ।
धुरि स्थिता त्वं पतिदेवतानां
किन्तन्न येनासि ममानुकम्प्या ॥ ७४ ॥

तपस्विसंसर्गविनीतसत्वे
तपोवने वीतभया वसास्मिन् ।

उत्खातेति । उत्खातलोकत्रयकण्टके अपि सर्व्वलोकोपकारिष्वपि इत्यर्थः सत्यप्रतिज्ञे सत्यसन्धेऽपि अविकत्थने अश्लाघिन्यपि त्वां प्रति अकस्मात् अकारणात् कलुषप्रवृत्तौ गर्हितव्यापारे भरताग्रजे मे मन्युः कोपः अस्त्येव । सर्व्वगुणाच्छादकोऽयं दोषः इत्यर्थः । सीतानुनयार्थोऽयं रामोपलम्भः ॥ ७३ ॥

तवेति । उरुकीर्त्तिः तव श्वशुरः दशरथः मे सखा, ते पिता जनकः सतां विदुषां भवोच्छेदकरः ज्ञानोपदेशादिना संसारदुःखध्वंसकारी, त्वं पतिदेवतानां पतिव्रतानां धुरि अग्रे स्थिता, येन निमित्तेन मम अनुकम्प्या अनुग्राह्या न असि तत् किम्? न किञ्चित् इत्यर्थः ७४ ॥

तपस्वीति । तपस्विसंसर्गेण विनीतसत्वे शान्तजन्तुके अस्मिन् तपोवने वीतभया निर्भीका वस । इतः अस्मिन् वने

इतो भविष्यत्यनघप्रसूते
रपत्यसंस्कारमयो विधि स्ते ॥ ७५ ॥

अशून्यतीरां मुनिसन्निवेशै
स्तमोऽपहन्त्रीं तमसां वगाह्य ।
तत्सैकतोत्सङ्गवलिक्रियाभिः
सम्पत्स्यते ते मनसः प्रसादः ॥ ७६ ॥

पुष्पं फलं चार्त्तव माहरन्त्यो
वीजञ्च वालेय मकृष्टरोहि ।
विनोदयिष्यन्ति नवाभिषङ्गा
मुदारवाचो मुनिकन्यकास्त्वाम् ॥ ७७ ॥

अनघप्रसूते: सुखप्रसूतेः ते अपत्यसंस्कारमयः जातकर्म्मादिरूपः विधिः अनुष्ठानं भविष्यति ॥ ७५ ॥

अशून्येति । सन्निविशन्ते येष्विति सन्निवेशाः उटजाः । अधिकरणार्थे घञ् । मुनीनां सन्निवेशैः उटजैः अशून्यतीरां पूर्णतीरां तमसः शोकस्य पापस्य वा अपहन्त्रीम् । "तमस्तु क्लीवे पापे नरकशोकयोः" इत्यमरः । तमसां नदीं वगाह्य तत्र स्नात्वा । वलिक्रियापेक्षया पूर्व्वकालता । तस्याः सैकतोत्सङ्गेषु वलिक्रियाभिः इष्टदेवतापूजाविधिभिः ते मनसः प्रसादः सम्पत्स्यते भविष्यति ॥ ७६ ॥

पुष्पमिति । ऋतुरस्य प्राप्तः आर्त्तवं स्वकालप्राप्तं पुष्पं फलं च अकृष्टरोहि अकृष्टक्षेत्रोत्थम् अकृष्टपच्यम् इत्यर्थः वलये हितं वालेयं पूजायोग्यम् । छदिरुपधिवले ढञिति ढञ्

पयोघटैराश्रमबालवृक्षान्
संवर्द्धयन्ती स्वबलानुरूपैः ।
असंशयं प्राक् तनयोपपत्तेः
स्तनन्धयप्रीतिमवाप्स्यसि त्वम् ॥ ७८ ॥

अनुग्रहप्रत्यभिनन्दिनीं तां
वाल्मीकिरादाय दयार्द्रचेताः ।
सायं मृगाध्यासितवेदिपार्श्वं
स्वमाश्रमं शान्तमृगं निनाय ॥ ७९ ॥

प्रत्ययः। बीजं नीवारादिधान्यं च आहरन्त्यः उदारवाचः प्रगल्भगिरः मुनिकन्यकाः नवाभिषङ्गां नूतनदुःखां त्वां विनोदयिष्यन्ति ॥ ७७ ॥

पय इति। स्वबलानुरूपैः स्वशक्त्यनुसारिभिः पयसाम् अम्भसां घटैः। स्तनैः इति च ध्वन्यते । आश्रमबालवृक्षान् संवर्द्धयन्ती त्वं तनयोपपत्तेः प्राक् पूर्व्वम् असंशयं यथा तथा स्तनं धयति पिबतीति स्तनन्धयः शिशुः । नासिकास्तनयोर्ध्माधेटोरिति खश्प्रत्ययः, अरुर्द्विषदिति मुमागमः । तस्मिन् या प्रीतिः ताम् अवाप्स्यसि । ततः परं सुलभ एव विनोदः इति भावः ॥ ७८ ॥

अनुग्रहेति । दयार्द्रचेताः वाल्मीकिः अनुग्रहं प्रत्यभिनन्दतीति तथोक्तां तां सीताम् आदाय सायं मृगैः अध्यासितवेदिपार्श्वम् अधिष्ठितवेदिप्रान्तं शान्तमृगं स्वम् आश्रमं निनाय ॥ ७९ ॥

तामर्पयामास च शोकदीनां
तदागमप्रीतिषु तापसीषु ।
निर्विष्टसारां पितृभिर्हिमांशो-
रन्त्यां कलां दर्श इवौषधीषु ॥ ८० ॥
ता इङ्गुदीस्नेहकृतप्रदीप-
मास्तीर्णमेध्याजिनतल्पमन्तः ।
तस्यै सपर्य्यानुपदं दिनान्ते
निवासहेतोरुटजं वितेरुः ॥ ८१ ॥
तत्राभिषेकप्रयता वसन्ती
प्रयुक्तपूजा विधिनातिथिभ्यः ।

तामिति । शोकदीनां तां सीतां तस्याः सीतायाः आगमेन प्रीतिः यासां तासु तापसीषु, पितृभिः अग्निष्वात्तादिभिः निर्विष्टसारां भुक्तसारां हिमांशोः अन्त्याम् अवशिष्टां कलां दर्शः अमावास्याकालः ओषधीषु इव, अर्पयामास । अत्र पराशरः, "अमायां तु सदा सोमः ओषधीः प्रतिपद्यते" इति ॥ ८० ॥

ता इति । ताः तापस्यः तस्यै सीतायै सपर्य्यानुपदं पूजानन्तरं दिनान्ते सायंकाले निवासः एव हेतुः तस्य निवासहेतोः निवासार्थम् इत्यर्थः । षष्ठी हेतुप्रयोगे इति षष्ठी । "इङ्गुदी तापसतरुः" इत्यमरः । इङ्गुदीस्नेहेन कृतप्रदीपं अन्तःआस्तीर्णं मेध्यं शुद्धम् अजिनमेव तल्पं शय्या यस्मिन् तम् उटजं पर्णशालां वितेरुः ददुः ॥ ८१ ॥

तत्रेति । तत्र आश्रमे अभिषेकेण स्नानेन प्रयता नियता

वन्येन सा वल्कलिनी शरीरं
पत्युः प्रजासन्ततये बभार ॥ ८२ ॥
अपि प्रभुः सानुशयोऽधुना स्यात्
किमुत्सुकः शक्रजितोऽपि हन्ता।
शशंस सीता परिदेवनान्त-
मनुष्ठितं शासनमग्रजाय ॥ ८३ ॥
बभूव रामः सहसा सवाष्प-
स्तुषारवर्षीव सहस्यचन्द्रः।
कौलीनभीतेन गृहान्निरस्ता
न तेन वैदेहसुता मनस्तः ॥ ८४ ॥

वसन्ती विधिना शास्त्रेण अतिथिभ्यः प्रयुक्तपूजा कृतसत्कारा वल्कलिनी सा सीता पत्युः प्रजासन्ततये सन्तानाविच्छेदाय हेतोः वन्येन कन्दमूलादिना शरीरं बभार पुपोष ॥ ८२ ॥

अपीति। प्रभुः राजा अधुना अपि सानुशयः सानुतापः स्यात् किम्? इति काकुः। उत्सुकः शक्रजितः इन्द्रजितः हन्ता लक्ष्मणः अपि सीतापरिदेवनान्तं सीताविलापान्तम् अनुष्ठितं शासनम् अग्रजाय शशंस ॥ ८३ ॥

बभूवेति। सहसा सपदि सवाष्पः रामः, तुषारवर्षी सहस्यचन्द्रः इव, बभूव अत्यन्ततया तुषारवर्षिणा पौषचन्द्रेण तुल्योऽभूत्। "पौषे तैषसहस्यौ द्वौ" इत्यमरः। युक्तं चैतदित्याह, कौलीनात् लोकापवादात् भीतेन तेन रामेण वैदेह-

निगृह्य शोकं स्वयमेव धीमान्
वर्णाश्रमावेक्षणजागरूकः।
स भ्रातृसाधारणभोग मृद्धं
राज्यं रजोरिक्तमनाः शशास॥ ८५॥

ता मेकभार्य्यां परिवादभीरोः
साध्वीमपि त्यक्तवतो नृपस्य।
वक्षस्यसङ्घट्टसुखं वसन्ती
रेजे सपत्नीरहितेव लक्ष्मीः॥ ८६॥

सीतां हित्वा दशमुखरिपु र्नोपयेमे यदन्यां
तस्या एव प्रतिकृतिसखो यत् क्रतूनाजहार।

सुता सीता गृहात् निरस्ता न मनस्तः मनसः चित्तात् न निरस्ता। पञ्चम्यास्तसिल्॥ ८४॥

निगृह्येति। धीमान् वर्णानाम् आश्रमाणां च अवेक्षणे अनुसन्धाने जागरूकः अप्रमत्तः। जागरूक इति जक्प्रत्ययः। रजोरिक्तमनाः रजोगुणशून्यचेताः सः रामः स्वयमेव शोकं निगृह्य निरुध्य भ्रातृभिः साधारणभोगं शरीरस्थितिमात्रोपयुक्तम् इत्यर्थः ऋद्धं राज्यं शशास॥ ८५॥

तामिति। परिवादभीरोः अत एव एकभार्य्याम् अपि साध्वीम् अपि तां सीतां त्यक्तवतः नृपस्य वक्षसि असङ्घट्टसुखं असम्भाव्यसुखं वसन्ती लक्ष्मीः सपत्नीरहिता इव रेजे दिदीपे। तस्य स्त्र्यन्तरपरिग्रहो नाभूत् इति भावः॥ ८६॥

सीतामिति। दशमुखरिपुः रामः सीतां हित्वा त्यक्त्वा अन्यां

वृत्तान्तेन श्रवणविषयप्रापिणा तेन भर्त्तुः
सा दुर्वारं कथमपि परित्यागदुःखं विषेहे ॥ ८७ ॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ
सीतापरित्यागो नाम चतुर्दशः सर्गः ।

---

स्त्रियं न उपयेमे न परिणीतवान् इति यत् । उपायमः स्वकरणे इत्यात्मनेपदम् । किं च, तस्याः सीतायाः एव प्रतिकृतेः प्रतिमायाः हिरण्मय्याः सखा प्रतिकृतिसखः सन् क्रतून् आजहार आहृतवान् इति यत् तेन श्रवणविषयप्रापिणा श्रोत्रदेशगामिना भर्त्तुः वृत्तान्तेन वार्त्तया हेतुना सा सीता दुर्वारं दुर्निरोधं परित्यागेन यत् दुःखं तत् कथमपि विषहे विसोढ़वती ॥ ८७ ॥

इति श्रीमहामहोपाध्याय कोलाचलमल्लिनाथसूरि विरचितायां रघुवंशटीकायां सञ्जीवनीसमाख्यायां चतुर्दशः सर्गः ॥ १४ ॥

---

पञ्चदशः सर्गः ।

---

कृतसीतापरित्यागः स रत्नाकरमेखलाम् ।
बुभुजे पृथिवीपालः पृथिवी मेव केवलाम् ॥ १ ॥
लवणेन विलुप्तेज्याः तामिस्रेण त मभ्ययुः ।
मुनयो यमुनाभाजः शरण्यं शरणार्थिनः ॥ २ ॥
अवेक्ष्य रामं ते तस्मिन् न प्रजह्रुः स्वतेजसा ।
त्राणाभावे हि शापास्त्राः कुर्व्वन्ति तपसो व्ययम् ॥३॥

कृतेति । कृतसीतापरित्यागः सः पृथिवीपालः रामः रत्नाकरः एव मेखला यस्याः तां सार्णवाम् इत्यर्थः केवलाम् एकाम् इत्यर्थः । पृथिवीम् एव बुभुजे भुक्तवान्,न तु पार्थिवीम् इत्यर्थः । सापि रत्नखचितमेखला । पृथिव्याः कान्तासमाधिः व्यज्यते । रामस्य स्त्र्यन्तरपरिग्रहो नास्तीति श्लोकाभिप्रायः ॥ १ ॥

लवणेनेति । लवणेन लवणाख्येन तामिस्रेण तमिस्राचारिणा रक्षसा इत्यर्थः, विलुप्तेज्याः लुप्तयागक्रियाः अत एव शरणार्थिनः यमुनाभाजः यमुनातीरवासिनः मुनयः शरण्यं शरणार्हं रक्षणसमर्थं तं रामं रक्षितारम् अभ्ययुः प्राप्ताः । यातेर्लङ् ॥ २ ॥

अवेक्ष्येति । ते मुनयः रामम् अवेक्ष्य रक्षितारम् इति शेषः, तस्मिन् लवणे स्वतेजसा शापरूपेण न प्रजह्रुः । तथाहि, त्रायते इति त्राणम् । कर्त्तरि ल्युट् । तदभावे शापः एव

प्रतिशुश्राव काकुत्स्थः तेभ्यो विघ्नप्रतिक्रियाम् ।
धर्म्मसंरक्षणार्थैव प्रवृत्तिर्भुवि शार्ङ्गिणः ॥ ४ ॥
ते रामाय बधोपाय माचख्युर्विबुधद्विषः ।
दुर्जयो लवणः शूली विशूलः प्रार्थ्यतामिति ॥ ५ ॥
आदिदेशाथ शत्रुघ्नं तेषां क्षेमाय राघवः ।
करिष्यन्निव नामास्य यथार्थमरिनिग्रहात् ॥ ६ ॥

अस्त्रं येषां ते शापास्त्राः सन्तः तपसः व्ययं कुर्व्वन्ति । शापदानात् तपसो व्यय इति प्रसिद्धिः ॥ ३ ॥

प्रतीति । काकुत्स्थः रामः तेभ्यः मुनिभ्यः विघ्नप्रतिक्रियां लवणवधरूपां प्रतिशुश्राव प्रतिजज्ञे । तथाहि, भुवि शार्ङ्गिणः विष्णोः प्रवृत्तिः रामरूपेण अवतरणं धर्म्मसंरक्षणमेव अर्थः प्रयोजनं यस्याः सा तथैव ॥ ४ ॥

ते इति । ते मुनयः रामाय विबुधद्विषः सुरारेः लवणस्य वधोपायम् आचख्युः । लूनातीति लवणः । नन्द्यादित्वात् ल्युः । तत्रैव निपातनात्सत्वम् । लवणः शूली शूलवान् दुर्ज्जयः अजय्यः, किन्तु विशूलः शूलरहितः प्रार्थ्यताम् अभिगम्यताम् । "याच्ञायामभियाने च प्रार्थना कथ्यते बुधैः" इति केशवः ॥ ५ ॥

आदिदेशेति । अथ तेषां मुनीनां क्षेमाय क्षेमकरणाय राघवः रामः शत्रुघ्नम् आदिदेश । अत्रोत्प्रेक्ष्यते, अस्य शत्रुघ्नस्य नाम अरिनिग्रहात् शत्रुहननाद्धेतोः यथाभूतः अर्थः यस्य तत् यथार्थं करिष्यन्निव । शत्रून् हन्तीति शत्रुघ्नः । "अमनुष्यकर्त्तृके चेति चकारात् कृतघ्नशत्रुघ्नादयः सिद्धाः" इति दुर्गसिंहः । "पाणिनीयेऽपि बहुलग्रहणाद्यथेष्टसिद्धिः कृतलुग्टोबहुलम्" इति ॥ ६ ॥

यः कश्चन रघूणां हि परमेकः परन्तपः।
अपवाद इवोत्सर्गं व्यावर्त्तयितु मीश्वरः॥ ७॥
अग्रजेन प्रयुक्ताशी स्ततो दाशरथी रथी।
ययौ वनस्थलीः पश्यन् पुष्पिताः सुरभी रभीः॥ ८॥
रामादेशा दनुगता सेना तस्यार्थसिद्धये।
पश्चा दध्ययनार्थस्य धातो रधि रिवाभवत्॥ ९॥

रामस्य स्वयमप्रयाणे हेतुमाह, य इति। हि यस्मात् परान् शत्रून् तापयतीति परन्तपः। द्विषत्परयोस्तापेरिति खच्प्रत्ययः, खचि ह्रस्व इति ह्रस्वः। रघूणां मध्ये यः कश्चन एकः, अपवादः विशेषशास्त्रम् उत्सर्गं सामान्यशास्त्रम् इव परं शत्रुं व्यावर्त्तयितुं बाधितुम् ईश्वरः समर्थः। अतः शत्रुघ्नमेवादिदेशेति पूर्व्वेणान्वयः॥ ७॥

अग्रजेनेति। ततः अग्रजेन रामेण प्रयुक्ताशीः कृताशीर्वादः रथी अभीः निर्भीकः दाशरथिः पुष्पाणि सञ्जातानि यासां ताः पुष्पिताः सुरभीः आमोदमानाः वनस्थलीः पश्यन् ययौ॥ ८॥

रामेति। रामादेशात् अनुगता सेना तस्य शत्रुघ्नस्य, अध्ययनम् अर्थः अभिधेयः यस्य तस्य। धातोरिङध्ययन इत्यस्य धातोः पश्चात् अधिः उपसर्गः इव,। अर्थसिद्धये प्रयोजनसाधनाय इत्येकत्र, अन्यत्र अभिधेयसाधनाय अभवत्। "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः। यथा, इङिकावध्युपसर्गं न व्यभिचरत इति न्यायेन अध्युपसर्गः स्वयमेवार्थसाधकस्य धातोः सन्निधिमात्रेणोपकरोति केनापि तस्य तद्वत् इति भावः॥ ९॥

आदिष्टवर्त्मा मुनिभिः स गच्छं स्तपतां वरः।
विरराज रथप्रष्ठै र्वालखिल्यै रिवांशुमान् ॥ १० ॥
तस्य मार्गवशा देका बभूव वसति र्यतः।
रथस्वनोत्कण्ठमृगे वाल्मीकीये तपोवने ॥ ॥ ११ ॥
त मृषिः पूजयामास कुमारं क्लान्तवाहनम्।
तपःप्रभावसिद्धाभि र्विशेषप्रतिपत्तिभिः ॥ १२ ॥
तस्या मेवास्य यामिन्या मन्तर्वत्नी प्रजावती।

आदिष्टेति। रथप्रष्ठैः रथाग्रगामिभिः। प्रष्ठोऽग्रगामिनीति निपातः। मुनिभिः पूर्व्वोक्तैः आदिष्टवर्त्मा निर्दिष्टमार्गः गच्छन् तपतां देदीप्यमानानां मध्ये वरः श्रेष्ठः सः शत्रुघ्नः, वालखिल्यैः मुनिभिः अंशुमान् सूर्य्यः इव, विरराज। तेऽपि रथप्रष्ठा इत्यनुसन्धेयम् ॥ १० ॥

तस्येति। यतः गच्छतः। इण्धातोः शतृप्रत्ययः। तस्य शत्रुघ्नस्य मार्गवशात् रथस्वने उत्कण्ठाः उद्ग्रीवाः मृगाः यस्मिन् तस्मिन् वाल्मीकीये वाल्मीकिसम्बन्धिनि। वृद्धाच्छ इति छप्रत्ययः। तपोवने एका वसतिः रात्रिः बभूव, तत्रैकां रात्रिमुषित इत्यर्थः। "वसती रात्रिवेश्मनोः" इत्यमरः ॥ ११ ॥

तमिति। क्लान्तवाहनं श्रान्तयुग्यं तं कुमारं शत्रुघ्नम् ऋषिः वाल्मीकिः तपःप्रभावसिद्धाभिः विशेषप्रतिपत्तिभिः उत्कृष्टसम्भावनाभिः पूजयामास ॥ १२ ॥

तस्यामिति। तस्यामेव यामिन्यां रात्रौ अस्य शत्रुघ्नस्य अन्तरस्याः अस्तीति अन्तर्वत्नी गर्भिणी। "अन्तर्वत्नी च गर्भिणी"

सुता वसूत सम्पन्नौ कोशदण्डा विव क्षितिः ॥१३॥
सन्तानश्रवणाद् भ्रातुः सौमित्रिः सौमनस्यवान्।
प्राञ्जलि र्मुनि मामन्त्र्य प्रात र्युक्तरथो ययौ ॥ १४ ॥
स च प्राप मधूपघ्नं कुम्भीनस्याश्च कुक्षिजः।
वनात् कर मिवादाय सत्वराशि मुपस्थितः ॥ १५ ॥
धूम्रधूम्रो वसागन्धी ज्वालाबभ्रुशिरोरुहः।

इत्यमरः। अन्तर्वत्पतिवतोर्नुगिति ङीप् नुगागमश्च। प्रजावती भ्रातृजाया सीता, क्षितिः सम्पन्नौ समग्रौ कोशदण्डौ इव, सुतौ असूत ॥ १३ ॥

सन्तानेति। भ्रातुः जेष्ठस्य सन्तानश्रवणाद्धेतोः सौमनस्यवान् प्रीतिमान् सौमित्रिः शत्रुघ्नः प्रातः युक्तरथः सज्जरथः सन् प्राञ्जलिः कृताञ्जलिः मुनिम् आमन्त्र्य आपृच्छ्य ययौ ॥ १४ ॥

स चेति। सः शत्रुघ्नश्च मधूपघ्नं नाम लवणपुरं प्राप, कुम्भीनसी नाम रावणस्वसा तस्याः कुक्षिजः पुत्रः लवणश्च वनात् करं बलिमिव सत्वानां प्राणिनां राशिम् आदाय उपस्थितः प्राप्तः ॥ १५ ॥

धूमेति। किम्भूतो लवणः? धूमः इव धूम्रः कृष्णलोहितवर्णः। "धूम्रधूमलौ कृष्णलोहिते" इत्यमरः। वसागन्धः हृन्मेदोगन्धः सः अस्यास्तीति वसागन्धी। "हृन्मेदस्तु वपा-वसा" इत्यमरः। ज्वालाः इव बभ्रवः पिशङ्गाः शिरोरुहाः केशाः यस्य सः तथोक्तः। "विपुले विपणौ बभ्रुः स्यात् पिङ्गले त्रिषु" इत्यमरः। क्रव्यं मांसम् अदन्ति इति क्रव्यादः

क्रव्याद्गणपरीवार श्चिताग्नि रिव जङ्गमः॥ १६॥
अपशूलं तमासाद्य लवणं लक्ष्मणानुजः ।
रुरोध संमुखीनो हि जयो रन्ध्रप्रहारिणाम्॥ १७ ॥
नातिपर्य्याप्त मालक्ष्य मत्कुक्षे रद्य भोजनम्।
दिष्ट्यात्व मसि मे धात्रा भीतेनेवोपपादितः॥ १८॥
इति सन्तर्ज्य शत्रुघ्नं राक्षस स्तज्जिघांसया।
प्रांशु मुत्पाटयामास मुस्तास्तम्ब मिव द्रुमम्॥ १९॥

राक्षसाः तेषां गणः एव परीवारः यस्य सः तथोक्तः अत एव जङ्गमः चरिष्णुः चिताग्निः इव स्थितः। कृशानुपक्षे धूम्रैः धूम्रवर्णैः, ज्वालाः एव शिरोरुहाः क्रव्यादः गृध्रादयः इति अनुसन्धेयम् ॥ १६ ॥

अपशूलमिति। लक्ष्मणानुजः शत्रुघ्नः अपशूलं शूलरहितं तं लवणम् आसाद्य रुरोध। तथाहि, रन्ध्रप्रहारिणां रन्ध्रप्रहरणशीलानाम्, अपशूलतैवात्र रन्ध्रम्। जयः सम्मुखीनः हि सम्मुखस्य दर्शनः हि। यथासुखसम्मुखस्य दर्शनः ख इति खप्रत्ययः। अधिकारलक्षणार्थस्तु दुर्लभ एव ॥ १७ ॥

नेति। इतीति। राक्षसः लवणः, अद्य मत्कुक्षेः भुज्यते इति भोजनं भोज्यं मृगादिकं नातिपर्य्याप्तम् अनतिसन्तर्पकम् आलक्ष्य दृष्ट्वा भीतेन इव धात्रा दिष्ट्या भाग्येन मे त्वम् उपपादितः कल्पितः असि इति शत्रुघ्नं सन्तर्ज्य तस्य शत्रुघ्नस्य जिघांसया हन्तुमिच्छया प्रांशुम् उन्नतं द्रुमं, मुस्तास्तम्बम् इव, अक्लेशेन उत्पाटयामास ॥ १८ ॥ १९ ॥

सौमित्रे र्निशितै र्बाणै रन्तरा शकलीकृतः।
गात्रं पुष्परजः प्राप न शाखी नैर्ऋतेरितः ॥ २०॥
विनाशात् तस्य वृक्षस्य रक्ष स्तस्मै महोपलम्।
प्रजिघाय कृतान्तस्य मुष्टिं पृथ गिव स्थितम् ॥ २१॥
ऐन्द्र मस्त्र मुपादाय शत्रुघ्नेन स ताड़ितः।
सिकतात्वा दपि परां प्रपेदे परमाणुताम् ॥ २२॥
तमुपाद्रव दुद्यम्य दक्षिणं दो र्निशाचरः।

सौमित्रेरिति। नैर्ऋतेरितः रक्षःप्रेरितः शाखी अन्तरा मध्ये निशितैः बाणैः शकलीकृतः सन् सौमित्रेः शत्रुघ्नस्य गात्रं न प्राप, किन्तु पुष्परजः प्रापः॥ २०॥

विनाशादिति। रक्षः लवणः तस्य वृक्षस्य विनाशाद्धेतोः, महोपलं महान्तं पाषाणं, पृथक् स्थितं कृतान्तस्य यमस्य मुष्टिम् इव। मुष्टिशब्दो द्विलिङ्गः। तस्मै शत्रुघ्नाय प्रजिघाय प्रहितवान्॥ २१॥

ऐन्द्रमिति। सः महोपलः शत्रुघ्नेन ऐन्द्रम् इन्द्रदेवताकम् अस्त्रम् उपादाय ताड़ितः अभिहतः सन् सिकतात्वात् सिकताभावादपि परां परमाणुतां प्रपेदे। यतोऽणु नास्ति स परमाणुरित्याहुः॥ २२॥

तमिति। निशाचरः राक्षसः दक्षिणं दोः। ककुद्दोषणी इति भगवतो भाष्यकारस्य प्रयोगात् दोषशब्दस्य नपुंसकत्वं द्रष्टव्यम्। "भुजबाहू प्रवेष्टो दोः" इति पुंलिङ्गसाहचर्य्यात् पुंस्त्वञ्च। तथा च प्रयोगः, "दोषं तस्य तथाविधस्य भजतः"

एकताल इवोत्पातपवनप्रेरितो गिरिः ॥ २३ ॥
कार्ष्णेन पत्रिणा शत्रुः स भिन्नहृदयः पतन्।
आनिनाय भुवः कम्पं जहाराश्रमवासिनाम् ॥ २४ ॥
वयसां पङ्क्तयः पेतु र्हतस्योपरि विद्विषः।
तत्प्रतिद्वन्द्विनो मूर्ध्नि दिव्याः कुसुमवृष्टयः ॥ २५ ॥
स हत्वा लवणं वीर स्तदा मेने महौजसः।
भ्रातुः सोदर्य्यमात्मान मिन्द्रजिद्वधशोभिनः ॥२६॥

इति। सव्येतरं बाहुम् उद्यम्य एकः तालः तदाख्यवृक्षः यस्मिन् सः एकतालः, उत्पातपवनेन प्रेरितः गिरिः इव, तं शत्रुघ्नम् उपाद्रवत् अभिद्रुतः ॥ २३ ॥

कार्ष्णेनेति। सः शत्रुः लवणः कार्ष्णेन वैष्णवेन पत्रिणा बाणेन। उक्तञ्च रामायणे, "एकमेव प्रजनितो विष्णो स्तेजोमयः शरः" इति। "विष्णुर्नारायणः कृष्णः" इत्यमरः। भिन्नहृदयः पतन् भुवः कम्पम् आनिनाय नीतवान् देहभारात् इत्यर्थः, आश्रमवासिनां कम्पं जहार, तत्राशा दकुतोभया बभूवुः इत्यर्थः ॥ २४ ॥

वयसामिति। हतस्य विद्वेष्टीति विद्विट् तस्य विद्विषः राक्षसस्य उपरि वयसां पक्षिणां पङ्क्तयः पेतुः, तत्प्रतिद्वन्द्विनः शत्रुघ्नस्य मूर्ध्नि तु दिव्याः कुसुमवृष्टयः पेतुः ॥ २५ ॥

स इति। सः वीरः शत्रुघ्नः लवणं हत्वा तदा आत्मानं महौजसः महाबलस्य इन्द्रजिद्वधेन शोभिनः भ्रातुः लक्ष्मणस्य समानोदरे शयितं सोदर्य्यम् एकोदरं मेने। सोदराद्यः इति यत्प्रत्ययः ॥ २६ ॥

तस्य संस्तूयमानस्य चरितार्थैस्तपस्विभिः ।
शुशुभे विक्रमोदग्रं व्रीड़यावनतं शिरः ॥ २७ ॥
उपकूलं स कालिन्द्याः पुरीं पौरुषभूषणः ।
निर्ममे निर्ममो ऽर्थेषु मथुरां मधुराकृतिः ॥ २८ ॥
या सौराज्यप्रकाशाभि र्बभौ पौरविभूतिभिः ।
स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशिता ॥ २९ ॥
तत्र सौधगतः पश्यन् यमुनां चक्रवाकिनीम् ।

तस्येति । चरितार्थैः कृतार्थैः कृतकार्य्यैः तपस्विभिः संस्तूयमानस्य तस्य शत्रुघ्नस्य विक्रमेण उदग्रम् उन्नतं व्रीड़या लज्जया अवनतं नम्रं शिरः शुशुभे, विक्रान्तस्य लज्जैव भूषणम् इति भावः ॥ २७ ॥

उपेति । सौम्यरूपः सः शत्रुघ्नः कालिन्द्याः यमुनायाः उपकूलं कूले । विभक्त्यर्थेऽव्ययीभावः । मथुरां नाम पुरीं निर्ममे निर्मितवान् ॥ २८ ॥

येति । या पूः शोभनः राजा यस्याः पुरः सा सुराज्ञी, सुराज्ञ्याः भावः सौराज्यं तेन प्रकाशाभिः प्रकाशमानाभिः पौराणां विभूतिभिः ऐश्वर्य्यैः स्वर्गस्य अभिष्यन्दः अतिरिक्तजनः तस्य वमनम् आहरणं कृत्वा उपनिवेशिता उपस्थापिता इव बभौ । अत्र कौटिल्यः, "भूतपूर्व्वमभूतपूर्व्वं वा जनपदं परदेशप्रवाहेण स्वदेशाभिष्यन्दवमनेन वा निवेशयेत्" इति ॥ २९ ॥

तत्रेति । तत्र मथुरायां सौधगतः हर्म्यारूढ़ः सः चक्र-

हेमभक्तिमतीं भूमेः प्रवेणी मिव पिप्रिये ॥ ३० ॥

सखा दशरथस्यापि जनकस्य च मन्त्रकृत्।

सञ्चस्कारोभयप्रीत्या मैथिलेयौ यथाविधि ॥ ३१ ॥

स तौ कुशलवोन्मृष्ट-गर्भक्लेदौ तदाख्यया ॥

कविः कुशलवावेव चकार किल नामतः ॥ ३२ ॥

साङ्गञ्च वेद मध्याप्य किञ्चि दुत्क्रान्तशैशवौ।

स्वकृतिं गापयामास कविप्रथमपद्धतिम् ॥ ३३ ॥

वाकिणीं चक्रवाकवतीं यमुनां हेमभक्तिमतीं सुवर्णरचनावतीं भूमेः प्रवेणीं वेणीम् इव। "वेणी प्रवेणी" इत्यमरः। पश्यन् पिप्रिये प्रीतः। प्रीङ्प्रीणन इति धातोर्दैवादिकाल्लिट् ॥ ३०॥

सखा इति। दशरथस्य जनकस्य च सखा मन्त्रकृत् मन्त्र-द्रष्टा सः वाल्मीकिः अपि। सुकर्म्मपापमन्त्रपुण्येषु कृञ् इति क्विप्। उभयोः दशरथजनकयोः प्रीत्या स्नेहेन मैथिलेयौ मैथिलीपुत्रौ यथाविधि यथाशास्त्रं सञ्चस्कार संस्कृतवान् ॥ ३१॥

स इति। सः कविः वाल्मीकिः कुशैः दर्भैः लवः गोपुच्छ-लोमभिः। "लवो लवणकिञ्जल्कपक्ष्मगोपुच्छलोमसु" इति वैजयन्ती। उन्मृष्टः गर्भक्लेदः गर्भोपद्रवः ययोः तौ कुशलवो-न्मृष्टगर्भक्लेदौ तौ मैथिलेयौ तेषां कुशानाञ्च लवानाञ्च आख्यया नामतः नाम्ना यथासंख्यं कुशलवौ एव चकार किल। कुशोन्मृष्टः कुशः, लवोन्मृष्टः लवः ॥ ३२ ॥

साङ्गमिति। किञ्चित् उत्क्रान्तशैशवौ अतिक्रान्तबाल्यौ तौ साङ्गञ्चवेदम् अध्याप्य कवीनां प्रथमपद्धतिं कविताबीजम् इत्यर्थः

रामस्य मधुरं वृत्तं गायन्तौ मातु रग्रतः।
तद्वियोगव्यथां किञ्चित् शिथिलीचक्रतुः सुतौ॥ ३४॥
इतरेऽपि रघो र्वंश्या स्त्रय स्त्रेताग्नितेजसः।
तद्योगात् पतिवत्नीषु पत्नीष्वासन् द्विसूनवः॥ ३५॥
शत्रुघातिनि शत्रुघ्नः सुबाहौ च बहुश्रुते।
मधुराविदिशे सून्वो र्निदधे पूर्व्वजोत्सुकः॥ ३६॥

स्वकृतिं काव्यं रामायणाख्यं गापयामास। गापयतेर्लिट्। शब्द-कर्म्मत्वाद् गतिबुद्धीत्यादिना द्विकर्म्मकत्वम्॥ ३३॥

रामस्येति। तौ सुतौ रामस्य वृत्तं मातुः अग्रतः मधुरं गायन्तौ तद्वियोगव्यथां रामविरहवेदनां किञ्चित् शिथिलीचक्रतुः॥ ३४॥

इतरेऽपीति। रघोः वंश्याः वंशे भवाः त्रेतेति अग्नयः त्रेता ग्नयः तेषां तेजः इव तेजः येषां ते त्रेताग्नितेजसः इतरे रामात् अन्ये त्रयः भरतादयः अपि तद्योगात् भरतादिसम्बन्धात् पतिवत्नीषु भर्त्तृमतीषु जीवत्पतिकासु ख्यातिमतीषु इत्यर्थः। "पतिवत्नी सभर्तृका" इत्यमरः। अन्तर्वत्पतिवतोर्नुगिति ङीप् प्रत्ययो नुगागमश्च। पत्नीषु द्विसूनवः आसन्। द्वौ द्वौ सूनू येषां ते द्विसूनवः इति विग्रहः। क्वचित् संख्याशब्दस्य वृत्तिविषये वीप्सार्थत्वं सप्तपर्णादिवत्॥ ३५॥

शत्रुघातिनीति। पूर्व्वजोत्सुकः ज्येष्ठप्रियः शत्रुघ्नः बहुश्रुते शत्रुघातिनि सुबाहौ च तन्नामकयोः सून्वोः मथुरा च विदिशा च ते नगर्य्यौ निदधे निधाय गतः इत्यर्थः॥ ३६॥

भूय स्तपोव्ययो माभूद् वाल्मीके रिति सो ऽत्यगात्।
मैथिलीतनयोद्गीत-निःस्पन्दमृग माश्रमम् ॥३७॥
वशी विवेश चायोध्यां रथ्यासंस्कारशोभिनीम्।
लवणस्य बधात् पौरै रीक्षितोऽत्यन्तगौरवम् ॥३८॥
स ददर्श सभामध्ये सभासद्भि रुपस्थितम्।
रामं सीतापरित्यागा दसामान्यपतिं भुवः ॥ ३९ ॥
त मभ्यनन्दत् प्रणतं लवणान्तक मग्रजः।

भूय इति। सः शत्रुघ्नः मैथिलीतनययोः कुशलवयोः उद्गीतेन निःस्पन्दमृगं गीतप्रियतया निश्चलहरिणं वाल्मीकेः आश्रमम् भूयः पुनरपि तपोव्ययः संविधानकरणार्थं तपोहानिः मा भूदिति हेतोः, अत्यगात् अतिक्रम्य गतः इत्यर्थः ॥ ३७ ॥

वशीति। वशी सः लवणस्य बधाद्धेतोः पौरैः पौरजनैः अत्यन्तं गौरवं यस्मिन् कर्म्मणि तत् तथा ईक्षितः सन् रथ्यासंस्कारैः तोरणादिभिः शोभते या ताम् अयोध्यां विवेश च ॥ ३८ ॥

स इति। सः शत्रुघ्नः सभामध्ये सभासद्भिः सभ्यैः उपस्थितं सेवितं सीतापरित्यागात् भुवः असामान्यपतिम् असाधारणपतिं रामं ददर्श ॥ ३९ ॥

तमिति। अग्रजः रामः लवणस्य अन्तकं हन्तारं प्रणतं तं शत्रुघ्नम्, कालनेमि नाम राक्षसः तस्य बधात् प्रीतः, तुरं वेगं सहते इति तुराषाट् इन्द्रः। छन्दसि सह इति ण्विः। यद्वा

कालनेमिवधात् प्रीत स्तुराषाड़िव शार्ङ्गिणम् ॥४०॥
स पृष्टः सर्व्वतो वार्त्त माख्य द्राज्ञे न सन्ततिम् ।
प्रत्यर्पयिष्यतः काले कवे राद्यस्य शासनात् ॥ ४१ ॥
अथ जानपदो विप्रः शिशु मप्राप्तयौवनम् ।
अवतार्य्याङ्कशय्यास्थं द्वारि चक्रन्द भूपतेः ॥ ४२ ॥
शोचनीयासि वसुधे या त्वं दशरथात् च्युता ।
रामहस्त मनुप्राप्य कष्टात् कष्टतरं गता ॥ ४३ ॥

सहतेर्णिचि क्रते साहयतेः क्विप्, अन्येषामपि दृश्यत इति पूर्व्वपदस्य दीर्घः, सहेः साढ़ः षः इति षत्वम्। शार्ङ्गिणम् उपेन्द्रम् इव, अभ्यनन्दत् ॥ ४० ॥

स इति । सः शत्रुघ्नः पृष्टः सन् सर्व्वतः वार्त्तं कुशलं राज्ञे आख्यत् आख्यातवान्। चक्षिङो लुङ्, चक्षिङः ख्याञिति ख्याञादेशः, अस्यति वक्तीत्यङ्, आतो लोप इति चेत्याकारलोपः, ख्यातेर्वा लुङ्। सन्ततिं कुशलवोत्पत्तिं नाख्यत् । कुतः? काले अवसरे प्रत्यर्पयिष्यतः आद्यस्य कवेः वाल्मीकेः शासनात् ॥ ४१ ॥

अथेति । अथ जनपदे भवः जानपदः विप्रः कश्चिदिति शेषः अप्राप्तयौवनं शिशुं पुत्रम् इति शेषः भूपतेः रामस्य द्वारि अङ्कशय्यास्थं यथा तथा अवतार्य्य अङ्कस्थलेनैवावरोप्य चक्रन्द चुक्रोश ॥ ४२ ॥

शोचनीयेति । हे वसुधे ! दशरथात् च्युता या त्वं रामहस्त मनुप्राप्य कष्टात् कष्टतरं गता सती शोचनीयासि ॥४३॥

श्रुत्वा तस्य शुचो हेतुं गोप्ता जिह्राय राघवः ।
न ह्यकालभवो मृत्यु रिक्ष्वाकुपद मस्पृशत् ॥ ४४ ॥
स मुहूर्त्तं क्षमस्वेति द्विज माश्वास्य दुःखितम् ।
यानं सस्मार कौवेरं वैवस्वतजिगीषया ॥ ४५ ॥
आत्तशस्त्र स्तदध्यास्य प्रस्थितः स रघूद्वहः ।
उच्चचार पुर स्तस्य गूढ़रूपा सरस्वती ॥ ४६ ॥
राजन् प्रजासु ते कश्चि दपचारः प्रवर्त्तते ।
त मन्विष्य प्रशमये र्भवितासि ततः कृती ॥ ४७ ॥
इत्याप्तवचना द्रामो विनेष्यन् वर्णविक्रियाम् ।

श्रुत्वेति । गोप्ता रक्षकः राघवः तस्य विप्रस्य शुचः शोकस्य हेतुं पुत्रमरणरूपं श्रुत्वा जिह्राय लज्जितः । कुतः ? हि यस्मात् अकालभवः मृत्युः इक्ष्वाकूणां पदं राष्ट्रं न अस्पृशत् । वृद्धे जीवति यवीयान् न म्रियते इत्यर्थः ॥ ४४ ॥

स इति । सः रामः दुःखितं द्विजं मुहूर्त्तं क्षमस्वेति आश्वास्य वैवस्वतस्य अन्तकस्यापि जिगीषया जेतुमिच्छया कौवेरं यानं पुष्पकं सस्मार ॥ ४५ ॥

आत्तेति । सः रघूद्वहः रामः आत्तशस्त्रः सन् तत् पुष्पकम् अध्यास्य प्रस्थितः । अथ तस्य पुरो गूढ़ रूपा सरस्वती अशरीरा वाक् उच्चचार उद्‌बभूव ॥ ४६ ॥

राजन्निति । हे राजन् ! ते प्रजासु कश्चित् अपचारः वर्णधर्म्मव्यतिरेकः प्रवर्त्तते, तम् अपचारम् अन्विष्य प्रशमयेः, ततः कृती कृतकृत्यः भवितासि भविष्यसि ॥ ४७ ॥

इतीति । इति आप्तवचनात् रामः वर्णविक्रियां वर्णापचारं

दिशः पपात पत्रेण वेगनिष्कम्पकेतुना ॥ ४८ ॥

अथ धूमाभिताम्राक्षं वृक्षशाखावलम्बिनम् ।
ददर्श कञ्चिदैक्ष्वाकस्तपस्यन्तमधोमुखम् ॥ ४९ ॥

पृष्टनामान्वयो राज्ञा स किलाचष्ट धूमपः ।
आत्मानं शम्बुकं नाम शूद्रं सुरपदार्थिनम् ॥ ५० ॥

तपस्यनधिकारित्वात् प्रजानां तमघावहम् ।
शीर्षच्छेद्यं परिच्छिद्य नियन्ता शस्त्रमाददे ॥ ५१ ॥

विनेष्यन् वेगेन निष्कम्पकेतुना पत्रेण वाहनेन पुष्पकेण ।-"पत्रं वाहनपक्षयोः" इत्यमरः । दिशः पपात धावति स्म ॥ ४८ ॥

अथेति । अथ इक्ष्वाकुवंशप्रभवः ऐक्ष्वाकः रामः । कोपधाद्गणित्यणि सति दाण्डिनायनेत्यादिना उकारलोपनिपातः । धूमेन पीयमानेन अभिताम्राक्षं वृक्षशाखावलम्बिनम् अधोमुखं तपस्यन्तं तपश्चरन्तं कञ्चित् पुरुषं ददर्श ॥ ४९ ॥

पृष्टेति । राज्ञा नाम च अन्वयश्च तौ पृष्टौ नामान्वयौ यस्य सः तथोक्तः धूमं पिबतीति धुमपः । सुपीति योगविभागात् कप्रत्ययः । सः पुरुषः आत्मानं सुरपदार्थिनं स्वर्गार्थिनम् । अनेन प्रयोजनमपि पृष्ट इति ज्ञेयम् । शम्बुकं नाम शूद्रम् आचष्ट बभाषे किल ॥ ५० ॥

तपसीति । तपसि अनधिकारित्वात् प्रजानाम् अघावहं दुःखावहं तं शूद्रं शीर्षच्छेद्यम् । शीर्षच्छेदात् यच्चेति यत्प्रत्ययः । परिच्छिद्य निश्चित्य नियन्ता रक्षकः रामः शस्त्रम् आददे जग्राह ॥ ५१ ॥

स तद्वक्त्रं हिमक्लिष्ट-किञ्जल्क मिव पङ्कजम् ।
ज्योतिष्कणाहतश्मश्रु कण्ठनाला दपातयत् ॥ ५२ ॥
कृतदण्डः स्वयं राज्ञा लेभे शूद्रः सतां गतिम् ।
तपसा दुश्चरेणापि न स्वमार्गविलङ्घिना ॥ ५३ ॥
रघुनाथो ऽप्यगस्त्येन मार्गसन्दर्शितात्मना ।
महौजसा संयुयुजे शरत्काल इवेन्दुना ॥ ५४ ॥
कुम्भयोनि रलङ्कारं तस्मै दिव्यपरिग्रहम् ।
ददौ दत्तं समुद्रेण पीतेनेवात्मनिष्क्रयम् ॥ ५५ ॥

स इति । सः रामः ज्योतिष्कणैः स्फुलिङ्गैः आहतानि दग्धानि श्मश्रूणि यस्य तत् तस्य वक्त्रं, हिमक्लिष्टकिञ्जल्कं पङ्कजम् इव, कण्ठः एव नालं तस्मात् अपातयत् ॥ ५२ ॥

कृतेति । शूद्रः शम्बुकः राज्ञा स्वयं कृतदण्डः कृतशिक्षः सन् सतां गतिं लेभे, दुश्चरेणापि स्वमार्गविलङ्घिना अनधिकारदुष्टेन इत्यर्थः तपसा न लेभे । अत्र मनुः, "राजभिः कृतदण्डास्तु कृत्वा पापानि मानवाः । निर्मलाः स्वर्ग मायान्ति सन्तः सुकृतिनो यथा ।" इति ॥ ५३ ॥

रघुनाथ इति । रघुनाथोऽपि मार्गसन्दर्शितात्मना महौजसा अगस्त्येन, इन्दुना शरत्कालः इव, संयुयुजे सङ्गतः । इन्दावपि विशेषणं योज्यम् । रघुनाथेत्यत्र क्षुभ्नादित्वाण्णत्वाभावः ॥ ५३ ॥

कुम्भेति । कुम्भयोनिः अगस्त्यः पीतेन समुद्रेण आत्मनिष्क्रयम् इव आत्ममोचनमूल्यम् इव दत्तम् अत एव परि-

तं दधन्मैथिलीकण्ठ-निर्व्यापारेण बाहुना ।
पश्चा न्निववृते रामः प्राक् परासु र्द्विजात्मजः ॥ ५६ ॥
तस्य पूर्व्वोदितां निन्दां द्विजः पुत्त्रसमागतः ।
स्तुत्या निवर्त्तयामास त्रातु र्वैवस्वता दपि ॥ ५७ ॥
त मध्वराय मुक्ताश्वं रक्षःकपिनरेश्वराः ।
मेघाः शस्य मिवाम्भोभि रभ्यवर्षन्नुपायनैः ॥ ५८ ॥
दिग्भ्यो निमन्त्रिता श्चैन मभिजग्मु र्महर्षयः ।
न भौमान्येव धिष्ण्यानि हित्वा ज्योतिर्मयान्यपि ॥५६॥

गृह्यते इति व्युत्पत्त्या परिग्रहः दिव्यानां परिग्रहः परिग्राह्यः इत्यर्थः तम् अलङ्कारं तस्मै रामाय ददौ ॥ ५५ ॥

तमिति । मैथिलीकण्ठनिर्व्यापारेण बाहुना तम् अलङ्कारं दधत् रामः पश्चात् निववृते निवृत्तः, परासुः मृतः द्विजात्मजः प्राक् रामात् पूर्व्वं निववृते ॥ ५६ ॥

तस्येति । पुत्र समागतः पुत्रेण सङ्गतः द्विजः वैवस्वतात् अन्तकादपि त्रातुः रक्षकस्य । भीत्यर्थानां भयहेतुरित्यपादानात् पञ्चमी । तस्य रामस्य पूर्व्वोदितां पूर्व्वोक्तां निन्दां स्तुत्या विवर्त्तयामास ॥ ५७ ॥

तमिति । अध्वराय अश्वमेधाय मुक्ताश्वं तं रामं रक्षः-कपिनरेश्वराः सुग्रीवविभीषणादयः राजानश्च, मेघाः अम्भोभिः शस्यम् इव, उपायनैः अभ्यवर्षन् ॥ ५८ ॥

दिग्भ्य इति । निमन्त्रिताः आहूताः महर्षयश्च भूम्याः सम्बन्धीनि भौमानि धिष्ण्यानि स्थानान्येव न । "धिष्ण्यं

उपशल्यनिविष्टै स्तै श्चतुर्द्वारमुखी बभौ ।
अयोध्या सृष्टलोकेव सद्यः पैतामही तनुः ॥ ६० ॥

श्लाघ्य स्त्यागोऽपि वैदेह्याः पत्युः प्राग्वंशवासिनः ।
अनन्यजानेः सैवासीद् यस्मा ज्जाया हिरण्मयी ॥६१॥

विधे रधिकसम्भार स्ततः प्रववृते मखः ।
आसन् यत्र क्रियाविघ्नाः राक्षसा एव रक्षिणः ॥६२॥

स्थाने गृहे भेऽग्नौ" इत्यमरः । किन्तु ज्योतिर्मयानि नक्षत्ररूपाणि धिष्ण्यान्यपि हित्वा दिग्भ्यः एनं रामम् अभिजग्मुः ॥ ५९ ॥

उपेति । चत्वारि द्वाराण्येव मुखानि यस्याः सा चतुर्द्वारमुखी अयोध्या उपशल्येषु ग्रामान्तेषु निविष्टैः "ग्रामान्त उपशल्यं स्यात्" इत्यमरः तैः महर्षिभिः, सद्यः सृष्टलोका पितामहस्येयं पैतामही तनुः मूर्त्तिः इव, बभौ ॥ ६० ॥

श्लाघ्य इति । वैदेह्याः त्यागोऽपि श्लाघ्यः वर्ण्यः एव । कुतः? यस्मात् प्राग्वंशः प्राचीनस्थूणः यज्ञशालाविशेषः तद्वासिनः नास्त्यन्या जाया यस्य तस्य अनन्यजानेः । जायाया निङिति समासान्तो निङादेशः । पत्युः रामस्य हिरण्मयी सौवर्णी । दाण्डिनायनादिसूत्रेण निपातः । सा निजैव जाया पत्नी आसीत् ॥ ६१ ॥

विधेरिति । ततः विधेः शास्त्रात् अधिकसम्भारः अतिरिच्यमानपरिकरः मखः प्रववृते प्रवृत्तः । यत्र मखे विहन्यन्ते एभिरिति विघ्नाः प्रत्यूहाः । मखे यज्ञे यज्ञार्थे कविधानमिति कः ।

अथ प्राचेतसोपज्ञं रामायणमितस्ततः ।
मैथिलेयौ कुशलवौ जगतुर्गुरुचोदितौ ॥ ६३ ॥
वृत्तं रामस्य वाल्मीकेः कृतिस्तौ किन्नरस्वनौ ।
किं तद् येन मनो हर्त्तुमलं स्यातां न शृण्वताम् ॥ ६४॥
रूपे गीते च माधुर्य्यं तयोस्तज्ज्ञैर्निवेदितम् ।

क्रियाविघ्नाः अनुष्ठानविघातकाः राक्षसाः एव रक्षिणः रक्षकाः आसन् ॥ ६२ ॥

अथेति । अथ मैथिलेयौ मैथिलीतनयौ । स्त्रीभ्यो ढक् । कुशलवौ गुरुणा वाल्मीकिना चोदितौ प्रेरितौ सन्तौ प्राचेतसः वाल्मीकिः उपज्ञायते इति उपज्ञा । आतश्चोपसर्गे इति कर्म्मण्यङ्प्रत्ययः । प्राचेतसस्य उपज्ञा प्राचेतसोपज्ञं प्राचेतसेनादौ ज्ञातम् इत्यर्थः । "उपज्ञा ज्ञानमाद्यं स्यात्" इत्यमरः । उपज्ञोपक्रमं तदाद्याचिख्यासायामिति नपुंसकत्वम् । अय्यते ज्ञायते अनेन इत्ययनं रामस्य अयनं चरितं रामायणं रामायणाख्यं काव्यम् । पूर्व्वपदात् संज्ञायामग इति णत्वम् उत्तरायणमितिवत् । इतस्ततः जगतुः । गायतेर्लिट् ॥ ६३ ॥

वृत्तमिति । रामस्य वृत्तं वर्ण्यं वस्तु इति शेषः, वाल्मीकेः कृतिः काव्यं गेयम् इति शेषः, तौ कुशलवौ किन्नरस्वनौ किन्नरकण्ठौ गायकौ पुनरिति शेषः, अत एव तत् किं येन निमित्तेन तौ शृण्वतां मनः हर्त्तुम् अलं शक्तौ न स्याताम् ? सर्व्वं सरसम् इत्यर्थः ॥ ६४ ॥

रूप इति । ते जानन्तीति तज्ज्ञाः तैः तज्ज्ञैः अभिज्ञैः, निवेदितं तयोः कुशलवयोः रूपे आकारे गीते च माधुर्य्यं

ददर्श सानुजो रामः शुश्राव च कुतूहली ॥ ६५ ॥
तद्गीतश्रवणैकाग्रा संसदश्रुमुखी बभौ ।
हिमनिष्यन्दिनी प्रात र्निर्वातेव वनस्थली ॥ ६६ ॥
वयोवेशविसंवादि रामस्य च तयो स्तदा ।
जनता प्रेक्ष्य सादृश्यं नाक्षिकम्पं व्यतिष्ठत ॥ ६७ ॥
उभयो र्न तथा लोकः प्रावीण्येन विसिस्मिये ।
नृपतेः प्रीतिदानेषु वीतस्पृहतया यथा ॥ ६८ ॥

रामणीयकं सानुजः रामः कुतूहली सानन्दः सन् यथा-संख्यं ददर्श शुश्राव च ॥ ६५ ॥

तदिति । तयोः गीतश्रवणे एकाग्रा आसक्ता अश्रुमुखी आनन्दात् इति भावः, संसत् सभा, प्रात हिमनिष्यन्दिनी निर्वाता वातरहिता वनस्थली इव, बभौ शुशुभे । आनन्द-पारवश्यान्निष्पन्द मास्ते इत्यर्थः ॥ ६६ ॥

वय इति । जनता जनानां समूहः । ग्रामजनबन्धुभ्यस्त-लिति तल्प्रत्ययः । वयोवेशाभ्यामेव विसंवादि विलक्षणं तदा तयोः रामस्य च सादृश्यं प्रेक्ष्य नास्ति अक्षिकम्पः यस्मिन् कर्म्मणि तत् यथा तथा । नञर्थस्य नशब्दस्य बहुव्रीहिः । व्यतिष्ठत अतिष्ठत् । समवप्रविभ्यः स्थ इत्यात्मनेपदम् । विस्मया-दनिमिष मद्राक्षीत् इत्यर्थः ॥ ६७ ॥

उभयोरिति । लोकः जनः उभयोः कुमारयोः प्रावीण्येन नैपुण्येन तथा न विसिस्मिये न विस्मितवान् यथा नृपतेः प्रीति-दानेषु वीतस्पृहतया नैस्पृहेण विसिस्मिये ॥ ६८ ॥

गेये को नु विनेता वां कस्य चेयं कृतिः कवेः ।
इति राज्ञा स्वयं पृष्टौ तौ वाल्मीकिमशंसताम् ॥६९॥
अथ सावरजो रामः प्राचेतसमुपेयिवान् ।
उरीकृत्यात्मनो देहं राज्यमस्मै न्यवेदयत् ॥ ७०॥
स तावाख्याय रामाय मैथिलेयौ तदात्मजौ ।
कविः कारुणिको वव्रे सीतायाः सम्परिग्रहम् ॥७१
तात शुद्धा समक्षं नः स्नुषा ते जातवेदसि ।

गेय इति । गेये गीते को नु वां युवयोः विनेता शिक्षकः ? नुशब्दः प्रश्ने । 'नु पृच्छायां वितर्के च" इत्यमरः । "गेये केन विनीतौ वाम्" इति पाठे वामिति युष्मदर्थप्रतिपादकमव्ययं द्रष्टव्यम् । तथाचायमर्थः, केन पुंसा वां युवां गेये विषये विनितौ शिक्षितौ ? कर्म्मणि निष्ठाप्रत्ययः । इयञ्च कस्य कवेः कृतिरिति राज्ञा स्वयं पृष्टौ तौ कुशलवौ वाल्मीकिम् अशंसताम् उक्तवन्तौ विनेतारं कविं च इत्यर्थः ॥ ६९ ॥

अथेति । अथ सावरजः रामः प्राचेतसं वाल्मीकिम् उपेयिवान् प्राप्तः सन् देहम् आत्मनः उरीकृत्य आत्मानं स्थापयित्वा इत्यर्थः राज्यम् अस्मै प्राचेतसाय न्यवेदयत् समर्पितवान् ॥ ७० ॥

स इति । करुणा प्रयोजनम् अस्य कारुणिकः दयालुः । प्रयोजनमिति ठञ् । "स्याद्दयालुः कारुणिकः" इत्यमरः । सः कविः रामाय तौ मैथिलेयौ तदात्मजौ रामसुतौ आख्याय सीतायाः सम्परिग्रहं स्वीकारं वव्रे ययाचे ॥ ७१ ॥

तातेति । हे तात ! ते स्नुषा नः अस्माकम् अक्ष्णोः समीपं

दौरात्म्या द्रक्षसस्तान्तु नाश्वस्ताः श्रद्दधुः प्रजाः ॥७२॥
ताः स्वचारित्र मुद्दिश्य प्रत्याययतु मैथिली ।
ततः पुत्त्रवती मेनां प्रतिपत्स्ये त्वदाज्ञया ॥ ७३ ॥
इति प्रतिश्रुते राज्ञा जानकी माश्रमा न्मुनिः ।
शिष्यै रानाययामास स्वसिद्धिं नियमै रिव ॥ ७४ ॥
अन्येद्युरथ काकुत्स्थः सन्निपात्य पुरौकसः ।
कवि माह्वाययामास प्रस्तुतप्रतिपत्तये ॥ ७५ ॥

समक्षम् । अव्ययीभावे शरत्प्रभृतिभ्य इति समासान्तष्टच् । जातवेदसि वह्नौ शुद्धा, नास्माकमविश्वासः इत्यर्थः । किन्तु रक्षसः रावणस्य दौरात्म्यात् अनाश्वस्ताः प्रजाः तां न श्रद्दधुः न विशश्वसुः ॥ ७२ ॥

ता इति । मैथिली स्वचारित्रम् उद्दिश्य ताः प्रजाः प्रत्याययतु विश्वासयतु । विश्वासस्य बुद्धिरूपत्वात् णौ गमिरबोधन इति इणो गम्यादेशो नास्ति । ततः अनन्तरं पुत्रवतीम् एनां सीतां त्वदाज्ञया प्रतिपत्स्ये स्वीकरिष्ये ॥ ७३ ॥

इतीति । राज्ञा इति प्रतिश्रुते सति मुनिः आश्रमात् जानकीं शिष्यैः प्रयोज्यैः, स्वसिद्धिं स्वार्थसिद्धिं नियमैः तपोभिः इव, आनाययामास ॥ ७४ ॥

अन्येद्युरिति । अथ काकुत्स्थः रामः अन्येद्युः अन्यस्मिन्नहनि प्रस्तुतप्रतिपत्तये प्रकृतकार्य्यानुसन्धानाय पुरौकसः पौरान् सन्निपात्य मेलयित्वा कविं वाल्मीकिम् आह्वाययामास आकारयामास ॥ ७५ ॥

स्वरसंस्कारवत्यासौ पुत्राभ्या मथ सीतया ।
ऋचेवोदर्च्चिषं सूर्य्यं रामं मुनि रुपस्थितः ॥ ७६ ॥
काषायपरिवीतेन स्वपदार्पितचक्षुषा ।
अन्वमीयत शुद्धेति शान्तेन वपुषैव सा ॥ ७७ ॥
जना स्तदालोकपथात् प्रतिसंहृतचक्षुषः ।
तस्थु स्तेऽवाङ्मुखाः सर्व्वे फलिता इव शालयः ॥७८॥
तां दृष्टिविषये भर्त्तु र्मुनि रास्थितविष्टरः ।
कुरु निःसंशयं वत्से स्ववृत्ते लोक मित्यशात् ॥ ७९ ॥

स्वरेति । अथ स्वरः उदात्तादिः संस्कारः शुद्धिः तद्वत्या ऋचा सावित्र्या उदर्च्चिषं सूर्य्यम् इव, पुत्राभ्याम् उपलक्षितया सीतया करणेन उदर्च्चिषं रामम् असौ मुनिः उपस्थितः उपतस्थे ॥ ७६ ॥

काषायेति । कषायेण रक्तं काषायम् । तेन रक्तं रागादित्यण् । तेन परिवीतेन संवृतेन स्वपदार्पितचक्षुषा शान्तेन प्रसन्नेन वपुषैव सा सीता शुद्धा साध्वीत्यन्वमीयत अनुमिता ॥७७॥

जना इति । तस्याः सीतायाः कर्मणः आलोकपथात् दर्शनमार्गात् प्रतिसंहृतचक्षुषः निवर्त्तितदृष्टयः सर्व्वे जनाः, फलिताः शालयः इव, अवाङ्मुखाः अवनतमुखाः तस्थुः ॥७८॥

तामिति । आस्थितविष्टरः अधिष्ठितासनः मुनिः हे वत्से! भर्त्तुः दृष्टिविषये समक्षं स्ववृत्ते स्वचरिते विषये लोकं निःसंशयं कुर्व्विति तां सीताम् अशात् शास्ति स्म ॥ ७९ ॥

अथ वाल्मीकिशिष्येण पुण्य मावर्ज्जितं पयः।
आचम्योदीरयामास सीता सत्यां सरस्वतीम् ॥ ८०॥
वाङ्मनः कर्म्मभिः पत्यौ व्यभिचारो यथा न मे।
तथा विश्वम्भरे देवि मा मन्तर्द्धातु मर्हसि॥ ८१ ॥
एवमुक्ते तया साध्व्या रन्ध्रात् सद्योभवा द्भुवः।
शातह्रद मिव ज्योतिः प्रभामण्डल मुद्ययौ ॥ ८२ ॥
तत्र नागफणोत्क्षिप्तसिंहासननिषेदुषी।
समुद्ररशना साक्षात् प्रादुरासी द्वसुन्धरा॥ ८३ ॥

अथेति। अथ वाल्मीकिशीष्येण आवर्ज्जितं दत्तं पुण्यं पयः आचम्य सीता सत्यां सरस्वतीं वाचम् उदीरयामास उच्चारयामास ॥ ८० ॥

वाङ्मन इति। वाङ्मनःकर्म्मभिः पत्यौ विषये मे व्यभिचारः स्खालित्यं न यथा नास्ति यदि तया तर्हि विश्वं विभर्त्तीति विश्वम्भरा भूमिः। संज्ञायां भृ तृ इत्यादिना खच् प्रत्ययः, अरुर्द्विषदित्यादिना मुमागमः। हे विश्वम्भरे! देवि! माम् अन्तर्द्धातुं गर्भे वासयितुम् अर्हसि ॥ ८१ ॥

एवमिति। साध्व्या पतिव्रतया तया सीतया एवम् उक्ते सति सद्योभवात् भुवः रन्ध्रात् शातह्रदं वैद्युतं ज्योतिः इव, प्रभामण्डलम् उदययौ ॥ ८२ ॥

तत्रेति। तत्र प्रभामण्डले नागफणोत्क्षिप्ते सिंहासने निषेदुषी आसीना समुद्ररशना समुद्रमेखला साक्षात् वसूनि धारयति इति वसुन्धरा भूमिः। खचि ह्रस्व इति ह्रस्वः। प्रादुरासीत् ॥ ८३ ॥

सा सीता मङ्क मारोप्य भर्त्तृप्रणिहितेक्षणाम्।
मामेति व्याहरत्येव तस्मिन् पाताल मभ्यगात्॥ ८४ ॥
धरायां तस्य संरम्भं सीताप्रत्यर्पणैषिणः।
गुरु र्विधिवलापेक्षी शमयामास धन्विनः ॥ ८५ ॥
ऋषीन् विसृज्य यज्ञान्ते सुहृदश्च पुरस्कृतान्।
रामः सीतागतं स्नेहं निदधे तदपत्ययोः ॥ ८६ ॥
युधाजितश्च सन्देशात् स देशं सिन्धुनामकम्।
ददौ दत्तप्रभावाय भरताय भृतप्रजः ॥ ८७ ॥

सेति। सा वसुन्धरा भर्त्तरि प्रणिहितेक्षणां दत्तदृष्टिं सीताम् अङ्कम् आरोप्य तस्मिन् भर्त्तरि मामेति व्याहरति वदत्येव व्याहरन्त मनादृत्य इत्यर्थः। षष्ठी चानादरे इति सप्तमी। पातालम् अभ्यगात्॥ ८४ ॥

धरायामिति। सीताप्रत्यर्पणम् इच्छति इति तथोक्तस्य धन्विनः आत्तधनुषः तस्य रामस्य धरायां विषये संरम्भं विधिवलापेक्षी दैवशक्तिदर्शी गुरुः ब्रह्मा शमयामास, अवश्यम्भावी विधिः इति भावः॥ ८५ ॥

ऋषीनिति। रामः यज्ञान्ते पुरस्कृतान् पूजितान् ऋषीन् सुहृदश्च विसृज्य सीतागतं स्नेहं तदपत्ययोः कुशलवयोः निदधे॥ ८६ ॥

युधाजित इति। किञ्च, भृतप्रजः सः रामः युधाजितः भरतमातुलस्य सन्देशात् सिन्धुनामकं देशं दत्तप्रभावाय दत्तैश्वर्याय रामेण इति शेषः भरताय ददौ॥ ८७ ॥

भरतस्तत्र गन्धर्व्वान् युधि निर्जित्य केवलम्।
आतोद्यं ग्राहयामास समत्याजय दायुधम् ॥ ८८ ॥
स तक्षपुष्कलौ पुत्रौ राजधान्यो स्तदाख्ययोः।
अभिषिच्याभिषेकार्हौ रामान्तिक मगात् पुनः॥ ८९॥
अङ्गदं चन्द्रकेतुञ्च लक्ष्मणोऽप्यात्मसम्भवौ।
शासनाद् रघुनाथस्य चक्रे कारपथेश्वरौ ॥ ९० ॥
इत्यारोपितपुत्रा स्ते जननीनां जनेश्वराः।
भर्तृलोकप्रपन्नानां निवापान् विदधुः क्रमात् ॥ ९१॥

भरत इति। तत्र सिन्धुदेशे भरतः युधि गन्धर्वान् निर्जित्य केवलम् एकम् आतोद्यं वीणां ग्राहयामास आयुधं समत्याजयत्। ग्रहित्यज्योरण्यन्तयोर्द्विकर्म्मकत्वं नित्यमित्यनुसन्धेयम् ॥ ८८ ॥

स इति। सः भरतः अभिषेकार्हौ तक्षपुष्कलौ नाम पुत्रौ तदाख्ययोः तक्षपुष्कलाख्ययोः इत्यर्थः। पुष्कलं पुष्कलावत्यां तक्षकं तक्षशिलायाम् इति राजधान्योः नगर्य्योः अभिषिच्य पुनः रामान्तिकम् अगात् ॥ ८९ ॥

अङ्गदमिति। लक्ष्मणयोः अपि रघुनाथस्य रामस्य शासनात् अङ्गदं चन्द्रकेतुं च तदाख्यौ आत्मसम्भवौ पुत्रौ कारापथः नाम देशः तस्य ईश्वरौ चक्रे ॥ ९० ॥

इतीति। इति आरोपितपुत्राः ते जनेश्वराः रामादयः भर्तृलोकप्रपन्नानां जननीनां क्रमात् निवापान् श्राद्धादीन् विदधुः चक्रुः ॥ ९१ ॥

उपेत्य मुनिवेशोऽथ कालः प्रोवाच राघवम्।
रहःसंवादिनौ पश्ये द्वावां य स्तं त्यजेरिति ॥ ९२॥
तथेति प्रतिपन्नाय विवृतात्मा नृपाय सः।
आचख्यौ दिव मध्यास्व शासनात् परमेष्ठिनः ॥९३॥
विद्वानपि तयो र्द्वाःस्थः समयं लक्ष्मणोऽभिनत्।
भीतो दुर्वासस: शापा द्रामसन्दर्शनार्थिनः ॥ ९४॥
स गत्वा सरयूतीरं देहत्यागेन योगवित्।
चकाराविततथां भ्रातुः प्रतिज्ञां पूर्व्वजन्मनः ॥ ९५ ॥

उपेत्येति। अथ कालः अन्तकः मुनिवेशः सन् उपेत्य राघवं प्रोवाच। किम् इत्याह, रहसि एकान्ते संवादिनौ सम्भाषिणौ आवां यः पश्येत् रहस्य-भङ्गं कुर्य्यात् इत्यर्थः, तं त्यजेः इति ॥ ९२ ॥

तथेति। सः कालः तथेति प्रतिपन्नाय नृपाय रामाय विवृतात्मा प्रकाशितनिजरूपः सन् परमेष्ठिनः ब्रह्मणः शासनात् दिवमध्यास्वेति आचख्यौ ॥ ९३ ॥

विद्वानिति। द्वाःस्थः द्वारि नियुक्तः लक्ष्मणः विद्वान् अपि पूर्व्वश्लोकोक्तं जानन्नपि रामसन्दर्शनार्थिनः दुर्व्वाससः मुनेः शापात् भीतः सन् तयोः कालरामयोः समयं संवादम् अभिनत् विभेद ॥ ९४ ॥

स इति। योगवित् योगमार्गवेदी सः लक्ष्मणः सरयूतीरं गत्वा देहत्यागेन पूर्व्वजन्मनः भ्रातुः प्रतिज्ञाम् अवितथां सत्यां चकार ॥ ९५ ॥

तस्मिन्नात्मचतुर्भागे प्राङ्नाकमधितस्थुषि ।
राघवः शिथिलं तस्थौ भुवि धर्म्मस्त्रिपादिव ॥ ८६॥
स निवेश्य कुशावत्यां रिपुनागाङ्कुशं कुशम् ।
शरावत्यां सतां सूक्तै र्जनिताश्रुलवं लवम् ॥ ८७ ॥
उदक् प्रतस्थे स्थिरधीः सानुजोऽग्निपुरःसरः ।
अन्वितः पतिवात्सल्याद् गृहवर्ज्जमयोध्यया ॥ ८८ ॥

तस्मिन्निति । चतुर्थः भागः चतुर्भागः । संख्याशब्दस्य वृत्तिविषये पूरणार्थत्वं शतांशवत् । आत्मचतुर्भागे तस्मिन् लक्ष्मणे प्राक् नाकम् अधितस्थुषि पूर्व्वं स्वर्गं जग्मुषि सति राघव रामः, भुवि त्रिपात् धर्म्मः इव, शिथिलं तस्थौ । पादविकलो हि शिथिलं तिष्ठति इति भावः । त्रेतायां धर्म्मस्त्रिपादित्याहुः । पादः चतुर्थांशः अङ्घ्रिश्च ध्वन्यते । "पादा रश्म्यङ्घ्रितूर्य्यांशाः" इत्यमरः । त्रयः पादाः यस्य असौ त्रिपात् । संख्यासु पूर्व्वस्येत्यकारलोपः समासान्तः ॥ ८६ ॥

स इति । उदगिति । युग्मम् । स्थिरधीः सः रामः, रिपवः एव नागाः गजाः तेषाम् अङ्कुशं निवारकं कुशं कुशावत्यां पुर्य्यां निवेश्य स्थापयित्वा, सूक्तैः समीचीनवचनैः सतां जनिताः अश्रुलवाः अश्रुलेशाः येन तं लवं लवाख्यं पुत्त्रम् । "लवो लेशे विलासे च छेदने रामनन्दने" इति विश्वः । शरावत्यां पुर्य्यां । शरादीनाञ्चेति शरकुशयोः दीर्घः । निवेश्य, सानुजः अग्निपुरःसरः सन् पत्यौ भर्त्तरि वात्सल्यात् अनुरागात् गृहान् वर्ज्जयित्वा गृहवर्ज्जम् । द्वितीयायाञ्चेति णमुल् । अयं क्वचिदपरीप्सायामपि इष्यते, अनुदात्तं पदमेकवर्ज्जमित्येकाचः शेष-

जगृहु स्तस्य चित्तज्ञाः पदवीं हरिराक्षसाः ।
कदम्बमुकुलस्थूलै रभिवृष्टां प्रजाश्रुभिः ॥ ९९ ॥
उपस्थितविमानेन तेन भक्तानुकम्पिना ।
चक्रे त्रिदिव निःश्रेणिः सरयू रनुयायिनाम् ॥ १००॥
यद्गोप्रतरकल्पोऽभूत् संमर्द्द स्तत्र मज्जताम् ।
अत स्तदाख्यया तीर्थं पावनं भुवि पप्रथे ॥ १०१ ॥
स विभु र्विबुधांशेषु प्रतिपन्नात्ममूर्त्तिषु ।
त्रिदशीभूतपौराणां स्वर्गान्तर मकल्पयत् ॥ १०२ ॥

तया व्याख्यातत्वात् । परीप्सा त्वरा । अयोध्यया अन्वितः अनुगतः उदक् प्रतस्थे ॥ ९७ ॥ ९८ ॥

जगृहुरिति । चित्तज्ञाः हरिराक्षसाः कदम्बमुकुलस्थूलैः प्रजाश्रुभिः अभिवृष्टां तस्य रामस्य पदवीं जगृहुः ते ऽप्यनुजग्मुः इत्यर्थः ॥ ९९ ॥

उपस्थितेति । उपस्थितं प्राप्तं विमानं यस्य तेन भक्तान् अनुकम्पते इति भक्तानुकम्पिना तेन रामेण अनुयायिनां सरयूः त्रिदिवनिःश्रेणिः स्वर्गाधिरोहणी चक्रे । "निःश्रेणिस्त्वधिरोहणी" इत्यमरः ॥ १०० ॥

यदिति । यत् यस्मात् तत्र सरय्वां मज्जतां संमर्द्दः गोप्रतरः गोप्रतरणं तत्कल्पः अभूत् अतः तदाख्यया गोप्रतराख्यया पावनं शोधकं तीर्थं भुवि पप्रथे ॥ १०१ ॥

स इति । विभुः प्रभुः सः रामः विबुधानाम् अंशेषु सुग्रीवादिषु प्रतिपन्नात्ममूर्त्तिषु सत्सु त्रिदशीभूता देवभुवनं गताः ये पौराः तेषां नूतनसुराणां स्वर्गान्तरम् अकल्पयत् ॥ १०२ ॥

निर्वर्त्यैवं दशमुखशिरश्छेदकार्य्यं सुराणां
विष्वक्सेनः स्वतनु मविशत् सर्व्वलोकप्रतिष्ठाम् ।
लङ्कानाथं पवनतनयं चोभयं स्थापयित्वा
कीर्त्तिस्तम्भद्वय मिव गिरौ दक्षिणे चोत्तरे च ॥ १०३॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ
श्रीरामस्वर्गारोहणो नाम
पञ्चदशः सर्गः ।

---

निर्वर्त्त्येति । विष्वक्सेनः विष्णुः एवं सुराणां दशमुख-शिरश्छेदकार्य्यं निवर्त्त्य निष्पाद्य, लङ्कानाथं विभीषणं पवनतनयं हनुमन्तं चोभयं, कीर्त्तिस्तम्भद्वयम् इव, दक्षिणे गिरौ चित्रकूटे च उत्तरे गिरौ हिमवति च स्थापयित्वा, सर्व्वलोकप्रतिष्ठां सर्व्व-लोकाश्रयभूतां स्वतनुं स्वमूर्त्तिम् अविशत् ॥ १०३ ॥

इति श्रीमहामहोपाध्याय-कोलाचलमल्लिनाथसूरि-विरचितायां
रघुवंशटीकायां सञ्जीवनीसमाख्यायां पञ्चदशः सर्गः ॥१५॥

---

# षोड़शः सर्गः

—०—

अथेतरे सप्त रघुप्रवीरा
ज्येष्ठं पुरोजन्मतया गुणैश्च ।
चक्रुः कुशं रत्नविशेषभाजं
सौभ्रात्रमेषां हि कुलानुसारी ॥ १ ॥
ते सेतुवार्त्तागजबन्धमुख्यै
रभ्युच्छ्रिताः कर्म्मभि रप्यवन्ध्यैः ।

वृन्दारका यस्य भवन्ति भृङ्गा मन्दाकिनी यन्मकरन्दविन्दुः ।
तवारविन्दाच्च पदारविन्दं वन्दे चतुर्वर्गचतुष्पदं तत् ॥

अथेति । अथ रामनिर्वाणानन्तरम् इतरे लवादयः सप्त रघूप्रवीराः पुरः पूर्व्वं जन्म यस्य तस्य भावः तत्ता तया गुणैश्च ज्येष्ठं कुशं रत्नविशेषभाजं तच्छ्रेष्ठवस्तुभागिनं चक्रुः । तदुक्तम्, "जातौ जातौ यदुत्कृष्टं तद्रत्न मभिधीयते ।" इति । तथाहि, सुभ्रातृणां भावः सौभ्रात्रम् । हायनान्तेत्यादिना युवादित्वा-दण्प्रत्ययः । एषां कुशलवादीनां कुलानुसारि वंशानुगतं हि ॥ १ ॥

त इति । सेतुः जलबन्धः, वार्त्ता कृषिगोरक्षणादिः । "वार्त्ता कृष्याद्युदन्तयोः" इति विश्वः । गजबन्धः आकरेभ्यः गजग्रहणम्, ते मुख्यं प्रधानं येषां तैः अवन्ध्यैः सफलैः कर्म्मभिः अभ्युच्छ्रिताः अतिसमर्था अपि इत्यर्थः ते कुशादयः प्रविभज्यन्ते इति प्रविभागाः अन्योन्यदेशप्रविभागानां या सीमा ताम्,वेलां समुद्राः इव, न व्यतीयुः नातिचक्रमुः । अत्र कामन्दकः ।

अन्योन्यदेशप्रविभागसीमां
वेलां समुद्रा इव न व्यतीयुः ॥ २ ॥
चतुर्भुजांशप्रभवः स तेषां
दानप्रवृत्ते रनुपारतानाम्।
सुरद्विपाना मिव सामयोनि
र्भिन्नो ऽष्टधा विप्रससार वंशः ॥ ३ ॥
अथार्द्धरात्रे स्तिमितप्रदीपे
शय्यागृहे सुप्तजने प्रबुद्धः।

"कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम्। खन्याकरधनादानं शून्यानाञ्च निवेशनम्। अष्टवर्ग मिमं साधुः स्वयं वृद्धोऽपि वर्द्धयेत्॥" इति ॥ २ ॥

चतुर्भुजेति। चतुर्भुजः विष्णुः तस्य अंशाः रामादयः ते प्रभवाः कारणानि यस्य सः तथोक्तः, दानं त्यागः मदश्च। "दानं गजमदे त्यागे" इति विश्वः। प्रवृत्तिः व्यापारः प्रवाहश्च दानप्रवृत्तेः अनुपारतानां तेषां कुशलवादीनां सः वंशः, सामयोनिः सामवेदप्रभवः दानप्रवृत्तेः अनुपारतानां सुरद्विपानां दिग्गजानां वंशः इव, अष्टधा भिन्नः विप्रससार विस्तृतः अभूत्। सामयोनिरित्यत्र पालकाप्यः। "सूर्य्यस्याण्डकपाले द्वे समानीय प्रजापतिः। हस्ताभ्यां परिगृह्याथ सप्त सामान्यगायत। गायतो ब्रह्मणस्तस्मात् समुत्पेतु र्मतङ्गजाः॥" इति ॥ ३ ॥

अथेति। अथ, अर्द्धं रात्रेः अर्द्धरात्रः। अर्द्धं नपुंसकमित्येकदेशसमासः, अहः सर्व्वैकदेशसंख्यातपुण्याच्च रात्रेरिति

कुशः प्रवासस्थकलत्रवेशा
मदृष्टपूर्व्वां वनिता मपश्यत् ॥ ४ ॥
सा साधुसाधारणपार्थिवर्द्धेः
स्थित्वा पुरस्तात् पुरुहूतभासः ।
जेतुः परेषां जयशब्दपुर्व्वं
तस्याञ्जलिं बन्धुमतो बबन्ध ॥ ५ ॥
अथानपोढार्गल मप्यगारं
छाया मिवादर्शतलं प्रविष्टाम् ।
सविस्मयो दाशरथे स्तनूजः
प्रोवाच पूर्व्वार्द्धविसृष्टतल्पः ॥ ६ ॥

समासान्तोऽच्प्रत्ययः, रात्राह्नाहाः पुंसि इति नियमात् पुंस्त्वम् । अर्द्धरात्रे निशीथे स्तिमितप्रदीपे सुप्तजने शय्यागृहे प्रबुद्धः न तु सुप्तः कुशः प्रवासस्थकलत्रवेशां प्रोषितभर्त्तृकावेशाम् अदृष्टा पूर्व्वम् इत्यदृष्टपूर्व्वा ताम् । सहसुपेति समासः । वनिताम् अपश्यत् ॥ ४ ॥

सेति । सा वनिता साधुसाधारणपार्थिवर्द्धेः सज्जनसाधारणराज्यश्रियः पुरुहूतभासः इन्द्रतेजसः परेषां शत्रूणां जेतुः बन्धुमतः तस्य कुशस्य पुरस्तात् स्थित्वा जयशब्दपूर्व्वं यथा तथा अञ्जलिं बबन्ध ॥ ५ ॥

अथेति । अथ सविस्मयः पूर्व्वार्द्धेन शरीरपूर्व्वभागेण विसृष्टतल्पः त्यक्तशय्यः दाशरथेः तनूजः कुशः अनपोढार्गलम् अनुद्घाटितविष्कम्भम् अपि । "तद्विष्कम्भोऽर्गलं न ना", इत्यमरः ।

लब्धान्तरा सावरणेऽपि गेहे
योगप्रभावो नच लक्ष्यते ते ।
बिभर्षि चाकार मनिर्वृतानां
मृणालिनी हैम मिवोपरागम् ॥ ७ ॥
का त्वं शुभे कस्य परिग्रहो वा
किं वा मदभ्यागमकारणं ते ।
आचक्ष्व मत्वा वशिनां रघूणां
मनः परस्त्रीविमुखप्रवृत्ति ॥ ८ ॥
त मब्रवीत् सा गुरुणा नवद्या
या नीतपौरा स्वपदोन्मुखेन ।

अगारम्, आदर्शतलं छायाम् इव, प्रविष्टां तां वनितां प्रोवाच अवदत् ॥ ६ ॥

लब्धेति । का त्वमिति युग्मकम् । सावरणे अपि गेहे लब्धान्तरा लब्धावकाशा त्वम् इति शेषः, योगप्रभावश्च ते न लक्ष्यते, मृणालिनी हैमं हिमकृतम् उपरागम् उपद्रवम् इव, अनिर्वृतानां दुःखितानाम् आकारं बिभर्षि च, नहि योगिनां दुःखमस्ति इति भावः । किञ्च, हे शुभे, ! त्वं का ? कस्य वा परिग्रहः पत्नी ? ते तव मदभ्यागमे कारणं वा किम् ? वशिनां जितेन्द्रियाणां रघूणां मनः परस्त्रीषु विषये विमुखा प्रवृत्तिः यस्य तत् तथाभूतं मत्वा आचक्ष्व ॥ ७ ॥ ८ ॥

तमिति । सा वनिता तं कुशम् अब्रवीत्, अनवद्या अदोषा या पूः स्वपदोन्मुखेन विष्णुपदोन्मुखेन गुरुणा त्वत्पित्रा नीत-

तस्याः पुरः सम्प्रति वीतनाथां
जानीहि राजन्नधिदेवतां माम् ॥ ९ ॥
वस्वौकसारामभिभूय साहं
सौराज्यबद्धोत्सवया विभूत्या ।
समग्रशक्तौ त्वयि सूर्य्यवंश्ये
सति प्रपन्ना करुणामवस्थाम् ॥ १० ॥
विशीर्णतल्पाट्टशतो निवेशः
पर्य्यस्तशालः प्रभुणा विना मे ।

पौरा, हे राजन्! मां सम्प्रति वीतनाथाम् अनाथां तस्याः पुरः नगर्य्याः अयोध्यायाः अधिदेवतां जानीहि ॥ ९ ॥

वस्वौकसारामिति । सा अहं सौराज्येन राजन्वत्तया हेतुना बद्धोत्सवया विभूत्या वस्वौकसारा अलका पुरी । "अलका पुरी वस्वौकसारा स्यात्" इति कोषः । अथवा मानसोत्तरशैलशिखर-वर्त्तिनी शक्रनगरी, "वस्वौकसारा शक्रस्य" इति विष्णुपुराणात्। ताम् अभिभूय तिरस्कृत्य समग्रशक्तौ त्वयि सूर्य्यवंश्ये सति करुणाम् अवस्थां दीनां दशां प्रपन्ना प्राप्ता ॥ १० ॥

विशीर्णेति । तल्पानि अट्टालिकाः । "तल्पं शय्याट्टदारेषु" इत्यमरः । अट्टानि गृहभेदाः । "अट्टं भक्ते च शुष्के च क्षौमे-ऽत्यर्थे गृहान्तरे" इति विश्वः । विशीर्णानि तल्पानाम् अट्टानाञ्च शतानि यस्य सः तथोक्तः । अथवा विशीर्णकल्पेति पाठः, अट्टाः क्षौमाः । "स्यादट्टः क्षौममस्त्रियाम्" इत्यमरः । ईषत् असमाप्तं विशीर्णानि विशीर्णकल्पानि अट्टशतानि यस्य सः

विडम्बयत्यस्तनिमग्नसूर्य्यं
दिनान्तमुग्रानिलभिन्नमेघम् ॥ ११ ॥
निशासु भास्वत्कलनूपुराणां
यः सञ्चरोऽभूदभिसारिकाणाम् ।
नदन्मुखोल्काविचितामिषाभिः
स वाह्यते राजपथः शिवाभिः ॥ १२ ॥
आस्फालितं यत् प्रमदाकराग्रै
र्मृदङ्गधीरध्वनिमन्वगच्छत् ।

तथोक्तः पर्य्यस्तशालः स्रस्तप्राकारः। "प्राकारो वरणः शालः" इत्यमरः। प्रभुणा स्वामिना विना एवंभूतः मे निवेशः निवेशनम् अस्तनिमग्नसूर्य्यम् अस्ताद्रिलीनार्कम् उग्रानिलेन भिन्नमेघं दिनान्तं विडम्बयति अनुकरोति ॥ ११ ॥

निशास्विति। निशासु भास्वन्ति दीप्तिमन्ति कलानि अव्यक्तमधुराणि नूपुराणि यासां तासाम् अभिसारिकाणाम्। "कान्तार्थिनी तु या याति सङ्केतं साभिसारिका" इत्यमरः। यः राजपथः, सञ्चरत्यनेनेति सञ्चरः सञ्चारसाधनम् अभूत्। गोचरसञ्चरेत्यादिना घप्रत्ययान्तो निपातः। नदत्सु मुखेषु याः उल्काः ताभिः विचितामिषाभिः अन्विष्टमांसाभिः शिवाभिः क्रोष्टोभिः सः वाह्यते गम्यते ॥ १२ ॥

आस्फालितमिति। यत् अम्भः प्रमदाकराग्रैः आस्फालितं ताड़ितं सत् जलक्रीड़ासु इति शेषः मृदङ्गानां यः धीरध्वनिः तम् अन्वगच्छन् अन्वकरोत्, तत् दीर्घिकाणाम् अम्भः इदानीं

दन्यैरिदानीं महिषैस्तदम्भः
शृङ्गाहतं क्रोशति दीर्घिकाणाम् ॥ १३ ॥
वृक्षेशया यष्टिनिवासभङ्गात्
मृदङ्गशब्दापगमादलास्याः ।
प्राप्ता दवोल्काहतशेषवर्हाः
क्रीड़ामयूरा वनवर्हिणत्वम् ॥ १४ ॥
सोपानमार्गेषु च येषु रामाः
निक्षिप्तवत्यश्चरणान् सरागान् ।
सद्यो हतन्यङ्कुभिरस्रदिग्धं
व्याघ्रैः पदं तेषु निधीयते मे १५ ॥

वन्यः महिषैः कर्तृभिः शृङ्गैः विषाणैः आहतं सत् क्रोशति न तु मृदङ्गध्वनि मनुकरोति इत्यर्थः ॥ १३ ॥

वृक्षेशया इति । यष्टिरेव निवासः स्थानं तस्य भङ्गात् वृक्षे शेरते इति वृक्षेशयाः । अधिकरणे शेते रित्यच्प्रत्ययः, शयवासवासिष्वकालादित्यलुक् सप्तम्याः । मृदङ्गशब्दानाम् अपगमात् अभावादलास्याः नृत्यशून्याः दवः अरण्यवह्निः । "दवदावौ वनारण्यवह्नी "इत्यमरः । तस्य उल्काभिः स्फुलिङ्गैः हतेभ्यः शेषाणि वर्हाणि येषां ते क्रीड़ामयूराः वनवर्हिणत्वं प्राप्ताः ॥ १४ ॥

सोपानेति । किञ्च, येषु सोपानमार्गेषु रामाः रमण्यः सरागान् लाक्षारसार्द्रान् चरणान् निक्षिप्तवत्यः, तेषु मे मम मार्गेषु अद्य सद्यः हतन्यङ्कुभिः मारितमृगैः व्याघ्रैः अस्रदिग्धं रुधिरलिप्तं पदं निधीयते ॥ १५ ॥

चित्रद्विपाः पद्मवनावतीर्णाः
करेणुभिर्दत्तमृणालभङ्गाः ।
नखाङ्कुशाघातविभिन्नकुम्भाः
संरब्धसिंहप्रहृतं वहन्ति ॥ १६ ॥

स्तम्भेषु योषित्प्रतियातनाना
मुत्क्रान्तवर्णक्रमधूसराणाम् ।
स्तनोत्तरीयाणि भवन्ति सङ्गा
न्निर्मोकपट्टाः फणिभिर्विमुक्ताः ॥ १७ ॥

कालान्तरश्यामसुधेषु नक्त
मितस्ततो रूढतृणाङ्कुरेषु ।

चित्रेति । पद्मवनम् अवतीर्णाः प्रविष्टाः तथा लिखिताः इत्यर्थः करेणुभिः करिणीभिः चित्रगताभिरेव । "करेणुरिभ्यां स्त्री नेभे" इत्यमरः । दत्तमृणालभङ्गाः चित्रद्विपाः आलेख्य-मातङ्गाः नखाः एव अङ्कुशाः तेषाम् आघातैः विभिन्नकुम्भाः सन्तः संरब्धसिंहप्रहृतं कुपितसिंहप्रहारं वहन्ति ॥ १६ ॥

स्तम्भेष्विति । उत्क्रान्तवर्णक्रमाः विशीर्णवर्णविन्यासाः ताश्च धूसराश्च याः तासां स्तम्भेषु योषित्प्रतियातनानां स्त्रीप्रतिकृतीनां दारुमयीणां फणिभिः विमुक्ताः निर्मोकाः कञ्चुकाः एव पट्टाः । "समौ कञ्चुकनिर्मोकौ" इत्यमरः । सङ्गात् सक्तत्वात् स्तनोत्तरी-याणि स्तनाच्छादनवस्त्राणि भवन्ति ॥ १७ ॥

कालेति । कालान्तरेण कालभेदवशेन श्यामसुधेषु मलिन-चूर्णेषु इतस्ततः रूढतृणाङ्कुरेषु हर्म्येषु गृहेषु नक्तं रात्रौ मुक्ता-

त एव मुक्तागुणशुद्धयोऽपि
हर्म्येषु मूर्च्छन्ति न चन्द्रपादाः ॥ १८ ॥

आवर्ज्य शाखाः सदयञ्च यासां
पुष्पाण्युपात्तानि विलासिनीभिः ।
वन्यैः पुलिन्दैरिव वानरैस्ताः
क्लिश्यन्त उद्यानलता मदीयाः ॥ १९ ॥

रात्रावनाविष्कृतदीपभासः
कान्तामुखश्रीवियुता दिवापि ।
तिरस्क्रियन्ते कृमितन्तुजालैः
विच्छिन्नधूमप्रसरा गवाक्षाः ॥ २० ॥

गुणानां शुद्धिरिव शुद्धिः स्वाच्छ्यं येषां तादृशाः अपि ततः पूर्व्वं ये मूर्च्छन्ति स्म ते एव चन्द्रपादाः चन्द्ररश्मयः । "पादा रश्म्यङ्घ्रितूर्य्यांशाः" इत्यमरः । न मूर्च्छन्ति न प्रतिफलन्ति इत्यर्थः ॥ १८ ॥

आवर्ज्येति । किञ्च विलासिनिभिः सदयं शाखाः लतावयवान् आवर्ज्य आनमय्य यासां लतानां पुष्पाणि उपात्तानि गृहीतानि ताः मदीयाः उद्यानलताः, वन्यैः पुलिन्दैः म्लेच्छविशेषैः इव वानरैः उभयैः इत्यर्थः, क्लिश्यन्ते पीड्यन्ते क्लिश्नातेः कर्म्मणि लट् । "भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः" इत्यमरः ॥ १९ ॥

रात्राविति । रात्रौ अनाविष्कृतदीपभासः दीपप्रभाशून्याः इत्यर्थः दिवापि दिवसेऽपि कान्तामुखानां श्रिया कान्त्या वियुताः रहिताः विच्छिन्नः नष्टः धूमप्रसरः येषां ते गवाक्षाः

बलिक्रियावर्ज्जितसैकतानि
स्नानीयसंसर्गमनाप्नुवन्ति ।
उपान्तवानीरगृहाणि दृष्ट्वा
शून्यानि दूये सरयूजलानि ॥ २१ ॥
तदर्हसीमां वसतिं विसृज्य
मामभ्युपेतुं कुलराजधानीम् ।
हित्वा तनुं कारणमानुषीं तां
यथा गुरुस्ते परमात्ममूर्त्तिम् ॥ २२ ॥
तथेति तस्याः प्रणयं प्रतीतः
प्रत्यग्रहीत् प्राग्रहरो रघूणाम् ।

क्रमितन्तुजालैः लूतातन्तुवितानैः तिरस्क्रियन्ते छाद्यन्ते ॥२०॥

बलिक्रियेति । "बलिः पूजोपहारः स्यात्" इति शाश्वतः । बलिक्रियावर्ज्जितानि सैकतानि येषां तानि स्नानीयानि स्नानसाधनानि चूर्णादीनि । कृत्यल्युटो बहुलमिति करणे अनीयर्प्रत्ययः । स्नानीयसंसर्गम् अनाप्नुवन्ति सरयूजलानि शून्यानि रिक्तानि उपान्तेषु वानीरगृहानि येषां तानि च दृष्ट्वा दूये परितप्ये ॥ २१ ॥

तदिति । तत् तस्मात् इमां वसतिं कुशावतीं विसृज्य कुलराजधानीम् अयोध्यां माम् अभ्युपेतुम् अर्हसि । कथमिव ? ते गुरुः पिता रामः तां प्रसिद्धां कारणवशात् मानुषीं तनुं मानुषमूर्त्तिं हित्वा परमात्ममूर्त्तिं यथा विष्णुमूर्त्तिम् इव ॥ २२ ॥

तथेति । रघूणां प्राग्रहरः श्रेष्ठः कुशः तस्याः पुरः प्रणयं

पूरप्यभिव्यक्तमुखप्रसादा
शरीरबन्धेन तिरोबभूव ॥ २३ ॥
तदद्भुतं संसदि रात्रिवृत्तं
प्रातर्द्विजेभ्यो नृपतिः शशंस ।
श्रुत्वा त एनं कुलराजधान्या
साक्षात् पतित्वे वृतमभ्यनन्दन् ॥ २४ ॥
कुशावतीं श्रोत्रियसात् स कृत्वा
यात्रानुकूलेऽहनि सावरोधः ।

याच्ञां प्रतीतः हृष्टः सन् तथेति प्रत्यग्रहीत् स्वीकृतवान् । पूः पुराधिदेवता अपि अभिव्यक्तमुखप्रसादा सती इष्टलाभात् इति भावः । शरीरबन्धेन शरीरयोगेन करणेन तिरोबभूव अन्तर्दधे । मानवं रूपं विहाय दैवं रूप मग्रहीत् इत्यर्थः ॥ २३ ॥

तदिति । नृपतिः कुशः तत् अद्भुतं रात्रिवृत्तं रात्रिवृत्तान्तं प्रातः संसदि सभायां द्विजेभ्यः शशंस ते द्विजाः श्रुत्वा एनं कुशं कुलराजधान्या साक्षात् स्वयमेव पतित्वे विषये वृतम् अभ्यनन्दन् पतित्वेन वृतोऽसि इति अपूजयन् आशीर्भिः इति शेषः । अत्र गार्ग्यः, "दृष्ट्वा स्वप्नं शोभनं नैव सुप्यात् पश्चाद् दृष्टो यः स पाकं विधत्ते । शंसेदिष्टं तत्र साधुर्द्विजेभ्यः ते चाशीर्भिः प्रीणयेयु र्नरेन्द्रम् ।" इदमपि स्वप्नतुल्यमिति ॥ २४ ॥

कुशावतीमिति । सः कुशः, कुशावतीं श्रोत्रियेषु छान्दसेषु अधीनां श्रोत्रियसात् । तदधीनवचन इति सातिप्रत्ययः, श्रोत्रियञ्छन्दोऽधीते इति निपातः । "श्रोत्रियच्छान्दसौ समौ"

अनुद्रुतो वायुरिवाभ्रवृन्दैः
सैन्यैरयोध्याभिमुखः प्रतस्थे ॥ २५ ॥
सा केतुमालोपवना वृहद्भिः
विहारशैलानुगतेव नागैः ।
सेना रथोदारगृहा प्रयाणे
तस्या भवज्जङ्गमराजधानी ॥ २६ ॥
तेनातपत्नामलमण्डलेन
प्रस्थापितः पूर्व्वनिवासभूमिम् ।
बभौ बलौघः शशिनोदितेन
वेलामुदन्वानिव नीयमानः ॥ २७ ॥

इत्यमरः । कृत्वा यात्रानुकूले अहनि सावरोधः सान्तः पुरः सन्, वायुः अभ्रवृन्दैः इव, सैन्यैः अनुद्रुतः अनुगतः सन् अयोध्याभिमुखः प्रतस्थे ॥ २५ ॥

सेति । केतुमालाः एव उपवनानि यस्याः सा वृहद्भिः नागैः गजैः विहारशैलैः क्रीड़ाशैलैः अनुगता इव स्थिता रथाः एव उदारगृहाः यस्याः सा सा सेना तस्य कुशस्य प्रयाणे, जङ्गमराजधानी सञ्चारिणी नगरी इव, अभवत् बभूव ॥ २६ ॥

तेनेति । आतपत्नमेव अमलं मण्डलं विम्बं यस्य तेन तेन कुशेन पूर्व्वनिवासभूमिम् अयोध्यां प्रस्थापितः बलौघः आतपत्नवत् अमलमण्डलेन, उदितेन शशिना वेलां नीयमानः प्राप्यमाणः उदकमस्यास्तीति उदन्वान् उदधिः इव, बभौ । उदन्वानुदधौ च इति निपातनात् साधुः ॥ २७ ॥

तस्य प्रयातस्य वरूथिनीनां
पीड़ामपर्य्याप्तवतीव सोढुम् ।
वसुन्धरा विष्णुपदं द्वितीय
मध्यारुरोहेव रजश्छलेन ॥ २८ ॥

उद्यच्छमाना गमनाय पश्चात्
पुरो निवेशे पथि च व्रजन्ती ।
सा यत्र सेना ददृशे नृपस्य
तत्रैव सामग्र्यमतिं चकार ॥ २९ ॥

तस्य द्विपानां मदवारिसेकात्
खुराभिघाताच्च तुरङ्गमाणाम् ।

तस्येति । प्रयातस्य प्रस्थितस्य तस्य कुशस्य वरूथिनीनां सेनानां कर्त्रीणाम् । कर्तृकर्म्मणोः कृतीति कर्त्तरि षष्ठी । पीड़ां सोढुम् अपर्य्याप्तवती इव अशक्ता इव वसुन्धरा रजश्छलेन द्वितीयं विष्णुपदम् आकाशम् अध्यारुरोहेव इत्युत्प्रेक्षा ॥ २८ ॥

उद्यच्छमानेति । पश्चात् कुशावत्याः सकाशात् गमनाय प्रयाणाय तथा पुरः अग्रे निवेशे निमित्ते निविष्टुञ्च इत्यर्थः उद्यच्छमाना उद्योगं कुर्व्वती । समुदाङ्भ्यो यमोऽग्रन्थे इत्यात्मनेपदम् । पथि च व्रजन्ती नृपस्य कुशस्य सा सेना यत्र पश्चात् पुरः मध्ये वा ददृशे तत्रैव सामग्रमतिं कृत्स्नताबुद्धिं चकार, अपरिमिता तस्य सेना इत्यर्थः ॥ २९ ॥

तस्येति । नेतुः तस्य कुशस्य द्विपानां मदवारिभिः सेकात्

रेणुः प्रपेदे पथि पङ्कभावं
पङ्कोऽपि रेणुत्व मियाय नेतुः ॥ ३० ॥

मार्गैषिणी सा कटकान्तरेषु
वैन्ध्येषु सेना बहुधा विभिन्ना।
चकार रेवेव महाविरावा
बद्धप्रतिश्रुन्ति गुहामुखानि ॥ ३१ ॥

स धातुभेदारुणयाननेमिः
प्रभुः प्रयाणध्वनिमिश्रतूर्य्यः।
व्यलङ्घयद् विन्ध्यम् उपायनानि
पश्यन् पुलिन्दै रुपपादितानि ॥ ३२ ॥

तुरङ्गमाणां खुराभिघातश्च यथासंख्यं पथि रेणुः रजः पङ्कभावं पङ्कतां प्रपेदे पङ्कः अपि रेणुत्वम् इयाय ॥ ३० ॥

मार्गेति। वैन्ध्येषु विन्ध्यसम्बन्धिषु कटकान्तरेषु नितम्बावकाशेषु। "कटकोऽस्त्री नितम्बोऽद्रेः" इत्यमरः। मार्गैषिणी मार्गावलोकिनी अत एव बहुधा विभिन्ना महाविरावा दीर्घशब्दा सा सेना, रेवा इव नर्म्मदा इव। "रेवा तु नर्म्मदा सोमोद्भवा मेखलकन्यका" इत्यमरः। गुहामुखानि बद्धप्रतिश्रुन्ति प्रतिध्वानवन्ति चकार अकरोत् ॥ ३१ ॥

स इति। धातूनां गैरिकादीनां भेदेन अरुणा याननेमिः रथचक्रधारा यस्य प्रयाणे ये ध्वनयः पटहढक्कादयः तन्मिश्राणि तूर्य्याणि यस्य एवंविधः सः प्रभुः कुशः पुलिन्दैः किरातैः उपपादितानि समर्पितानि उपायनानि पश्यन् विन्ध्यं व्यलङ्घयत् ॥ ३२

तीर्थे तदीये गजसेतुबन्धात्
प्रतीपगा मुत्तरतोऽस्य गङ्गाम् ।
अयत्नबालव्यजनीबभुवु
र्हंसा नभोलङ्घनलोलपक्षाः ॥ ३३ ॥

स पूर्व्वजानां कपिलेन रोषाद्
भस्मावशेषीकृतविग्रहाणाम् ।
सुरालयप्राप्तिनिमित्त मम्भ
स्त्रैस्रोतसं नौलुलितं ववन्दे ॥ ३४ ॥

इत्यध्वनः कैश्चि दहोभि रन्ते
कूलं समासाद्य कुशः सरय्वाः ।
वेदिप्रतिष्ठान् वितताध्वराणां
यूपा नपश्य च्छतशो रघूणाम् ॥ ३५ ॥

तीर्थ इति । तदीये वैन्ध्ये तीर्थे अवतारे गजाः एव सेतुः तस्य बन्धाद्धेतोः प्रतीपगां पश्चिमवाहिनीं गङ्गाम् उत्तरतः अस्य कुशस्य नभोलङ्घनेन लोलपक्षाः हंसाः अयत्नेन बालव्यजनीबभुवुः चामराण्यभुवन् । अभूततद्भावे च्विः ॥ ३३ ॥

स इति । सः कुशः कपिलेन मुनिना रोषात् भस्मावशेषीकृताः विग्रहाः देहाः येषां तेषां पूर्व्वजानां वृद्धानां सागराणां सुरालयस्य स्वर्गस्य प्राप्तौ निमित्तं नौभिः लुलितं क्षुभितं त्रिस्रोतसः इदं त्रैस्रोतसं गाङ्गम् अम्भः ववन्दे ॥ ३४ ॥

इतीति । इति कैश्चित् अहोभिः अध्वनः अन्ते अवसाने कुशः सरय्वाः कूलं समासा द्यविततावराणां विस्तृतमखानां

आधूय शाखाः कुसुमद्रुमाणां
स्पृष्ट्वा च शीतान् सरयूतरङ्गान्।
तं क्लान्तसैन्यं कुलराजधान्याः
प्रत्युज्जगामोपवनान्तवायुः॥ ३६॥

अथोपशल्ये रिपुमग्नशल्य
स्तस्याः पुरः पौरसखः स राजा।
कुलध्वज स्तानि चलध्वजानि
निवेशयामास वली वलानि॥ ३७॥

तां शिल्पिसङ्घाः प्रभुणा नियुक्ता
स्तथागतां सम्भृतसाधनत्वात्।

रघूणां वेदिः प्रतिष्ठा आसदं येषां तान् यूपान् शतशः अपश्यत्॥ २५॥

आधूयेति। कुलराजधान्याः उपवनान्तवायुः कुसुमद्रुमाणां शाखाः आधूय ईषत् धूत्वा, सुरभिर्मन्दश्चेत्यर्थः, शीतान् सरयूतरङ्गान् च स्पृष्ट्वा, अनेन शैत्योक्तिः, क्लान्तसैन्यं तं कुशं प्रत्युज्जगाम॥ ३६॥

अथेति। अथ रिपुषु मग्नं शल्यं शङ्कुः शरा वा यस्य सः। "शल्यं शङ्कौ शरे वंशे" इति विश्वः। पौराणां सखा पौरसखः कुशस्य ध्वजः चिह्नभूतः वली सः राजा चलाः चलन्तः वा ध्वजाः येषां तानि तानि वलानि सैन्यानि तस्याः पुरः पुर्य्याः उपशल्ये ग्रामान्ते। "ग्रामान्त उपशल्यं स्यात्" इत्यमरः। निवेशयामास॥ ३७॥

पुरं नवीचक्रुरपां विसर्गा
न्मेघा निदाघग्लपितामिवोर्व्वीम् ॥ ३८ ॥
ततः सपर्य्यां सपशूपहारां
पुरः परार्द्ध्यप्रतिमागृहायाः ।
उपोषितैर्वास्तुविधानविद्भि
र्निर्वर्त्तयामास रघुप्रवीरः ॥ ३९ ॥
तस्याः स राजोपपदं निशान्तं
कामीव कान्ताहृदयं प्रविश्य ।

तामिति । प्रभुणा नियुक्ताः शिल्पिनां तक्षादीनां सङ्घाः सम्भृतसाधनत्वात् मिलितोपकरणत्वात्, तां तथागतां शून्याम् इत्यर्थः पुरमयोध्यां मेघाः अपां विसर्गाज्जलसेकात् निदाघग्लपितां ग्रीष्मतप्तामुर्व्वीमिव, नवीचक्रुः परिपूरयाञ्चक्रुः ॥ ३८ ॥

तत इति । ततः रघुप्रवीरः कुशः प्रतिमाः देवताप्रतिष्ठातयः अर्च्चाः इत्यर्थः परार्द्ध्यप्रतिमागृहायाः प्रशस्तदेवतायतनायाः पुरः उपोषितैः वास्तुविधानविद्भिः प्रयोज्यैः पशूपहारैः सहितां सपशूपहारां सपर्य्यां निर्वर्त्तयामास कारयामास । अत्र ख्यन्तात् पुरणच् नित्यनुसन्धेयम् अन्यथा वृतेरकर्म्मकस्य करोत्यर्थत्वे कारयत्यर्थाभावप्रसङ्गात् भवितव्यं वृतेरख्यन्तकर्त्ता प्रयोज्यत्वेन तन्निर्देशात् प्रयोगान्तरस्यापेक्षिकत्वात् ॥ ३९ ॥

तस्या इति । सः कुशः तस्याः पुरः सम्बन्धि राजोपपदं राजशब्दपूर्व्वं निशान्तं राजभवनम् इत्यर्थः । "निशान्तं भवनोषसोः" इति विश्वः । कामी कान्ताहृदयम् इव, प्रविश्य अन्यैः

यथार्हमन्यैरनुजीविलोकं
सम्भावयामास यथाप्रधानम् ॥ ४० ॥
सा मन्दुरासंश्रयिभि स्तुरङ्गैः
शालाविधिस्तम्भगतैश्च नागैः।
पूरावभासे विपणिस्थपण्या
सर्व्वाङ्गनद्धाभरणेव नारी ॥ ४१ ॥
वसन् स तस्यां वसतौ रघूणां
पुराणशोभामधिरोपितायाम्।
न मैथिलेयः स्पृहयाम्बभूव
भर्त्रे दिवो नाप्यलकेश्वराय ॥ ४२ ॥

निशान्तैः अनुजीविलोकम् अमात्यादिकं यथाप्रधानं मान्यानुसारेण यथार्हं यथोचितं तत्तदुचितगृहैः इत्यर्थः सम्भावयामास ॥ ४० ॥

सेति। विपणिस्थानि पण्यानि क्रयविक्रयार्हवस्तूनि यस्याः सा। "विपणिः पण्यवीथिका" इत्यमरः। सा पूः अयोध्या मन्दुरा संश्रयिभिः अश्वशालासंश्रयशीलैः। "वाजिशाला तु मन्दुरा" इत्यमरः। जिदृक्षीत्यादिना इनिप्रत्ययः। तुरङ्गैः अश्वैः शालासु गृहेषु ये विधिना स्थापिताः स्तम्भाः तान् गतैः प्राप्तैः नागैश्च, सर्व्वाङ्गेषु नद्धानि आभरणानि यस्याः सा नारी इव, आवभासे ॥ ४१ ॥

वसन्निति। सः मैथिलेयः कुशः पुराणशोभां पूर्व्वशोभाम् अधिरोपितायां तस्यां रघूणां वसतौ अयोध्यायां वसन् दिवः भर्त्रे

अथास्य रत्नग्रथितोत्तरीय

मेकान्तपाण्डुस्तनलम्बिहारम् ।

निःश्वासहार्य्यांशुक माजगाम

धर्म्मः प्रियावेश मिवोपदेष्टुम् ॥ ४३ ॥

अगस्त्यचिह्ना दयनात् समीपं

दिगुत्तरा भास्वति सन्निवृत्ते ।

आनन्दशीता मिव वाष्पवृष्टिं

हिमस्रुतिं हैमवतीं ससर्ज्ज ॥ ४४ ॥

देवेन्द्राय तथा अलकेश्वराय कुवेराय अपि न स्पृहयाम्बभूव तावपि न गणयामास इत्यर्थः । स्पृहेरीप्सित इति सम्प्रदानत्वा-च्चतुर्थी । एतेनायोध्याया अन्यनगरातिशयित्वं गम्यते ॥ ४२ ॥

कुशस्य कुमुद्वतीसङ्गमं प्रस्तौति, अथेति । अथ अस्य कुशस्य रत्नैः मुक्तामणिभिः ग्रथितानि उत्तरीयाणि यस्मिन् तम् एकान्तम् अत्यन्तं पाण्डोः स्तनयोः लम्बिनः हाराः यस्मिन् तं निःश्वासहार्य्याणि अतिसूक्ष्माणि अंशुकानि यत्र तम् एवं शीतलप्रायं प्रियायाः वेषं नेपथ्य मुपदेष्टु मिव धर्म्मो ग्रीष्म आजगाम ॥ ४३ ॥

अगस्त्येति । अगस्त्यः चिह्नं यस्य तस्मात् अयनात् मार्गात् दक्षिणायनात् भास्वति समीपं सन्निवृत्ते सति उत्तरा दिक्, आनन्दशीतां वाष्पवृष्टिम् इव, हैमवतीं हिमवत्सम्बन्धिनीं हिमस्रुतिं हिमनिष्यन्दं ससर्ज्ज । अत्र प्रोषितप्रियासमागम-समाधिर्गम्यते ॥ ४४ ॥

प्रवृद्धतापो दिवसोऽतिमात्र
मत्यर्थ मेव चणदा च तन्वी।
उभौ विरोधक्रियया विभिन्नौ
जायापती सानुशया विवास्ताम्॥ ४५॥
दिने दिने शैवलवन्त्यधस्तात्
सोपानपर्व्वाणि विमुञ्च दम्भः।
उद्दण्डपद्मं गृहदीर्घिकाणां
नारीनितम्बद्वयसं बभूव॥ ४६॥
वनेषु सायन्तनमल्लिकानां
विजृम्भणोद्गन्धिषु कुड्मलेषु।

प्रवृद्धेति। अतिमात्रं प्रवृद्धतापः दिवसः अत्यर्थमेव तन्वी कृशा चणदा च इत्येतौ उभौ, विरोधक्रियया प्रणयकलहादिना विरोधाचरणेन विभिन्नौ सानुशयौ सानुतापौ जायापती दम्पती इव, आस्तां, तयोरपि तापकार्श्यसम्भवात् तत्सदृशौ व भूताम् इत्यर्थः॥ ४५॥

दिने दिने इति। दिने दिने प्रतिदिनं शैवलवन्ति अधस्तात् यानि सोपानानां पर्वाणि भङ्गः तानि विमुञ्चत् अत एव उद्दण्डपद्मं गृहदीर्घिकाणाम् अम्भः नारीनितम्बः प्रमाणम् अस्य नारीनितम्बद्वयसं बभूव विहारयोग्यमभूत् इत्यर्थः प्रमाणे द्वयसजिति द्वयसच्प्रत्ययः॥ ४६॥

वनेष्विति। वनेषु विजृम्भणेन विकाशेन उद्गन्धिषु उत्कटसौरभेषु। गन्धस्येत्यादिना समासान्त इकारादेशः। सायन्तनः

प्रत्येकनिक्षिप्तपदः सशब्दं
संख्या मिवैषां भ्रमर श्चकार ॥ ४७ ॥
स्वेदानुविद्धार्द्रनखक्षताङ्के
भूयिष्ठसन्दष्टशिखं कपोले।
च्युतं न कर्णा दपि कामिनीनां
शिरीषपुष्पं सहसा पपात ॥ ४८ ॥
यन्त्रप्रवाहैः शिशिरैः परीतान्
रसेन धौतान् मलयोद्भवस्य।
शिलाविशेषानधिशय्य निन्यु
र्धारागृहेष्वातप मृद्धिमन्तः ॥ ४९ ॥

मल्लिकानां कुड्मलेषु सशब्दं यथा तथा प्रत्येकम् एकैकस्मिन् निक्षिप्तपदो मकरन्दलोभात् इत्यर्थः भ्रमरः एषां कुड्मलानां संख्यां गणनां चकार इव ॥ ४७ ॥

स्वेदेति। स्वेदानुविद्धम् आर्द्रं नूतनं नखक्षतम् अङ्कः यस्य तस्मिन् कामिनीनां कपोले भूयिष्ठम् अत्यर्थं सन्दष्टशिखं संश्लिष्ट-केशरम् अत एव कर्णात् च्युतम् अपि शिरीषपुष्पं सहसा न पपात ॥ ४८ ॥

यन्त्रेति। ऋद्धिमन्तः धनिकाः धारागृहेषु यन्त्रधारा-गृहेषु शिशिरैः यन्त्रप्रवाहैः यन्त्रसञ्चारितसलिलपूरैः परीतान् व्याप्तान् मलयोद्भवस्य रसेन चन्दनोदकेन धौतान् क्षालितान् शिलाविशेषान् मणिमयासनानि अधिशय्य तेषु शयित्वा आतपं निन्युः आतपपरिहारं चक्रुः ॥ ४९ ॥

स्नानार्द्रमुक्तेष्वनुधूपवासं
विन्यस्तसायन्तनमल्लिकेषु ।
कामो वसन्तात्ययमन्दवीर्य्यः
केशेषु लेभे बलमङ्गनानाम् ॥ ५० ॥

आपिञ्जरा बद्धरजःकणत्वा-
न्मञ्जर्युदारा शुशुभेऽर्ज्जुनस्य ।
दग्ध्वापि देहं गिरिशेन रोषात्
खण्डीकृता ज्येव मनोभवस्य ॥ ५१ ॥

मनोज्ञगन्धं सहकारभङ्गं
पुराणशीधुं नवपाटलञ्च ।

स्नानेति । वसन्तस्य आत्मसहकारिणः अत्ययेन अतिक्रमेण मन्दवीर्य्यः अतिदुर्बलः कामः स्नानार्द्राश्च ते मुक्ताश्च धूपसञ्चारणार्थम् इत्यर्थः । तेषु अनुधूपवासं धूपवासानन्तरं विन्यस्ताः सायन्तनमल्लिकाः येषु तेषु अङ्गनानां केशेषु बलं लेभे तैरुद्दीपितः इत्यर्थः ॥ ५० ॥

आपिञ्जरेति । बद्धरजःकणत्वात् व्याप्तरजःकणत्वात् आपिञ्जरा उदारा द्राघीयसी अर्ज्जुनस्य ककुभवृक्षस्य । "इन्द्रद्रुः ककुभोऽर्ज्जुनः" इत्यमरः । मञ्जरी देहं दग्ध्वापि रोषात् गिरिशेन गिरिरस्यास्य निवासत्वेन गिरिशः तेन । लोमादित्वात् शप्रत्ययः । गिरौ शेते इति विग्रहे तु गिरौ शेतेर्ड इत्यस्य छन्दसि विधानात् लोके प्रयोगानुपपत्तिः स्यात् तस्मात् पूर्व्वोक्तमेव विग्रहवाक्यं न्याय्यम् । खण्डीकृता मनोभवस्य ज्या मौर्व्वी इव शुशुभे ॥ ५१ ॥

सम्बध्नता कामिजनेषु दोषाः
सर्व्वे निदाघावधिना प्रमृष्टाः ॥ ५२ ॥

जनस्य तस्मिन् समये विगाढ़े
बभूवतु र्द्वौ सविशेषकान्तौ ।
तापापनोदक्षमपादसेवौ
स चोदयस्थौ नृपतिः शशी च ॥ ५३ ॥

अथोर्म्मिलोलोन्मदराजहंसे
रोधोलतापुष्पवहे सरय्वाः ।

मनोज्ञेति। मनोज्ञगन्धमिति सर्व्वत्र सम्बध्यते सहकारभङ्गं चूतपल्लवखण्डं पुराणं वासितं शेरते अनेनेति शीधुः इक्षुरसप्रकृतिकः सुराविशेषः तम् । शीङो धुक् इत्युणादिसूत्रेण शीङ् स्वप्ने इत्यस्माद्धातोर्धुक्प्रत्ययः । "पक्वैरिक्षुरसैरस्तो शीधुः पक्वरसः शिवः" इति यादवः । नवं पाटलायाः पुष्पं पाटलञ्च सम्बध्नता सङ्घटयता निदाघावधिना ग्रीष्मकालेन । "अवधिस्त्ववधाने स्यात् सीम्नि काले बिलेऽपि च" इति विश्वः । कामिजनेषु विषये सर्व्वे दोषाः तापादयः प्रमृष्टाः परिहृताः ॥ ५२॥

जनस्येति। तस्मिन् समये ग्रीष्मे विगाढ़े कठिने सति जनस्य द्वौ सविशेषं सातिशयं यथा तथा कान्तौ बभूवतुः । कौ द्वौ ? तापापनोदे क्षमा योग्या पादयोः अङ्घ्रोः पादानां रश्मीनाञ्च सेवा ययोः तौ उदयस्थौ अभ्युदयस्थौ सः च नृपतिः शशी च ॥ ५३ ॥

अथेति । अथ ऊर्म्मिषु लोलाः सतृष्णाः उन्मदाः राजहंसाः

विहर्त्तुमिच्छा वनितासखस्य
तस्याम्भसि ग्रीष्मसुखे बभूव ॥ ५४ ॥
स तीरभूमौ विहितोपकार्य्या-
मानायिभिस्तामपकृष्टनक्राम्।
विगाहितुं श्रीमहिमानुरूपं
प्रचक्रमे चक्रधरप्रभावः ॥ ५५ ॥
सा तीरसोपानपथावतारा
दन्योन्यकेयूरविघट्टिनीभिः ।

यस्मिन् तस्मिन् । "लीलयलसत्दृणयोः" इत्यमरः । रोधोलता-पुष्पाणां वहे प्रापके । पचाद्यच् । ग्रीष्मेषु सुखे सुखकरे सरय्वाः अम्भसि पयसि तस्य । वनितासखस्य वनिताभिः सह इत्यर्थः विहर्त्तुम् इच्छा बभूव ॥ ५४ ॥

स इति । चक्रधरप्रभावः विष्णुतेजाः सः कुशः तीरभूमौ विहिता उपकार्य्या यस्याः ताम् आनायः जालमेषामस्तीति आनायिनः जालिकाः । जालमानाय इति निपातः । "आनायः पुंसि जालं स्यात्" इत्यमरः । तैः अपकृष्टनक्राम् अपनीतग्राहां तां सरयूं श्रीमहिम्नोः सम्पत्प्रभावयोः अनुरूपं योग्यं यथा तथा विगाहितुं प्रचक्रमे । अत्र कामन्दकः, "परितापिषु वासरेषु पश्यन् तटलेखास्थितमाप्तसैन्यचक्रम् । सुविशोधितनक्रमीनजालं व्यवगाहेत जलं सुहृत्समेतः॥" इति॥५५

सेति । सा सरित् सरयूः तीरसोपानपथेन अवतारात् अवतरणात् अन्योन्यं केयूरविघट्टिनीभिः सनूपुरक्षोभपदाभि-

स नूपुरक्षोभपदाभिरासी-
दुद्विग्नहंसः सरिदङ्गनाभिः ॥ ५६ ॥

परस्पराभ्युक्षणतत्पराणां
तासां नृपो मज्जनरागदर्शी ।
नौसंश्रयः पार्श्वगतां किराती-
मुपात्तबालव्यजनां बभाषे ॥ ५७ ॥

पश्यावरोधैः शतशो मदीयै-
र्विगाह्यमानो गलिताङ्गरागैः ।
सन्ध्योदयः साभ्र इवैष वर्णं
पुष्यत्यनेकं सरयूप्रवाहः ॥ ५८ ॥

ताभिः सनूपुरक्षोभाणि सनूपुरस्खलनानि पदानि यासां ताभिः अङ्गनाभिः हेतुभिः उद्विग्नहंसः भीतहंसः आसीत् ॥ ५६ ॥

परस्परेति । नौसंश्रयः परस्परम् अभ्युक्षणे सेचने तत्पराणाम् आसक्तानां तासां स्त्रीणां मज्जने रागः अभिलाषः तद्दर्शी नृपः पार्श्वगताम् उपात्तबालव्यजनां गृहीतचामरां किरातीं चामरग्राहिणीं बभाषे । "किरात स्तथा स्त्रियां चामरवाहिन्यां मत्स्यजात्यन्तरे द्वयोः" इति केशवः ॥ ५७ ॥

पश्येति । गलिताङ्गरागैः मदीयैः शतशः अवरोधैः विगाह्यमानः विलोड्यमानः एषः सरयूप्रवाहः, साभ्रः समेघः सन्ध्योदयः सन्ध्याविर्भावः इव, अनेकं नानाविधं वर्णं रक्तपीतादिकं पुष्यति पश्य । वाक्यार्थः कर्म ॥ ५८ ॥

विलुप्त मन्तःपुरसुन्दरीणां
यदञ्जनं नौ लुलिताभि रद्भिः ।
तद्बध्नतीभि र्मदरागशोभां
विलोचनेषु प्रतिमुक्तमासाम् ॥ ५८ ॥
एता गुरुश्रोणिपयोधरत्वा-
दात्मान मुद्वोढु मशक्नुवत्यः ।
गाढ़ाङ्गदै र्बाहुभि रप्सु वालाः
क्लेशोत्तरं रागवशात् प्लवन्ते ॥ ६० ॥
अमी शिरीषप्रसवावतंसाः
प्रभ्रंशिनो वारिविहारिणीनाम् ।

विलुप्तमिति । नौलुलिताभिः नौक्षुभिताभिः अद्भिः अन्तः पुरसुन्दरीणां यत् अञ्जनं कज्जलं विलुप्तं हृतं तत् अञ्जनं विलोचनेषु नयनेषु मदेन या रागशोभा तां बध्नतीभिः घटयन्तीभिः अद्भिः आसां प्रतिमुक्तं प्रत्यर्पितम् । प्रतिनिधिदानमपि तत्कार्य्यकारित्वात् प्रत्यर्पणमेव इति भावः ॥ ५८ ॥

एता इति । गुरु दुर्वहं श्रोणिपयोधरं यस्यात्मनः इति विग्रहः । गुरुश्रोणिपयोधरत्वात् आत्मानं शरीरम् उद्वोढुम् अशक्नुवत्यः एताः बालाः गाढ़ाङ्गदैः श्लिष्टाङ्गदैः बाहुभिः क्लेशोत्तरं दुःखप्रायं यथा तथा रागवशात् क्रीड़ाभिनिवेशपारतन्त्र्यात् प्लवन्ते तरन्ति ॥ ६० ॥

अमी इति । वारिविहारिणीनाम् आसां अभ्रंशिनः भ्रष्टाः निम्नगायाः स्रोतसि पारिप्लवाः चञ्चलाः । "चञ्चलं

पारिप्लवाः स्रोतसि निम्नगायाः
शैवाललोलान् छलयन्ति मीनान् ॥ ६१ ॥
आसां जलास्फालनतत्पराणां
मुक्ताफलस्पर्द्धिषु शीकरेषु ।
पयोधरोत्सर्पिषु शीर्य्यमाणः
संलच्यते न च्छिदुरोऽपि हारः ॥ ६२ ॥
आवर्त्तशोभा नतनाभिकान्ते
र्भङ्गो भ्रुवां द्वन्द्वचरास्तनानाम् ।

तरलश्चैव पारिप्लवपरिप्लवे" इत्यमरः । अमी शिरीषप्रसवाः एव अवतंसाः कर्णभूषाः शैवाललोलान् जलनीलीप्रियान् । "जलनीली तु शैवालम्" इत्यमरः । मीनान् छलयन्ति प्रादुर्भावयन्ति, शैवालप्रियत्वात् शिरीषेषु शैवालभ्रमात् प्रादुर्भवन्ति इत्यर्थः ॥ ६१ ॥

आसामिति । जलस्य आस्फालने तत्पराणाम् आसक्तानाम् आसां स्त्रीणां मुक्ताफलस्पर्द्धिषु मौक्तिकानुकारिषु पयोधरेषु स्तनेषु उत्सर्पन्ति उत्पतन्ति ये तेषु शीकरेषु शीकराणां मध्ये शीर्य्यमाणः गलन् हारः अत एव छिदुरः स्वयं छिन्नोऽपि न संलच्यते । विदिभिदिच्छिदेःकुरजिति कुरच्प्रत्ययः । शीकरसंसर्गात् छिन्न इति न ज्ञायते इति भावः ॥ ६२ ॥

आवर्त्तेति । विलासिनीनां विलसनशीलानां स्त्रीणाम् । वौ कषलसंकत्यस्रम्भ इति विनुण्प्रत्ययः । रूपावयवानाम् उपमेयानां यानि उपमानानि लोकप्रसिद्धानि तानि अदूर-

जातानि रूपावयवोपमाना-
न्यदूरवर्त्तीनि विलासिनीनाम् ॥ ६३ ॥
तीरस्थलीबर्हिभि रुत्कलापैः
प्रस्निग्धकेकै रभिनन्द्यमानम्।
श्रोत्रेषु संमूर्च्छति रक्तमासां
गीतानुगं वारिमृदङ्गवाद्यम् ॥ ६४ ॥
सन्दष्टवस्त्रेष्वबलानितम्बे-
ष्विन्दुप्रकाशान्तरितोड़ुतुल्याः।
अमी जलापूरितसूत्रमार्गा
मौनं भजन्ते रशनाकलापाः ॥ ६५ ॥

वर्त्तीनि अन्तिकगतानि जातानि। कस्य किमुपमानमित्यत्नाह, नतनाभिकान्तिः निम्ननाभिशोभायाः आवर्त्तशोभा। "स्यादावर्त्तोऽम्भसां भ्रमः" इत्यमरः। भ्रुवां भङ्गः, तरङ्गः स्तनानां द्वन्द्वचराः चक्रवाकाः, उपमानमिति सर्व्वत्र सम्बध्यते ॥ ६३ ॥

तीरेति। उत्कलापैः उद्बर्हैः प्रस्निग्धाः मधुराः केकाः येषां तैः तीरस्थलीषु स्थितैः बर्हिभिः मयूरैः अभिनन्द्यमानं रक्तं श्राव्यं गीतानुगं गीतानुसारि आसां स्त्रीणां सम्बन्धि वारि एव मृदङ्गः तस्य वाद्यं वाद्यध्वनिः श्रोत्रेषु संमूर्च्छति व्याप्नोति॥ ६४

सन्दष्टेति। सन्दष्टवस्त्रेषु जलसेकात् संश्लिष्टांशुकेषु अबलानां नितम्बेषु अधिकरणेषु इन्दुप्रकाशेन ज्योत्स्नया अन्तरितानि आहतानि यानि उड़ूनि नक्षत्राणि तत्तुल्याः मुक्तामयत्वात् इति भावः, अमी जलापूरितसूत्रमार्गाः निश्चलाः

एताः करोत्पीडितवारिधारा-
दर्पात् सखीभि र्वदनेषु सिक्ताः।
वक्रेतराग्रै रलकै स्तरुण्य-
श्चूर्णारुणान् वारिलवान् वमन्ति ॥ ६६ ॥

उद्बन्धकेश श्च्युतपत्रलेखो
विश्लेषिमुक्ताफलपत्रवेष्टः।
मनोज्ञ एव प्रमदा मुखाना-
मम्भोविहाराकुलितोऽपि वेशः ॥ ६७ ॥

स नौविमाना दवतीर्य्य रेमे
विलोलहारः सह ताभि रप्सु।

इत्यर्थः रशनाः एव कलापाः भूषाः। "कलापो भूषणे बर्हे" इत्यमरः। मौनं निःशब्दताम् इत्यर्थः भजन्ति ॥ ६५ ॥

एता इति। दर्पात् सखीजनं प्रति करैः उत्पीडिताः उत्सारिताः वारिधाराः याभिः ताः स्वयमपि पुनस्तथैव सखीभि वदनेषु सिक्ताः एताः तरुण्यः वक्रेतराग्रैः जलसेकात् ऋज्वग्रैः अलकैः करणैः चूर्णैः कुङ्कुमादिभिः अरुणान् वारिलवान् उदकविन्दून् वमन्ति वर्षन्ति ॥ ६६ ॥

उद्बन्धेति। उद्बन्धाः उद्भ्रष्टाः केशाः यस्मिन् सः च्युतपत्रलेखः च्युतपत्ररचनः विश्लेषिणः विस्रंसिनः मुक्ताफलपत्रवेष्टाः मुक्तामयताडङ्काः यस्मिन् सः एवम् अम्भोविहाराकुलितः अपि प्रमदामुखानां वेशः नेपथ्यं मनोज्ञः एव। रम्याणां विकृतिरपि श्रियं तनोति इति भावः। ६७ ॥

स्कन्धावलग्नोद्धृतपद्मिनीकः
करेणुभि र्वन्य इव द्विपेन्द्रः ॥ ६८ ॥

ततो नृपेणानुगताः स्त्रिय स्ता
भ्राजिष्णुना सातिशयं विरेजुः ।
प्रागेव मुक्ता नयनाभिरामाः
प्राप्येन्द्रनीलं किमुतोन्मयूखम् ॥ ६९ ॥

वर्णोदकैः काञ्चनशृङ्गमुक्तै
स्त मायताक्ष्यः प्रणया दसिञ्चन् ।

स इति । सः कुशः नौः विमानम् इव नौविमानम्, उपमितिसमासः, तस्मात् अवतीर्य विलोलहारः सन् ताभिः स्त्रिभिः सह, करेणुभिः सह स्कन्धावलग्ना उद्धृतपद्मिनी उत्पाटिता नलिनी यस्य सः तथोक्तः सन् । नद्यृतश्चेति कप्रत्ययः । वन्यः द्विपेन्द्रः इव, अप्सु रेमे ॥ ६८ ॥

तत इति । ततः भ्राजिष्णुना प्रकाशनशीलेन । भुवश्चेति चकारादिष्णुच् । नृपेण अनुगताः सङ्गताः ताः स्त्रियः सातिशयं यथा तथा विरेजुः, प्रागेव इन्द्रनीलयोगात् पूर्व्वमेव केवला अपि इत्यर्थः, मुक्ताः मणयः नयनाभिरामाः उन्मयूखम् इन्द्रनीलं प्राप्य किमुत अभिरामा इति किमु वक्तव्यम् इत्यर्थः ॥ ६९ ॥

वर्णोदकैरिति । तं कुशम् आयताक्ष्यः काञ्चनस्य शृङ्गैः मुक्तानि तैः वर्णोदकैः कुङ्कुमादिवर्णद्रव्यसहितोदकैः प्रणयात् स्नेहात् असिञ्चन् तथागतः तथास्थितः वर्णोदकसिक्तः इत्यर्थः

तथागतः सोऽतितरां बभासे
सधातुनिष्यन्द इवाद्रिराजः ॥ ७० ॥
तेनावरोधप्रमदासखेन
विगाहमानेन सरिद्वरां ताम् ।
आकाशगङ्गारति रप्सरोभि
र्वृतो मरुत्वाननुयातलीलः ॥ ७१ ॥
यत् कुम्भयोने रधिगम्य रामः
कुशाय राज्येन समं दिदेश ।
तदस्य जैत्राभरणं विहर्त्तु
रज्ञातपातं सलिले ममज्ज ॥ ७२ ॥

सः कुशः, सधातुनिष्यन्दः गैरिकद्रव्ययुक्तः अद्रिराजः इव, अतितरां बभासे अत्यर्थं चकासे ॥ ७० ॥

तेनेति । अवरोधप्रमदासखेन अन्तःपुरसुन्दरीसहचरेण ता सरिद्वरां सरयूं विगाहमानेन तेन कुशेन आकाशगङ्गायां रतिः क्रीड़ा यस्य सः अप्सरोभिः वृतः आवृतः मरुत्वान् इन्द्रः अनुयातलीलः अनुकृतश्रीः अभूत् इति शेषः इन्द्र मनुकृतवान् इत्यर्थः ॥ ७१ ॥

यदिति । यत् आभरणं रामः कुम्भयोनेः अगस्त्यात् अधिगम्य प्राप्य कुशाय राज्येन समं दिदेश ददौ, राज्यसममूल्यम् इत्यर्थः, सलिले विहर्त्तुः क्रीड़ितुः अस्य कुशस्य तत् जैत्राभरणं जयशीलम् आभरणम् अज्ञातपातं सत् ममज्ज ॥ ७२ ॥

स्नात्वा यथाकाम मसौ सदार
स्तीरोपकार्य्यां गतमात्र एव ।
दिव्येन शून्यं वलयेन बाहु
मपोढ़नेपथ्यविधि र्द्ददर्श ॥ ७३ ॥

जयश्रियः संवननं यत स्त-
दामुक्तपूर्व्वं गुरुणा च यस्मात् ।
सेहेऽस्य न भ्रंशमतो न लोभात्
स तुल्यपुष्पाभरणो हि धीरः ॥ ७४ ॥

ततः समाज्ञापय दाशु सर्व्वा
नानायिन स्तद्विचये नदीष्णान् ।

स्नात्वेति । असौ कुशः सदारः सन् यथाकामं यथेच्छं स्नात्वा विगाह्य तीरे या उपकार्य्या पूर्व्वोक्ता तां गतमात्रः गतः एव अपोढ़नेपथ्यविधिः अकृतप्रसाधनः एव दिव्येन वलयेन शून्यं बाहु ददर्श ॥ ७३ ॥

जयेति । यतः कारणात् तत् आभरणं जयश्रियः संवननं वशीकरणम् ॥ "वलक्रिया संवननम्" इत्यमरः । यस्माच्च गुरुणा पित्रा आमुक्तपूर्व्वं पूर्व्वम् आमुक्तं धृतम् इत्यर्थः । सह सुपेति समासः । अतः हेतोः अस्य आभरणस्य भ्रंशं नाशं न सेहे लोभा न्न कुतः ? हि यस्मात् धीरः विद्वान् सः कुशः तुल्यानि पुष्पाणि आभरणानि च यस्य सः, पुष्पेष्विव आभरणेषु धृतेषु निर्माल्यवुद्धिं करोति इत्यर्थः ॥ ७४ ॥

तत इति । ततः नद्यां स्नान्ति कौशलेनेति नदीष्णाः

वन्ध्यश्रमा स्ते सरयूं विगाह्य
त मूचु रम्लानमुखप्रसादाः॥ ७५॥

कृतः प्रयत्नो न च देव लब्धं
मग्नं पयस्याभरणोत्तमं ते।
नागेन लौल्यात् कुमुदेन नून
मुपात्त मन्तर्ह्रदवासिना तत्॥ ७६॥

ततः स कृत्वा धनु राततज्यं
धनुर्द्धरः कोपविलोहिताक्षः।
गारुत्मतं तीरगत स्तरस्वी
भुजङ्गनाशाय समाददेऽस्त्रम्॥ ७७॥

तान्। सुपीति योगविभागात् कप्रत्ययः, निनदीभ्यां स्नातेः कौशल इति षत्वम्। सर्व्वान् आनायिनः जालिकान् तस्य आभरणस्य विचये अन्वेषणे निमित्ते आशु समाज्ञापयत् आदिदेश, ते आनायिनः सरयूं विगाह्य विलोड्य वन्ध्यश्रमाः विफलप्रयासाः तथापि तद्गतिं ज्ञात्वा अम्लानमुखप्रसादाः सश्रीकमुखाः सन्तः तं कुशम् ऊचुः॥ ७५॥

कृत इति। हे देव! प्रयत्नः कृतः पयसि मग्नं ते आभरणोत्तमं न च लब्धं किन्तु तत् आभरणम् अन्तर्ह्रदवासिना कुमुदेन कुमुदाख्येन नागेन पन्नगेन लौल्यात् लोभात् उपात्तं गृहीतं नूनमिति वितर्कः॥ ७६॥

तत इति। ततः धनुर्धरः कोपविलोहिताक्षः तरस्वी बलवान् सः कुशः तीरगतः सन् धनुः आततज्यम् अधिज्यं

तस्मिन् ह्रदः संहितमात्र एव
क्षोभात् समाविद्ध-तरङ्ग-हस्तः ।
रोधांसि निघ्नन्नवपातमग्नः
करीव वन्यः परुषं ररास ॥ ७८ ॥

तस्मात् समुद्रा दिव मथ्यमाना
दुद्वृत्तनक्रात् सहसोन्ममज्ज ।
लक्ष्म्येव सार्द्धं सुरराजवृक्षः
कन्यां पुरस्कृत्य भुजङ्गराजः ॥ ७९ ॥

विभूषणप्रत्युपहारहस्त
मुपस्थितं वीक्ष्य विशाम्पति स्तम् ।

कृत्वा भुजङ्गस्य कुमुदस्य नाशाय गारुत्मतं गरुत्मद्दैवताकम् अस्त्रं समादद्दे ॥ ७७ ॥

तस्मिन्निति । तस्मिन् अस्त्रे संहितमात्रे सत्येव ह्रदः क्षोभात् हेतोः समाविद्धाः सङ्घट्टिताः तरङ्गाः एव हस्ताः यस्य सः रोधांसि निघ्नन् पातयन्, अवपाते गजग्रहणगर्त्ते मग्नः पतितः । "अवपातस्तु हस्त्यर्थे गर्त्तश्छन्नस्तृणादिना" इति यादवः । वन्यः करो इव, परुषं घोरं ररास दध्वान ॥ ७८ ॥

तस्मादिति । मथ्यमानात् समुद्रादिव उद्वृत्तनक्रात् क्षुभितग्राहात् तस्मात् ह्रदात् लक्ष्म्या सार्द्धं सुरराजस्य इन्द्रस्य वृक्षः पारिजातः इव, कन्यां पुरस्कृत्य भुजङ्गराजः कुमुदः सहसा उन्ममज्ज ॥ ७९ ॥

विभूषणेति । विशाम्पतिः मनुजपतिः कुशः । "द्वौ विशौ

सौपर्ण मस्त्रं प्रतिसञ्जहार
प्रह्वेष्वनिर्बन्धरुषो हि सन्तः॥ ८० ॥
त्रैलोक्यनाथप्रभवं प्रभावात्
कुशं द्विषा मङ्कुश मस्त्रविद्वान्।
मानोन्नतेनाप्यभिनन्द्य मूर्द्ध्ना
मूर्द्धाभिषिक्तं कुमुदो बभाषे॥ ८१ ॥
अवैमि कार्य्यान्तरमानुषस्य
विष्णोः सुताख्या मपरां तनुं त्वाम्।

वैश्यमनुजौ" इत्यमरः। विभूषणं प्रत्युपहरति प्रत्यर्पयतीति विभूषणप्रत्युपहारः। कर्मण्यण्। विभूषणप्रत्युपहारः हस्तः यस्य तम् उपस्थितं प्राप्तं तं कुमुदं वीक्ष्य सौपर्णं गारुत्मतम् अस्त्रं प्रतिसंजहार। तथाहि, सन्तः प्रह्वेषु नम्रेषु अनिर्बन्धरुषः अनियतकोपाः हि॥ ८०॥

त्रैलोक्येति। अस्त्रं विद्वान् अस्त्रविद्वान्। न लोकेत्यादिना षष्ठीसमासनिषेधः। द्वितीयाश्रितेत्यत्र गम्यादीनामुपसंख्यानात् द्वितीयेति योगविभागाद्वा समासः। गारुडास्त्रमहिमाभिज्ञः इत्यर्थः, कुमुदः त्रयः लोकाः त्रैलोक्यम्। चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्प्रत्ययः। त्रैलोक्यनाथः रामः प्रभवः जनकः यस्य तम् अत एव प्रभावात् द्विषाम् अङ्कुशं निवारकं मूर्द्धाभिषिक्तं राजानं कुशं मानोन्नतेनापि मूर्द्ध्ना अभिवन्द्य प्रणम्य बभाषे॥ ८१॥

अवैमीति। त्वाम्, ओदनान्तरस्तण्डुल इतिवत् कार्य्या-

सोऽहं कथं नाम तवाचरेय
माराधनीयस्य धृते विंघातम् ॥ ८२ ॥
कराभिघातोत्थितकन्दुकेय
मालोक्य बालातिकुतूहलेन।
ह्रदात् पतज्ज्योति रिवान्तरीचा
दादत्तजैत्राभरणं त्वदीयम् ॥ ८३ ॥
त देतदाजानुविलम्बिना ते
ज्याघातरेखाकिणलाञ्छनेन।

न्तरः कार्य्यार्थः। "स्वानात्मीयान्यतादर्थ्यरन्ध्रान्तर्य्येषु चान्त-रम्" इति शाश्वतः। स चासौ मानुषश्चेति तस्य विष्णोः रामस्य सुताख्यां पुत्रसंज्ञाम् अपरां तनुं मूर्त्तिम् अवैमि, "आत्मा वै पुत्रनामासि" इति श्रुतेः इत्यर्थः। सः जानन् अहम् आरा धनीयस्य उपास्यस्य तव धृतेः प्रीतेः। धृ प्रीताविति धातो स्त्रियां क्तिन्। विघातं कथं नाम आचरेयम् असम्भावितम् इत्यर्थः॥ ८२ ॥

करेति। कराभिघातेन उत्थितः ऊर्द्धं गतः कन्दुकः यस्याः सा कन्दुकार्थम् ऊर्द्धं पश्यन्ति इत्यर्थः इयं बाला अति-कुतूहलेन अत्यन्तकौतुकेन, अन्तरीचात् ज्योतिः नचत्रम् इव। "ज्योतिर्भद्योतदृष्टिषु" इत्यमरः। ह्रदात् पतत् त्वदीयं जैत्रा-भरणम् आलोक्य आदत्त अगृह्णात् ॥ ८३ ॥

तदिति। तत् एतत् आभरणम् आजानुविलम्बिना दीर्घेण ज्याघातेन याः रेखाः रेखाकाराः ग्रन्थयः तासां किणं चिह्नं तत् एव लाञ्छनं यस्य तेनभूमेः रचापरिघेण रचार्गलेन। "परिघो

भुजेन रक्षापरिघेण भूमे
रुपैतु योगं पुन रंसलेन ॥ ८४ ॥
इमां स्वसारञ्च यवीयसीं मे
कुमुद्वतीं नार्हसि नानुमन्तुम् ।
आत्मापराधं नुदतीं चिराय
शुश्रूषया पार्थिव पादयो स्ते ॥ ८५ ॥
इत्यूचिवा नुपहृताभरणः क्षितीशं
श्लाघ्यो भवान् स्वजन इत्यनुभाषितारम् ।

योगभेदास्तसुद्गरेऽर्गलघातयोः" इत्यमरः । अंसलेन बलवता ते भुजेन पुनर्योगं सङ्गतिम् उपैतु । एतै विशेषणैः महाभाग्य-शौर्य्यधुरन्धरत्वबलवत्त्वादि गम्यते ॥ ८४ ॥

इमामिति । किञ्च, हे पार्थिव ! ते पादयोः चिराय शुश्रूषया परिचर्य्यया । शुश्रूषा श्रोतुमिच्छायां परिचर्य्याप्रदा-नयोः" इति विश्वः । आत्मापराधम् आभरणग्रहणरूपं नुदतीं परिजिहीर्षतीम् इत्यर्थः । आशंसायां भूतवच्चेति चकाराद् वर्त्तमानार्थे शतृप्रत्ययः । आच्छीनद्योर्नुमित्यस्य वैकल्पि-कत्वान्नुमभावः । इमां मे यवीयसीं कनिष्ठां स्वसारं भगिनीं कुमुद्वतीम् अनुमन्तुं न अर्हसीति ? न अर्हस्येव ? इत्यर्थः ॥ ८५ ॥

इतीति । इति पूर्व्वश्लोकोक्तम् ऊचिवान् उक्तवान् । ब्रुवः क्वसुः । उपहृताभरणः प्रत्यर्पिताभरणः कुमुदः, हे कुमुद ! भवान् श्लाघ्यः स्वजनः बन्धुः इति अनुभाषितारम् अनुवक्तारं क्षितीशं कुशं समेतबन्धुः युक्तबन्धुः सन् कन्यामयेन कन्यारूपेण

संयोजयां विधिवदास समेतवन्धुः
कान्यामयेन कुमुदः कुलभूषणेन ॥ ८६ ॥

तस्याः स्पृष्टे मनुजपतिना साहचर्य्याय हस्ते
माङ्गल्योर्णावलयिनि पुरः पावकस्योच्छिखस्य ।
दिव्यस्तूर्य्यध्वनिरुदचरद् व्यश्नुवानो दिगन्तान्
गन्धोदग्रं तदनु ववृषुः पुष्प माश्चर्य्यमेघाः ॥ ८७ ॥

इत्थं नागस्त्रिभुवनगुरोरौरसं मैथिलेयं
लब्ध्वा वन्धुं त मपि च कुशः पञ्चमं तक्षकस्य ।

कुलयोः भूषणेन विधिवत् संयोजयामास । न केवलं तदीयमेव किन्तु स्वकीयमपि भूषणं तस्मै दत्तवानिति ध्वनिः । आम् प्रत्ययानुप्रयोगयोर्व्यवधानं प्रागेव समाहितम् ॥ ८६ ॥

तस्या इति । मनुजपतिना कुशेन साहचर्य्याय सहधर्म्माचरणाय इत्यर्थः माङ्गल्या मङ्गले साधुः या ऊर्णा । "ऊर्णा मेषादिलोम्नि स्यात्" इत्यमरः । अत्र लक्षणया तन्निर्म्मितं सूत्रमुच्यते । तया वलयिनि वलयवति तस्याः कुमुद्वत्याः हस्ते पाणौ उच्छिखस्य उदर्च्चिषः पावकस्य पुरः अग्रे स्पृष्टे गृहीते सति, दिगन्तान् व्यश्नुवानः व्याप्नुवन् दिव्यः तूर्य्यध्वनिः उदचरत् उत्थितः, तदनु आश्चर्य्याः अद्भुताः मेघाः गन्धेन उदग्रम् उत्कटं पुष्पं पुष्पाणि । जात्यभिप्रायेणैकवचनम् । ववृषुः । आश्चर्य्यशब्दस्य रौद्रन्त्वद्भुतमस्त्री त्रिषु चतुर्दशेत्यमरवचनात् त्रिलिङ्गत्वम् ॥ ८७ ॥

इत्थमिति । इत्थं नागः कुमुदः त्रयाणां भुवनानां समा-

एकः शङ्कां पितृवधरिपोरत्यजद्वैनतेया-
च्छान्तव्यालामवनिमपरः पौरकान्तः शशास ॥८८॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ
कुमुद्वतीपरिणयो नाम षोड़शः सर्गः ॥

---

हारः त्रिभुवनम् । तद्धितार्थेत्यादिना तत् पुरुषः, अदन्तद्विगुत्वेऽपि पात्राद्यन्तत्वान्नपुंसकत्वम् । "पात्राद्यन्तैरनेकार्थो द्विगुर्लक्ष्यानुसारतः" इत्यमरः । तस्य गुरुः रामः तस्य औरसं धर्म्मपत्नीजं पुत्रम् । "औरसो धर्म्मपत्नीजः" इति याज्ञवल्क्यः । मैथिलेयं कुशं बन्धु लब्ध्वा, कुशोऽपि च तक्षकस्य पञ्चमं पुत्रं तं कुमुदं बन्धु लब्ध्वा, एकः तयोः अन्यतरः कुमुदः पितृवधेन रिपोः वैनतेयात् गरुड़ात् । गुरुणा वैष्णवांशेन कुशेन त्याजितक्रौर्य्यात् इति भावः । शङ्कां भयम् अत्यजत्, अपरः कुशः शान्तव्यालां कुमुदाज्ञया वीतसर्पभयाम् अवनिम् अत एव पौरकान्तः पौरप्रियः सन् शशास ॥ ८८ ॥

इति श्रीमहामहोपाध्याय-कोलाचलमल्लिनाथसूरि-विरचितायां
रघुवंशटीकायां सञ्जीवनीसमाख्यायां षोड़शः सर्गः ।१६।

---

## सप्तदशः सर्गः ।

—०—

अतिथिं नाम काकुत्स्थात् पुत्र माप कुमुद्वती ।
पश्चिमाद्यामिनीयामात् प्रसाद मिव चेतना ॥ १ ॥
स पितुः पितृमान् वंशं मातु श्चानुपमद्युतिः ।
अपुनात् सवितेवोभौ मार्गा वुत्तरदक्षिणौ ॥ २ ॥
त मादौ कुलविद्याना मर्थमर्थविदां वरः ।

नमो रामपदाम्भोजं रेणवो यत्र सन्ततम् ।
कुर्व्वन्ति कुसुदप्रीति मरण्यगृहमेधिनः ॥

अतिथिमिति । कुमुद्वती काकुत्स्थात् कुशात् अतिथिं नाम पुत्रम्, चेतना बुद्धिः पश्चिमात् अन्तिमात् यामिन्याः रात्रः यामात् प्रहरात् । "द्वौ यामप्रहरौ समौ" इत्यमरः । प्रसादं वैशद्यम् इव, प्राप । ब्राह्मे सर्व्वेषां बुद्धिवैशद्यं भवति इति प्रसिद्धिः ॥ १ ॥

स इति । पितृमान् । प्रशंसार्थे मतुप् । सुशिक्षितः इत्यर्थः । अनुपमद्युतिः । सवितुश्चेदं विशेषणम् । सः अतिथिः पितुः कुशस्य मातुः कुमुद्वत्याश्च वंशम्, सविता उत्तरदक्षिणौ उभौ मार्गौ इव, अपुनात् पवित्रीकृतवान् ॥ २ ॥

तमिति । अर्थान् शब्दार्थान् दानसंग्रहादिक्रियाप्रयोजनानि च विदन्ति इति अर्थविदः तेषां वरः श्रेष्ठः पिता कुशः तम् अतिथिम् आदौ प्रथमं कुलविद्यानाम् आन्वीक्षिकीत्रयी-

पश्चात् पार्थिवकन्यानां पाणि मग्राहयत् पिता ॥ ३॥
जात्य स्तेनाभिजातेन शूर: शौर्य्यवता कुश: ।
अमन्यतैकमात्मान मनेकं वशिना वशी ॥ ४ ॥
स कुलोचित मिन्द्रस्य साहायक मुपेयिवान् ।
जघान समरे दैत्यं दुर्जयं तेन चावधि ॥ ५ ॥
तं स्वसा नागराजस्य कुमुदस्य कुमुद्वती ।
अन्वगात् कुमुदानन्दं शशाङ्क मिव कौमुदी ॥ ६ ॥

वार्त्तादण्डनीतीनाम् अर्थम् अभिधेयम् अग्राहयत् अबोधयत् पश्चात् पार्थिवकन्यायां पाणिम् अग्राहयत् स्वीकारितवान् उद्वाहयत् इत्यर्थः। ग्रहेर्ण्यन्तस्य सर्व्वत्र द्विकर्म्मकत्वमस्ति इत्युक्तं प्राक् ॥ ३ ॥

जात्य इति। जातौ भव: जात्य: कुलीन: शूर: वशी कुशः अभिजातेन कुलीनेन। "अभिजात: कुलीनः स्यात्" इत्यमर:। शौर्य्यवता वशिना तेन अतिथिना करणेन एकम् आत्मानम् एक: न भवतीति अनेकः तम् अमन्यत सर्व्वगुणसामग्र्यात् आत्मजम् आत्मनः एव रूपान्तरम् अमंस्त इत्यर्थ: ॥४

स इति। सः कुशः कुलोचितं कुलाभ्यस्तम् इन्द्रस्य साहायकं सहकारित्वम्। योपधाद्गित्यादिना वुञ्। उपेयिवान् प्राप्तः सन् समरे नामत: अर्थतश्च दुर्जयं दैत्यं जघान अवधीत् तेन दैत्येन अवधि हतश्च। लुङि च इति हनो वधादेशः ॥ ५ ॥

तमिति। कुमुदस्य नागराजस्य स्वसा कुमुद्वती कुशपत्नी, कुमुदानन्दं शशाङ्कं कौमुदी ज्योत्स्ना इव, तं कुशं अन्वगात्।

तयो र्दिवस्पतेरासी देकः सिंहासनार्द्धभाक्।
द्वितीयापि सखी शच्याः पारिजातांशभागिनी ॥ ७॥
तदात्मसम्भवं राज्ये मन्त्रिवृद्धाः समादधुः।
स्मरन्तः पश्चिमा माज्ञां भर्त्तुः संग्रामयायिनः ॥ ८ ॥
ते तस्य कल्पयामासु रभिषेकाय शिल्पिभिः।
विमानं नव मुद्वेदि चतुःस्तम्भ प्रतिष्ठितम् ॥ ९ ॥
तत्रैनं हेमकुम्भेषु सम्भृतै स्तीर्थवारिभिः।

कुशस्तु कुः पृथ्वी तस्याः मुत् प्रीतिः सैव आनन्दः यस्य इति कुमुदानन्दः परानन्देन स्वयमानन्दति इत्यर्थ ॥ ६॥

तयोरिति। तयोः कुशकुमुद्वत्योः मध्ये एकः कुशः दिवस्पतेः इन्द्रस्य सिंहासनार्द्धं सिंहासनैकदेशः तद्भाक् आसीत्, द्वितीया कुमुद्वती अपि शच्याः इन्द्राण्याः पारिजातांशस्य भागिनी ग्राहिणी। संपृचेत्यादिना भजेर्घिनुण्प्रत्ययः। सखी आसीत्। कस्कादित्वाद्दिवस्पतिः साधुः ॥ ७ ॥

तदिति। संग्रामं यायिनः संग्रामं यास्यतः। आवश्यकार्थे णिनिः, अकेनोर्भविष्यदाधमर्ण्ययोरिति षष्ठीनिषेधः। भर्त्तुः स्वामिनः कुशस्य पश्चिमाम् अन्तिमाम् आज्ञां विपर्य्यये पुत्रः अभिषेक्तव्य इत्येवंरूपां स्मरन्तः मन्त्रिवृद्धाः तदात्मसम्भवम् अतिथिं राज्ये समादधुः निदधुः ॥ ८ ॥

त इति। ते मन्त्रिणः तस्य अतिथेः अभिषेकाय शिल्पिभिः उद्वेदि उन्नतवेदिकं चतुःस्तम्भप्रतिष्ठितं चतुर्षु स्तम्भेषु प्रतिष्ठितं नवं विमानं मण्डपं कल्पयामासुः ॥ ९ ॥

तत्रेति। तत्र विमाने भद्रपीठे पीठविशेषे उपवेशितम्

उपतस्थुः प्रकृतयो भद्रपीठोपवेशितम् ॥ १० ॥
नदद्भिः स्निग्धगम्भीरं तूर्य्यै राहतपुष्करैः।
अन्वमीयत कल्याणं तस्याविच्छिन्नसन्तति ॥ ११ ॥
दूर्वायवाङ्कुरप्लक्ष-त्वगभिन्नपुटोत्तरान्।
ज्ञातिवृद्धैः प्रयुक्तान् स भेजे नीराजनाविधीन् ॥१२॥
पुरोहितपुरोगा स्तं जिष्णुं जैत्रै रथर्वभिः।
उपचक्रमिरे पूर्व्व मभिषेक्तुं द्विजातयः ॥ १३ ॥
तस्यौघमहती मूर्ध्नि निपतन्ती व्यरोचत।

एनम् अतिथिं हेमकुम्भेषु सम्भृतैः संगृहीतैः तीर्थवारिभिः करणैः प्रकृतयः मन्त्रिणः उपतस्थुः ॥ १० ॥

नदद्भिरिति। आहतं पुष्करं मुखं येषां तैः। "पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखेऽपि च" इत्यमरः। स्निग्धं मधुरं गम्भीरञ्च नदद्भिः तूर्य्यैः तस्य अतिथेः अविच्छिन्नसन्तति अविच्छिन्नपारम्पर्य्यं कल्याणं शुभं अन्वमीयत अनुमितम् ॥ ११ ॥

दूर्वेति। सः अतिथिः दूर्वाश्च यवाङ्कुराश्च प्लक्षत्वचश्च अभिन्नपुटाः वालपल्लवाश्च उत्तराणि प्रधानानि येषु तान्। अभिन्नपुटानि मधूकपुष्पाणि इति केचित्, कमलानि इत्यन्ये। ज्ञातिषु ये वृद्धाः तैः प्रयुक्तान् नीराजनाविधीन् भेजे ॥ १२ ॥

पुरोहितेति। पुरोहितप्रपुरोगाः पुरोहितप्रमुखाः द्विजातयः ब्राह्मणाः जिष्णुं जयशीलं तम् अतिथिं जैत्रैः जयशीलैः अथर्वभिः मन्त्रविशेषैः करणैः पूर्व्वम् अभिषेक्तुम् उपचक्रमिरे ॥ १३ ॥

तस्येति। तस्य अतिथेः मूर्ध्नि सशब्दं निपतन्ती ओघ-

सशब्दमभिषेकश्री र्गङ्गेव त्रिपुरद्विषः ॥ १४ ॥
स्तूयमानः क्षणे तस्मि न्नलक्ष्यत स वन्दिभिः ।
प्रवृद्ध इव पर्ज्जन्यः सारङ्गै रभिनन्दितः ॥ १५ ॥
तस्य सन्मन्त्रपूताभिः स्नान मद्भिः प्रतीच्छतः ।
ववृधे वैद्युतस्याग्ने र्वृष्टिसेकादिव द्युतिः ॥ १६ ॥
स ताव दभिषेकान्ते स्नानकेभ्यो ददौ वसु ।
यावतैषां समाप्येरन् यज्ञाः पर्य्याप्तदक्षिणाः ॥ १७॥
ते प्रीतमनस स्तस्मै या माशिष मुदैरयन् ।

महती महाप्रवाहा अभिषिच्यते अनेन इत्यभिषेकः जलं तस्य श्रीः समृद्धिः, त्रिपुरद्विषः शिवस्य मूर्ध्नि निपतन्ती गङ्गा इव, व्यरोचत । त्रयाणां पुराणां द्वेष्टीति विग्रहः ॥ १४ ॥

स्तूयमान इति । तस्मिन् क्षणे अभिषेककाले वन्दिभिः स्तूयमानः सः अतिथिः, प्रवृद्धः प्रवृद्धवान् । कर्त्तरि क्तः । अत एव सारङ्गैः चातकैः अभिनन्दितः पर्ज्जन्यः मेघ इव, अलक्ष्यत ॥ १५ ॥

तस्येति । सन्मन्त्रैः पूताभिः शुद्धाभिः अद्भिः स्नानं प्रतीच्छतः कुर्व्वतः तस्य, वृष्टिसेकात् विद्युतः अयं वैद्युतः तस्य अविन्धनस्य अग्नेः इव, द्युतिः ववृधे ॥ १६ ॥

स इति । सः अतिथिः अभिषेकान्ते स्नातकेभ्यः गृहस्थेभ्यः तावत् तावत्परिमाणं वसु धनं ददौ यावता वसुना एषां स्नातकानां पर्य्याप्तदक्षिणाः समग्रदक्षिणाः सयज्ञाः समाप्यरन् ॥ १६ ॥

त इति । प्रीतमनसः ते स्नातकाः तस्मै अतिथये याम्

सा तस्य कर्म्मनिर्वृत्तै दूरं पश्चात्कृता फलैः ॥१८

बन्धच्छेदं स बद्धानां वधार्हाणामवध्यताम् ।
धुर्य्याणाञ्च धुरो मोक्ष मदोहञ्चादिश गवाम्॥१९॥

क्रीड़ापतत्त्रिणोऽप्यस्य पञ्जरस्थाः शुकादयः ।
लब्धमोक्षा स्तदादेशाद् यथेष्टगतयोऽभवन् ॥ २० ॥

ततः कच्यान्तरन्यस्तं गजदन्तासनं शुचि ।
सोत्तरच्छद मध्यास्त नेपथ्यग्रहणाय सा ॥ २१ ॥

आशिषम् उदैरयन् व्याहरन् सा आशीः तस्य अतिथेः कर्म्म-निर्वृत्तैः पूर्व्वपुण्यनिष्पन्नैः फलैः साम्राज्यादिभिः दूरं दूरतः पश्चात् कृता, स्वफलदानस्य तदानीम् अनवकाशात् कालान्त-रोद्वीचणं चकार इत्यर्थः ॥ १८ ॥

बन्धेति । सः अतिथिः बद्धानां बन्धच्छेदं वधार्हाणाम् अवध्यतां धुरं वहन्तीति धुर्य्याः बलीवर्द्दादयः तेषां धुरः भारस्य मोक्षं गवाम् अदोहं वत्सानां पानार्थं दोहनिवृत्तिं च आदि-शत् आदिदेश ॥ १९ ॥

क्रीड़ेति । पञ्जरस्थाः शुकादयः अस्य अतिथेः क्रीड़ापत-त्त्रिणः अपि किमुतान्ये इति अपिशब्दार्थः, तदादेशात् तस्य अतिथेः शासनात् लब्धमोक्षाः सन्तः यथेष्टं गति येषां ते स्वेच्छाचारिणः अभवन् ॥ २० ॥

तत इति । ततः सः अतिथिः नेपथ्यग्रहणाय प्रसाधन-स्वीकाराय कच्यान्तरं हर्म्याङ्गनविशेषः । "कच्या प्रकोष्ठे हर्म्यादेः" इत्यमरः । तत्र न्यस्तं स्थापितं शुचि निर्म्मलं

तं धूपाश्यानकेशान्तं तोयनिर्णिक्तपाणयः ।
आकल्पसाधनैस्तैस्तैरुपसेदुः प्रसाधकाः ॥ २२ ॥
तेऽस्य मुक्तागुणोन्नद्धं मौलिमन्तर्गतस्रजम् ।
प्रत्यूपुः पद्मरागेण प्रभामण्डलशोभिना ॥ २३ ॥
चन्दनेनाङ्गरागञ्च मृगनाभिसुगन्धिना ।
समापय्य ततश्चक्रुः पत्रं विन्यस्तरोचनम् ॥ २४ ॥
आमुक्ताभरणः स्रग्वी हंसचिह्नदुकूलवान् ।

सोत्तरच्छदम् आस्तरणसहितं गजदन्तस्य आसनं पीठम् अध्यास्त तत्र उपविष्टः इत्यर्थः ॥ २१ ॥

तमिति । तोयेन निर्णिक्तपाणयः क्षालितहस्ताः प्रसाधकाः अलङ्कर्त्तारः धूपेन गन्धद्रव्यधूपेन आश्यानकेशान्तं शोषितकेशपाशान्तं तम् अतिथिं तैः तैः आकल्पस्य नेपथ्यस्य साधनैः गन्धमाल्यादिभिः उपसेदुः उपतस्थुः अलञ्चक्रुः इत्यर्थः ॥ २२ ॥

तेऽस्येति । ते प्रसाधकाः मुक्तागुणेन मौक्तिकसरेण उन्नद्धम् उद्बद्धम् अन्तर्गतस्रजम् अस्य अतिथेः मौलिं धम्मिल्लं प्रभामण्डलशोभिना पद्मरागेण माणिक्येन प्रत्यूपुः प्रत्युप्तं चक्रुः ॥ २३

चन्दनेनेति । किञ्च, मृगनाभ्या कस्तूरिकया सुगन्धिना चन्दनेन अङ्गरागम् अङ्गविलेपनं समापय्य समाप्य ततः अनन्तरं विन्यस्ता रोचना गोरोचना यस्मिन् तत् पत्रं पत्ररचनं चक्रुः ॥ २४ ॥

आमुक्तेति । आमुक्ताभरणः आसञ्जिताभरणः स्रजोऽस्य सन्तीति स्रग्वी । अस्मायामेधास्रजोविनिरिति विनिप्रत्ययः ।

आसीदतिशयप्रेक्ष्यः स राज्यश्रीवधूवरः ॥ २५ ॥
नेपथ्यदर्शिनश्छाया तस्यादर्शे हिरण्मये।
विरराजोदिते सूर्ये मेरौ कल्पतरोरिव ॥ २६ ॥
स राजककुदव्यग्रपाणिभिः पार्श्ववर्त्तिभिः।
ययावुदीरितालोकः सुधर्म्मानवमां सभाम् ॥ २७ ॥

हंसाः चिह्नमस्येति हंसचिह्नं यत् दुकूलं तद्वान्। अत्र बहुव्रीहिणैवार्थसिद्धेर्मतुवानर्थकोऽपि सर्व्वधनीत्यादिवत् कर्म्मधारयादपि मत्वर्थीयं प्रत्ययमिच्छन्ति, एवमन्यत्रापि द्रष्टव्यम्। राज्यश्रीरेव वधूः नवोढ़ा तस्याः वरः वोढ़ा। "वधूः स्नुषा नवोढ़ा स्त्री वरो जामातृषिड्गयोः" इति विश्वः। सः अतिथिः अतिशयेन प्रेक्ष्यः दर्शनीयः आसीत्। वरोऽप्येवंविशेषणः २५॥

नेपथ्येति। हिरण्मये सौवर्णे आदर्शे दर्पणे नेपथ्यदर्शिनः वेशं पश्यतः तस्य अतिथेः छाया प्रतिविम्बम्, उदिते सूर्य्ये दर्पणकल्पे मेरौ यः कल्पतरुः तस्य छायाऽइव, विरराज। तस्य सूर्य्यसंक्रान्तविम्बस्य सम्भवान्मेरौ इत्युक्तम् ॥ २६ ॥

स इति। सः अतिथिः राजककुदानि राजचिह्नानि छत्रचामरादीनि। "प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम्" इत्यमरः। तेषु व्यग्राः पाणयः येषां तैः पार्श्ववर्त्तिभिः जनैः उदीरितालोकः उच्चारितजयशब्दः। "आलोको जयशब्दः स्यात्" इति हलायुधः। सुधर्म्मायाः देवसभायाः अनवमाम् अनूनां सभाम् आस्थानीं ययौ। "स्यात् सुधर्म्मा देवसभा" इत्यमरः ॥ २७ ॥

वितानसहितं तत्र भेजे पैतृकमासनम्।
चूड़ामणिभिरुद्घृष्ट-पादपीठं महीक्षिताम्॥ २८॥
शुशुभे तेन चाक्रान्तं मङ्गलायतनं महत्।
श्रीवत्सलक्षणं वक्षः कौस्तुभेनेव कैशवम्॥ २९॥
बभौ भूयः कुमारत्वा दधिराज्य मवाप्य सः।
रेखाभावा दुपारूढ़ः सामग्र्य मिव चन्द्रमाः॥ ३०॥
प्रसन्नमुखरागं तं स्मितपूर्व्वाभिभाषिणम्।

वितानेति। तत्र सभायां वितानेन उल्लोचेन सहितम्। "अस्त्री वितानमुल्लोच" इत्यमरः। महीक्षितां राज्ञां चूड़ामणिभिः शिरोरत्नैः उद्घृष्टम् उल्लिखितं पादपीठं यस्य तत् पितुरिदं पैतृकम्। ऋतष्ठञ् इति ठञ्प्रत्ययः। आसनं सिंहासनं भेजे॥ २८॥

शुशुभे इति। तेन चाक्रान्तं श्रीवत्सो नाम गृहविशेषः तल्लक्षणं श्रीवत्सरूपम्। "श्रीवत्सनन्द्यावर्त्तादिर्विच्छेदा बहवो ह्ययोः" इति सज्जनः। महत् अधिकं मङ्गलायतनं मङ्गलगृहं सभारूपं, कौस्तुभेन मणिना आक्रान्तं श्रीवत्सलक्षणं केशवस्येदं कैशवं वक्षः इव, शुशुभे॥ २९॥

बभाविति। सः अतिथिः कुमारत्वात् बाल्यात् भूयः यौवराज्यम् अवाप्यैव अनन्तरम् अधिराजस्य भावः अधिराज्यम् अवाप्य, रेखाभावात् अर्द्धेन्दुत्वम् अवाप्यैव सामग्र्यम् उपारूढ़ः पूर्णतां गतः चन्द्रमा इव, बभौ इति व्याख्यानं, तदपि यौवराज्याभावनिश्चये ज्याय एव॥ ३०

प्रसन्नेति। प्रसन्नः मुखरागः मुखकान्तिः यस्य तं स्मित

मूर्त्तिमन्तममन्यन्त विश्वासमनुजीविनः ॥ ३१ ॥
स पुरं पुरुहूतश्रीः कल्पद्रुमनिभध्वजाम् ।
क्रममाणश्चकार द्यां नागेनैरावतौजसा ॥ ३२॥
तस्यैकस्योच्छ्रितं छत्रं मूर्द्ध्नि तेनामलत्विषा ।
पूर्व्वराजवियोगौष्म्यं कृत्स्नस्य जगतो हृतम् ॥ ३३ ॥
धूमादग्नेः शिखाः पश्चादुदयादंशवो रवेः ।
सोऽतीत्य तेजसां वृत्तिं सममेवोत्थितो गुणैः ॥ ३४॥

पूर्व्वं यथा तथा अभिभाषिणम् आभाषणशीलं तम् अतिथिम् अनुजीविनः मूर्त्तिमन्तं विग्रहवन्तं विश्वासं विस्रम्भम् अमन्यन्त "समौ विश्वासविस्रम्भौ" इत्यमरः ॥ ३१ ॥

स इति । पुरुहूतश्रीः सः अतिथिः कल्पद्रुमाणां समानाः ध्वजाः यस्याः तां पुरम् अयोध्याम् ऐरावतस्य ओजः इव ओजः बलं यस्य तेन नागेन कुञ्जरेण क्रममाणः चरन् । अनुपसर्गा-द्वेति वैकल्पिकमात्मनेपदम् । द्यां चकार स्वर्गलोकसदृशीं चकार इत्यर्थः । "द्यौः स्वर्गसुरवर्त्मनोः" इति विश्वः ॥ ३२ ॥

तस्येति ॥ तस्य एकस्य मूर्ध्नि छत्रम् उच्छ्रितम् उन्नमितम्, अमलत्विषा तेन छत्रेण कृत्स्नस्य जगतः पूर्व्वराजस्य कुशस्य वियोगेन यत् औष्म्यं सन्तापः तत् हृतं नाशितम् । अत्र छत्रोन्नमनसन्तापहरणलक्षणयोः कारणकार्य्ययोर्भिन्नदेशत्वा-दसङ्गतिरलङ्कारः ॥ ३३ ॥

धूमादिति । अग्नेः धूमात् पश्चात् अनन्तरम् इत्यर्थः शिखाः ज्वालाः, रवेः उदयात् पश्चात् अनन्तरम् अंशवः उत्तिष्ठन्ते इति शेषः । सः अतिथिः तेजसाम् अग्न्यादीनां वृत्तिं स्वभावम्

तं प्रीतिविशदैर्नेत्रैरन्वयुः पौरयोषितः।
शरत्प्रसन्नैर्ज्योतिर्भिर्विभावर्य्य इव ध्रुवम् ॥ ३५ ॥
अयोध्यादेवताश्चैनं प्रशस्तायतनार्च्चिताः।
अनुदध्युरनुध्येयं सान्निध्यैः प्रतिमागतैः ॥ ३६ ॥
यावन्नाश्यायते वेदिरभिषेकजलाप्लुता।
तावदेवास्य वेलान्तं प्रतापः प्राप दुःसहः ॥ ३७ ॥
वशिष्ठस्य गुरोर्मन्त्राः सायकास्तस्य धन्विनः।

अतीत्य गुणैः समं सहैव उत्थितः उदितः। अपूर्व्वमिदम् इत्यर्थः ॥ ३४ ॥

तमिति। पौरयोषितः प्रीत्या विशदैः प्रसन्नैः नेत्रैः करणैः तम् अतिथिम् अन्वयुः अनुजग्मुः दृष्टिप्रसारमद्राक्षुः इत्यर्थः। कथमिव? शरदि प्रसन्नैः ज्योतिर्भिः नक्षत्रैः विभावर्य्यः रात्रयः ध्रुवम् इव। ध्रुवपार्श्वबहुत्वात् ताराचक्रस्य इत्यर्थः ॥ ३५ ॥

अयोध्येति। प्रशस्तेषु आयतनेषु आलयेषु अर्च्चिताः अयोध्यादेवताश्च अनुध्येयम् अनुग्राह्यम् एनम् अतिथिं प्रतिमागतैः अर्चासंक्रान्तैः सान्निध्यैः सन्निधानैः अनुदध्युः अनुजगृहुः। "अनुध्यानमनुग्रहः" इत्युत्पलमालायाम्। तदनुग्रहबुद्ध्या सन्निदधुः इत्यर्थः ॥ ३६ ॥

यावदिति। अभिषेकजलैः आप्लुता सिक्ता वेदिः अभिषेकवेदिः यावत् न आश्यायते न शुष्यति। कर्त्तरि लट्। तावत् एव अस्य राज्ञः दुःसहः प्रतापः वेलान्तं वेलापर्य्यन्तं प्राप ॥ ३७ ॥

वशिष्ठस्येति। गुरोः वशिष्ठस्य मन्त्राः धन्विनः तस्य अतिथेः सायकाः इति उभये सङ्गताः सन्तः यत् साध्यं न साधयेयुः तत्

किंतत् साध्यं यदुभये साधयेयुर्न सङ्गताः ॥ ३८ ॥
स धर्मस्थसखः शश्वदर्थिप्रत्यर्थिनां स्वयम् ।
ददर्श संशयच्छेद्यान् व्यवहारानतन्द्रितः ॥ ३९ ॥
ततः परमभिव्यक्त-सौमनस्यनिवेदितैः ।
युयोज पाकाभिमुखै र्भृत्यान् विज्ञापनाफलैः ॥ ४०॥

तादृक् साध्यं किं ? न किञ्चित् इत्यर्थः । तेषामसाध्यं नास्ति इति भावः ३८ ॥

स इति । धर्मे तिष्ठन्तीति धर्मस्थाः सभ्याः "राजा सभासदः कार्य्याः रिपौ मित्रे च ये समाः" इत्युक्तलक्षणाः तेषां सखा धर्मस्थसखः तत्सहितः इत्यर्थः अतन्द्रितः अनलसः सः नृपः शश्वत् अन्वहम् इत्यर्थः अर्थिनां साध्यार्थवतां प्रत्यर्थिनां तद्विरोधिनाञ्च संशयच्छेद्यान् संशयाद्धेतोः छेद्यान् परिच्छेद्यान् सन्दिग्धत्वा दवश्यनिर्णेयात् इत्यर्थः व्यवहारान् ऋणादानादिविवादान् स्वयं ददर्श अनुसन्दधौ न तु प्राड्विवाकमेव नियुक्तवान् इत्यर्थः । अत्र याज्ञवल्क्यः, "व्यावहारान् नृपः पश्येत् विद्वद्भि र्ब्राह्मणैः सह" इति ॥ ३९ ॥

तत इति । ततः परं व्यवहारदर्शनानन्तरं भृत्यान् अनुजीविनः अभिव्यक्तं मुखप्रसादादिलिङ्गैः स्फुटीभूतं यत् सौमनस्यं स्वामिनः प्रसन्नत्वं तेन निवेदितैः सूचितैः पाकाभिमुखैः सिद्ध्युन्मुखैः विज्ञापनानां विज्ञप्तीनां फलैः प्रेप्सितार्थैः युयोज योजयामास । अत्र बृहस्पतिः, "नियुक्तः कर्म्मनिष्पत्तौ विज्ञप्तौ च यदृच्छया । भृत्यान् धनैर्मानयंस्तु नवोऽप्यचोभ्यतां व्रजेत् ॥

प्रजा स्तङ्गुरुणा नद्यो नभसेव विवर्द्धिताः ।
तस्मिंस्तु भूयसीं वृद्धिं नभस्ये ता इवाययुः ॥ ४१ ॥
य दुवाच न त न्मिथ्या य द्ददौ न जहार तत् ।
सोऽभ्रु द्भग्नव्रतः शत्रू नुद्धृत्य प्रतिरोपयन् ॥ ४२ ॥
वयोरूपविभूतीना मेकैकं मदकारणम् ।
तानि तस्मिन् समस्तानि न तस्योत्सिषिचे मनः ॥४३॥

इति। कविश्च वच्यति अक्षोभ्य इति। अत्र सौमनस्यफल योजनादिभि र्नृपस्य हृत्तसमाधि र्ध्वन्यते इत्यनुसन्धेयम् ॥ ४० ॥

प्रजा इति। प्रजाः तस्य अतिथेः गुरुणा पित्रा कुशेन नभसा श्रावणमासेन नद्यः इव विवर्द्धिताः, तस्मिन् अतिथौ तु नभस्ये भाद्रपदे मासे ता इव भूयसीं वृद्धिम् अभ्युदयम् आययुः प्रजापोषणेन पितरमतिशयितवान् इत्यर्थः ॥ ४१ ॥

यदिति। सः अतिथिः यत् वाक्यं दानादिविषयम् उवाच तत् न मिथ्या अनृतं न अभूत्, यत् वस्तु ददौ तत् न जहार न पुनः आददे। किन्तु शत्रून् उद्धृत्य उत्खाय प्रतिरोपयन् पुनः स्थापयन् भग्नव्रतः भग्ननियमः अभूत् ॥ ४२ ॥

वय इति। वयोरूपविभूतीनां यौवनसौन्दर्य्यैश्वर्य्याणां मध्ये एकैकं मदकारणं मदहेतुः, तानि मदकारणानि तस्मिन् राज्ञि समस्तानि मिलितानि इति शेषः, तथापि तस्य अतिथेः मनः न उत्सिषिचे न जगर्व। सिच्यतेः सरितेत्त्वात् आत्मनेपदम्। अत्र वयोरूपादीनां गर्वहेतुत्वात् मदस्य च मदिराकार्य्यत्वेन अतत्कारकत्वात् मदशब्देन गर्वो लक्ष्यते इत्याहुः। उक्तञ्च, "ऐश्वर्य्यरूपतारुण्य-कुलविद्याबलैरपि। इष्ट-

इत्थं जनितरागासु प्रकृतिष्वनुवासरम् ।
अक्षोभ्यः स नवोऽप्यासीत् दृढ़मूल इव द्रुमः ॥ ४४॥
अनित्याः शत्रवो वाह्याः विप्रकृष्टाश्च ते यतः ।
अतः सोऽभ्यन्तरान् नित्यान् षट् पूर्व्व मजयद्रिपून्॥४५
प्रसादाभिमुखे तस्मिन् चपलापि स्वभावतः ।
निकषे हेमरेखेव श्रीरासीदनपायिनी ॥ ४६ ॥
कातर्य्यं केवला नीतिः शौर्य्यं श्वापदचेष्टितम् ।

लाभादिना च्येषाम् अवज्ञा गर्व्व ईरितः । मदस्त्वानन्दसम्मोहः सम्भेदो मदिराकृतः ॥" इति । अत एव कविनापि उल्लिखिते इत्युक्तं न तून्ममादेति ॥ ४३ ॥

इत्थमिति । इत्थम् अनुवासरम् अन्वहं प्रकृतिषु प्रजासु जनितरागासु सतीषु सः राजा नवः अपि, दृढ़मूलः द्रुमः इव, अक्षोभ्यः अप्रधृष्यः आसीत् ॥ ४४ ॥

अनित्या इति । यतः वाह्याः शत्रवः प्रतिनृपाः अनित्याः क्षिपन्ति क्षिद्यन्ति च इत्यर्थः, किञ्च ते वाह्याः विप्रकृष्टाः दूरस्थाश्च । अतः सः अभ्यन्तरान् अन्तर्वर्त्तिनः नित्यान् षट् रिपून् कामक्रोधादीन् पूर्व्वम् अजयत्, अन्तःशत्रुजये वाह्या अपि न दुर्ज्जयाः इति भावः ॥ ४५ ॥

प्रसादेति । स्वभावतः चपला चञ्चलापि श्रीः प्रसादाभिमुखे तस्मिन् नृपे, निकषे निकषोपले हेमरेखेव, अनपायिनी स्थिरा आसीत् ॥ ४६ ॥

कातर्य्यमिति । केवला शौर्य्यवर्ज्जिता नीतिः कातर्य्यं भीरुत्वम् । शौर्य्यं केवलमित्यनुषज्जनीयम् । केवलं नीतिरहितं

अतः सिद्धिं समेताभ्याम् उभाभ्या मन्वियेष सः ॥४७॥
न तस्य मण्डले राज्ञः न्यस्तप्रणिधिदीधितेः ।
अदृष्ट मभवत् किञ्चिद् व्यभ्रस्येव विवस्वतः ॥ ४८॥
रात्रिन्दिवविभागेषु यदादिष्टं महीक्षिताम् ।
तत् सिषेवे नियोगेन स विकल्पपराङ्मुखः ॥ ४९ ॥

शौर्य्यं श्वापदचेष्टितं व्याघ्रादिचेष्टाप्रायम् इत्यर्थः । "व्याघ्रादयो वनचराः पशवः श्वापदाः मताः" इति हलायुधः । अतः हेतोः सः अतिथिः समेताभ्यां सङ्गताभ्यां उभाभ्यां नीतिशौर्य्याभ्यां सिद्धिं जयप्राप्तिम् अन्वियेष गवेषितवान् ॥ ४७ ॥

न तस्येति । न्यस्ताः सर्व्वतः प्रहिताः प्रणिधयः चराः एव दीधितयः रश्मयः यस्य तस्य । "प्रणिधिः प्रार्थने चारे" इति शाश्वतः । तस्य राज्ञः, व्यभ्रस्य निर्मेघस्य विवस्वतः सूर्य्यस्य इव, मण्डले स्वविषये किञ्चित् अल्पम् अपि अदृष्टम् अज्ञातं न अभवत् न आसीत् । स चारचक्षुषा सर्व्वं मपश्यत् इत्यर्थः ॥४८॥

रात्रिन्दिवेति । रात्रि च दिवा च रात्रिन्दिवम् । अचतुरेत्यादिना अधिकरणार्थे द्वन्द्वे अच्प्रत्ययान्तो निपातः, अव्ययान्तत्वादव्ययत्वम् । अत्र पष्ठार्थलक्षणया रात्रिन्दिवं मिति अहोरात्रयोः इत्यर्थः तयोः विभागाः अंशाः प्रहरादयः तेषु महीक्षितां राज्ञां यत् आदिष्टम् इदमस्मिन् काले कर्त्तव्यमिति मन्वादिभिः उपदिष्टं तत् सः राजा विकल्पपराङ्मुखः संशयरहितः सन् नियोगेन निश्चयेन सिषेवे अनुष्ठितवान् इत्यर्थः । अत्र कौटिल्यः "कार्य्याणां नियोगविकल्प-

मन्त्रः प्रतिदिनं तस्य बभूव सह मन्त्रिभिः ।
स जातु सेव्यमानोऽपि गुप्तद्वारो न सूच्यते ॥ ५० ॥
परेषु स्वेषु च क्षिप्तैः अविज्ञातपरस्परैः ।
सोऽपसर्पैर्जजागार यथाकालं स्वपन्नपि ॥ ५१ ॥
दुर्गाणि दुर्ग्रहाण्यासंस्तस्य रोद्धुरपि द्विषाम् ।

समुच्चया भवन्ति अनेनैवोपायेन नान्येनेति नियोगः अनेन अन्येन वेति विकल्पः अनेन चेति समुच्चयः" इति ॥ ४९ ॥

मन्त्र इति । तस्य राज्ञः प्रतिदिनं मन्त्रिभिः सह मन्त्रः विचारः बभूव । सः मन्त्रः सेव्यमानः अपि अन्वहम् आवर्त्यमानः अपि जातु कदाचित् अपि न सूच्यते न प्रकाश्यते । तत्र हेतुः गुप्तद्वार इति संवृतेङ्गिताकारादिज्ञानमार्गः इत्यर्थः ॥५०॥

परेष्विति । यथाकालम् उक्तकालानतिक्रमेण स्वपन् अपि सः अतिथिः परेषु शत्रुषु स्वेषु स्वकीयेषु च मन्त्र्यादितीर्थेषु इति शेषः क्षिप्तैः प्रहितैः अविज्ञाताः परस्परं येषां तैः अन्योन्याविज्ञातैः इत्यर्थः अपसर्पैः चरैः । "अपसर्पश्चरे" इत्यमरः । जजागार चारमुखेन सर्वं मज्ञासीत् इत्यर्थः अत्र कामन्दकः, "चारान् विचारयेत् तीर्थेष्वात्मनश्च परस्य च । पाषण्डादीनविज्ञातानन्योन्यमितरैरपि ॥" इति ॥ ५१ ॥

दुर्गाणीति । द्विषां रोद्धुः रोधकस्य अपि न तु स्वयं रोध्यस्य इत्यर्थः तस्य राज्ञः दुर्ग्रहाणि परैः दुर्धर्षाणि दुर्गाणि महीदुर्गादीनि आसन् । न च निर्भीकस्य किं दुर्गैरिति वाच्यमित्यर्थान्तरन्याससुखेनाह, न हीति गजानास्कन्दति हिनस्तीति गजास्कन्दी सिंहः भयात् हेतोः गिरिगुहासु शेते इति गिरि-

नहि सिंहो गजास्कन्दी भयाद्गिरिगुहाशयः ॥५२॥

भव्यमुख्याः समारम्भाः प्रत्यवेक्ष्या निरत्ययाः ।
गर्भशालिसधर्म्माणस्तस्य गूढं विपेचिरे ॥ ५३ ॥

अपथेन प्रववृते न जातूपचितोऽपि सः ।
वृद्धौ नदीमुखेनैव प्रस्थानं लवणाम्भसः ॥ ५४ ॥

कामं प्रकृतिवैराग्यं सद्यः शमयितुं क्षमः ।

गुहाशयः न हि किन्तु स्वभावत एव इति शेषः । अधिकरणे शेतेरित्यच्प्रत्ययः । अत्र मनुः, "धनदुर्गं महीदुर्गं मब्दुर्गं वार्क्षमेव वा । नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत् पुरम् ॥" इति ॥ ५२ ॥

भव्येति । भव्यमुख्याः कल्याणप्रधानाः न तु विपरीताः प्रत्यवेक्ष्याः एतावत् कृतम् एतावत् कर्त्तव्यमित्यनुसन्धानेन विचारणीयाः अत एव निरत्ययाः निर्बाधाः गर्भे अभ्यन्तरे पच्यन्ते ये शालयः तेषां सधर्म्माणः अतिनिगूढ़ाः इत्यर्थः । धर्म्मादनिच् केवलादित्यनिच्प्रत्ययः समासान्तः । तस्य राज्ञः समारभ्यन्ते इति समारम्भाः कर्म्माणि गूढ़न् अप्रकाशं विपेचिरे फलिताः इत्यर्थः । फलानुमेयाः प्रारम्भाः इति भावः ॥ ५३ ॥

अपथेनेति । सः अतिथिः उपचितः वृद्धिं गतः अपि सन् जातु कदाचिदपि अपथेन कुमार्गेण न प्रववृते न प्रवृत्तः मर्य्यादां न जहौ इत्यर्थः । तथाहि, लवणाम्भसः लवणसागरस्य वृद्धौ पूरोत्पीड़े सत्यां नदीमुखेन एव नदीप्रवेशमार्गेण एव प्रस्थानं निःसरणं न त्वन्यथा इत्यर्थः ॥ ५४ ॥

काममिति । प्रकृतिवैरागं प्रजाविरागं दैवादुत्पन्नं

अस्य कार्य्यः प्रतीकारः स तन्नैवोदपादयत्॥ ५५ ॥
शक्येष्वेवाभवद् यात्रा तस्य शक्तिमतः सतः।
समीरणसहायोऽपि नाम्भःप्रार्थी दवानलः॥ ५६ ॥
न धर्म्म मर्थकामाभ्यां बबाधे न च तेन तौ।
नार्थं कामेन कामं वा सोऽर्थेन सदृश स्त्रिषु ॥५७॥

इति शेषः, सद्यः कामं सम्यक् शमयितुं क्षमः शक्तः सः राजा यस्य प्रकृतिवैराग्यस्य प्रतीकारः कार्य्यः कर्त्तव्यः अनर्थहेतुत्वात् इत्यर्थः, तत् वैराग्यं न उदपादयत्। उत्पन्नप्रतीकारादनुत्पादनं वरम् इति भावः। अत्र कौटिल्यः, "क्षीणाः प्रकृतय लोभं लुब्धा यान्ति विरागताम्। विरक्ता यान्त्यमित्रं वा भर्त्तारं घ्नन्ति वा स्वरम्॥" तस्मात् प्रकृतीनां विरागकारणानि नोत्पादयेत् इत्यर्थः॥ ५५ ॥

शक्येष्विति। शक्तिमतः शक्तिसम्पन्नस्यापि सतः तस्य राज्ञः शक्येषु शक्तिविषयेषु स्वस्माद्धीनबलेष्वेव विषये यात्रा दण्डयात्रा अभवत् न तु समधिकेषु इत्यर्थः। तथाहि, समीरणसहायः अपि दवानलः अम्भःप्रार्थी जलान्वेषी न दग्धुम् इति शेषः, किन्तु तृणकाष्ठादिकमेव अन्विष्यति इत्यर्थः। अत्र कौटिल्यः, "समज्यायोभ्यां सन्दधीत हीनेन विगृह्णीयात्" इति॥ ५६ ॥

न धर्म्ममिति। सः राजा अर्थकामाभ्यां धर्म्मं न बबाधे न नाशितवान्, तेन धर्म्मेण च तौ अर्थकामौ न, अर्थं कामेन कामं वा अर्थेन न बबाधे एकत्रैवासक्तो नाभूत् इत्यर्थः। किन्तु त्रिषु धर्म्मार्थकामेषु सदृशः तुल्यवृत्तिः अभूत् इत्यर्थः॥ ५७ ॥

हीनान्यनुपकर्तृणि प्रवृद्धानि विकुर्व्वते ।
तेन मध्यमशक्तीनि मित्राणि स्थापितान्यतः ॥५८॥
परात्मनोः परिच्छिद्य शक्त्यादीनां बलाबलम् ।
ययावेभिर्बलिष्ठश्चेत् परस्मादास्त सोऽन्यथा ॥५९॥
कोशेनाश्रयणीयत्व मिति तस्यार्थसंग्रहः ।

हीनानीति । मित्राणि हीनानि अतिक्षीणानि चेत् अनुपकर्तृणि अनुपकाराणि प्रवृद्धानि अतिसमृद्धानि चेत् विकुर्व्वते विरुद्धं चेष्टन्ते अपकुर्व्वते इत्यर्थः । अकर्म्मकात्वेत्यात्मनेपदम् । अतः कारणात् तेन राज्ञा मित्राणि सुहृदः । "मित्रं सुहृदि मित्रोऽर्के" इति विश्वः । मध्यमशक्तीनि नातिक्षीणोच्छ्रितानि यथा तथा स्थापितानि ॥ ५८ ॥

शक्तेष्वेवाभवद् यात्रा" इत्यादिनोक्तमर्थं सोपस्कारमाह, परेति । सः अतिथिः परात्मनोः शत्रोः आत्मनश्च शक्त्यादीनां "शक्तिदेशकालादीनां" बलाबलं न्यूनाधिकभावं परिच्छिद्य निश्चित्य, एभिः शक्त्यादिभिः परस्मात् शत्रोः बलिष्ठः स्वयम् अतिशयेन बलवान् चेत् । बलशब्दान्मतुबन्तादिष्ठन्प्रत्ययः, "विन्मतोर्लुग्" इति मतुपो लुक् । ययौ यात्रां चक्रे, अन्यथा अबलिष्ठश्चेत् आस्त अतिष्ठत् न ययौ इत्यर्थः । अत्र मनुः, "यदा मन्येत भावेन हृष्टपुष्टबलं स्वकम् । परस्य विपरीतं चेत् तदा यायाद् रिपून् प्रति । यदा तु स्यात् परिक्षीणो वाहनेन बलेन च । तदासीत प्रयत्नेन शनकैः सान्त्वयन्नरीन् ॥" इति ॥ ५९ ॥

कोशेनेति । कोशेन अर्थचयेन आश्रयणीयत्वं भवतीति शेषः इति हेतोः तस्य राज्ञः अर्थसंग्रहः न तु लोभात् इत्यर्थः ।

अम्बुगर्भो हि जीमूत श्चातकै रभिनन्द्यते ॥ ६० ॥
परकर्म्मापहः सोऽभू दुद्यतः स्वेषु कर्म्मसु ।
आवृणो दात्मनो रन्ध्रं रन्ध्रेषु प्रहरन् रिपून् ॥६१॥
पिता संवर्द्धितो नित्यं कृतास्त्रः साम्परायिकः ।
तस्य दण्डवतो दण्डः स्वदेहान्न व्यशिष्यत ॥ ६२ ॥

तथाहि, अम्बु गर्भे यस्य सः अम्बुगर्भः जीवनस्य जलस्य मूतः पुटबन्धः जीमूतः मेघः । मूङ् बन्धने पृषोदरादित्वात् साधुः । चातकैः अभिनन्द्यते सेव्यते । अत्र कामन्दकः, "धर्म्महेतोस्तथार्थाय भृत्यानां रक्षणाय च । आपदर्थञ्च संरक्ष्यः कोशो धर्म्मवता सदा ॥" इति ॥ ६० ॥

परकर्म्मेति । सः राजा परेषां कर्म्माणि सेतुवार्त्तादीनि अपहन्तीति परकर्म्मापहः सन् । अन्येभ्योऽपि दृश्यते इति अपशब्दसामर्थ्याद्धन्ते र्डप्रत्ययः । स्वेषु कर्म्मसु उद्यतः उद्युक्तः अभूत्, रिपून् रन्ध्रेषु प्रहरन् आत्मनः रन्ध्रं व्यसनादिकम् आवृणोत् संवृतवान् । अत्र मनुः, "नास्य च्छिद्रं परो विद्याद् विद्याच्छिद्रं परस्य तु । गूहेत् कूर्म्म इवाङ्गानि परक्षेद् विवरमात्मनः ॥" इति ॥ ६१ ॥

पितेति । दण्डः दमः सैन्यं वा तद्वतः दण्डवतः दण्डसम्पन्नस्य तस्य राज्ञः पिता कुशेन नित्यं संवर्द्धितः पुष्टः कृतास्त्रः शिक्षितास्त्रः सम्परायः युद्धम् । "युद्धायत्योः सम्परायः" इत्यमरः । तम् अर्हतीति साम्परायिकः । तदर्हतीति ठक्प्रत्ययः । दण्डः सैन्यम् । "दण्डो यमे मानभेदे लगुडे दमसैन्ययोः" इति विश्वः । स्वदेहात् न व्यशिष्यत न अभिद्यत ।

सर्पस्येव शिरोरत्नं नास्य शक्तित्रयं परः ।
स चकर्ष परस्मात् तदयस्कान्त इवायसम् ॥ ६३॥
वापीष्विव स्रवन्तीषु वनेषूपवनेष्विव ।
सार्थाः स्वैरं स्वकीयेषु चेरुर्वेश्मस्विवाद्रिषु ॥ ६४ ॥
तपो रक्षन् स विघ्नेभ्य स्तस्करेभ्यश्च सम्पदः ।
यथास्व माश्रमै श्चक्रे वर्णै रपि षड़ंशभाक् ॥ ६५ ॥
खनिभिः सुषुवे रत्नं क्षेत्रैः शस्यं वनै र्गजान् ।

स्वदेहेऽपि विशेषणानि योज्यानि। मूलवलं स्वदेहमिवारक्षत् इत्यर्थः ॥ ६२ ॥

सर्पस्येति। सर्पस्य शिरोरत्नम् इव, अस्य राज्ञः शक्तित्रयं परः शत्रुः न चकर्ष, सः तु परस्मात् शत्रोः तत् शक्तित्रयम् अयस्कान्तः मणिविशेषः आयसं लोहविकारम् इव, चकर्ष ॥ ६३॥

वापीष्विति। स्रवन्तीषु नदीषु वापीषु दीर्घिकासु इव। "वापी तु दीर्घिका" इत्यमरः। वनेषु अरण्येषु उपवनेषु आरामेषु इव। "आरामः स्यादुपवनम्" इत्यमरः। अद्रिषु स्वकीयेषु "वेश्मसु इव, सार्थाः वणिक्प्रभृतयः स्वैरं स्वच्छया चेरुः चरन्ति स्म ॥ ६४ ॥

तप इति। विघ्नेभ्यः तपः रक्षन् तस्करेभ्यः सम्पदश्च रक्षन् सः राजा आश्रमैः ब्रह्मचर्य्यादिभिः वर्णैरपि ब्राह्मणादिभिश्च यथास्वं स्वमनतिक्रम्य षड़ंशभाक् चक्रे यथाक्रममाश्रमैस्तपसः वर्णैः सम्पदाञ्च षष्ठांशभाक् कृतः इत्यर्थः। षष्ठः अंशः षड़ंशः संख्याशब्दस्य वृत्तिविषये पूरणार्थत्वमुक्तं प्राक् ॥ ६५ ॥

खनिभिरिति। भूः भूमिः तस्मै राज्ञे रक्षासदृशं रक्षानु-

दिदेश वेतनं तस्मै रक्षासदृशमेव भूः ॥ ६६ ॥
स गुणानां बलानाञ्च षण्णां षण्मुखविक्रमः ।
बभूव विनियोगज्ञः साधनीयेषु वस्तुषु ॥ ६७ ॥
इति क्रमात् प्रयुञ्जानो राजनीतिं चतुर्विधाम् ।
आतीर्था दप्रतीघातं स तस्याः फलमानशे ॥ ६८ ॥

रूपम् एव वेतनं भृतिं दिदेश ददौ । कथम् ? खनिभिः आकरैः "खनिः स्त्रियामाकरः स्यात्" इत्यमरः । रत्नं माणिक्यादिकं सुषुवे अजीजनत्, क्षेत्रैः शस्यम्, वनैः गजान् हस्तिनः सुषुवे ॥ ६६ ॥

स इति । षण्मुखविक्रमः सः राजा षण्णां गुणानां सन्धिविग्रहादीनां बलानां मूलभृत्यादीनाञ्च साधनीयेषु वस्तुषु साध्येषु अर्थेषु विनियोगं जानातीति, विनियोगस्य ज्ञः इति वा, विनियोगज्ञः । कर्म्मविवक्षायामुपपदसमासः, आतोऽनुपसर्गे क इति कप्रत्ययः । शेषविवक्षायां षष्ठीसमासः, इगुपधेत्यादिना कप्रत्ययः । बभूव, "इदमत्र प्रयोक्तव्यम्" इत्यादि अज्ञासीत् इत्यर्थः ॥ ६७ ॥

इतीति । इति चतुर्विधां सामाद्युपायैः इति शेषः, राजनीतिं दण्डनीतिं क्रमात् सामादिक्रमादेव प्रयुञ्जानः सः राजा आतीर्थात् मन्त्र्याद्यष्टादशात्मकतीर्थपर्य्यन्तम् । "योनौ जलावतारे च मन्त्र्याद्यष्टादशस्वपि । पुण्यक्षेत्रे तथा पात्रे तीर्थं स्यात्" इति हलायुधः । तस्याः नीतेः फलम् अप्रतीघातम् अप्रतिबन्धं यथा तथा आनशे प्राप्तवान् । मन्त्र्यादिषु यमुद्दिश्य य उपायः प्रयुज्यते स तस्य फलति इत्यर्थः ॥ ६८ ॥

कूटयुद्धविधिज्ञेऽपि तस्मिन् सन्मार्गयोधिनि ।
भेजेऽभिसारिकावृत्तिं जयश्रीर्वीरगामिनी ॥ ६८ ॥
प्रायः प्रतापभग्नत्वात् अरीणां तस्य दुर्लभः ।
रणो गन्धद्विपस्येव गन्धभिन्नान्यदन्तिनः ॥ ७० ॥
प्रवृद्धौ हीयते चन्द्रः समुद्रोऽपि तथाविधः ।
स तु तत्समवृद्धिश्च न चाभूत् ताविव क्षयी ॥ ७१ ॥
सन्तस्तस्याभिगमनात् अत्यर्थं महतः कृशः ।

कूटेति । कूटयुद्धविधिज्ञेऽपि कपटयुद्धप्रकाराभिज्ञेऽपि सन्मार्गेण योधिनि धर्म्मयोद्धरि तस्मिन् अतिथौ वीरगामिनी जयश्रीः अभिसारिकावृत्तिं भेजे । "कान्तार्थिनी तु या याति सङ्केतं साभिसारिका" -इत्यमरः । जयश्रीस्तमन्विष्य आगच्छत्

प्रायइति । अरीणां सर्वेषां प्रतापेण अतितेजसैव भग्नत्वात् तस्य राज्ञः, गन्धेन मदगन्धेन भिन्नाः भग्नाः अन्ये दन्तिन येन तस्य गन्धद्विपस्येव, प्रायः प्रायेण रणः दुर्लभः । खल्वर्थ-योगेऽपि शेषविवक्षायां षष्ठीमिच्छन्तीत्युक्तम् ॥ ७० ॥

प्रवृद्धाविति । प्रवृद्धौ सत्यां चन्द्रः हीयते, समुद्रः अपि तथाविधः चन्द्रवत् एव प्रवृद्धः हीयते । प्रवृद्धः इति वा पाठः । सः राजा तु ताभ्यां चन्द्रसमुद्राभ्यां समा वृद्धिः यस्य सः तत्-समवृद्धिश्च अभूत् तौ चन्द्रसमुद्रौ इव क्षयी । जिदृक्षीत्यादिना इनिप्रत्ययः । न अभूत् ॥ ७१ ॥

सन्त इति अत्यर्थं कृशाः दरिद्राः अतएव अर्थिनः याचन-

उदधेरिव जीमूताः प्रापुर्दातृत्वमर्थिनः ॥ ७२ ॥

स्तूयमानः स जिह्राय स्तुत्यमेव समाचरन् ।
तथापि ववृधे तस्य तत्कारिद्वेषिणो यशः ॥ ७३ ॥

दुरितं दर्शनेन घ्नन् तत्त्वार्थेन नुदंस्तमः ।
प्रजाः स्वतन्त्रयाञ्चक्रे शश्वत् सूर्य्य इवोदितः ॥७४॥

इन्दोरगतयः पद्मे सूर्य्यस्य कुमुदेंऽशवः ।
गुणास्तस्य विपक्षेऽपि गुणिनो लेभिरेऽन्तरम् ॥७५॥

शीलाः सन्तः विद्वांसः महतः तस्य राज्ञः अभिगमनात् उदधेः अभिगमनात् जीमूताः इव, दातृत्वं प्रापुः, अर्थिषु दान-भोगपर्य्याप्तं धनं प्रयच्छति इत्यर्थः ॥ ७२ ॥

स्तूयमानइति । सः राजा स्तुत्यं स्तोत्रार्हमेव यत् तदेव समाचरन् अतएव स्तूयमानः सन् जिह्राय ललज्ज, तथापि क्षीणत्वेऽपि तत्कारिणः स्तोत्रकारिणः द्वेष्टीति तत्कारिद्वेषिणः तस्य राज्ञः यशः ववृधे । गुणाढ्यस्य पुंसः स्तुतौ लज्जैव भूषणम् इति भावः ॥ ७३ ॥

दुरितमिति । सः राजा, उदितः सूर्य्यः इव, दर्शनेन दुरितं घ्नन् निवर्त्तयन् । तथा च स्मर्य्यते, "अग्निचित् कपिला सत्री राजा भिक्षुर्महोदधिः । दृष्टमात्रा पुनन्त्येते तस्मात् पश्येत नित्यशः ॥"-इति । तत्त्वस्य वस्तुतत्त्वस्य अर्थेन समर्थेन प्रकाशेन च तमः अज्ञानं ध्वान्तं च नुदन् शश्वत् प्रजाः स्वतन्त्र-याञ्चक्रे स्वाधीनाः चकार ॥ ७४ ॥

इन्दोरिति । इन्दोः अंशवः पद्मे अगतयः प्रवेशरहिताः

पराभिसन्धानपरं यद्यप्यस्य विचेष्टितम् ।
जिगीषोरश्वमेधाय धर्म्म्यमेव बभूव तत् ॥ ७६ ॥
एवमुद्यन् प्रभावेण शास्त्रनिर्दिष्टवर्त्मना ।
वृषेव देवो देवानां राज्ञां राजा बभूव सः ॥ ७७ ॥
पञ्चमं लोकपालानाम् ऊचुः साधर्म्ययोगतः ।
भूतानां महतां षष्ठम् अष्टमं कुलभूभृताम् ॥ ७८ ॥

इत्यर्थः ; सूर्य्यस्य अंशवः कुमुदे अगतयः । गुणिनः तस्य गुणास्तु विपक्षे शत्रौ अपि अन्तरम् अवकाशं लेभिरे प्रापुः । ७५ ॥

परेति । अश्वमेधाय जिगीषोः अस्य विचेष्टितं दिग्विजयरूपं यद्यपि पराभिसन्धानपरं शत्रुवञ्चनप्रधानं तथापि तत् धर्म्म्यं धर्म्मात् अनपेतमेव । धर्म्मपथ्यर्थन्यायादनपेतइति यत् प्रत्ययः । बभूव । "मन्त्रप्रभावोत्साहशक्तिभिः परान् सन्दध्यात्" -इति कौटिल्यः ॥ ७६ ॥

एवमिति । एवं शास्त्रनिर्दिष्टवर्त्मना शास्त्रोपदिष्टमार्गेण प्रभावेण कोशदण्डजेन तेजसा । "स प्रभावः प्रतापश्च यत् तेजः कोशदण्डजम्" -इत्यमरः । उद्यन् उद्युञ्जानः सः, वृषा वासवः देवानां देवः देवदेवः इव, राज्ञां राजा राजराजः बभूव ॥ ७७ ॥

पञ्चममिति । तं राजानाम् इति शेषः, साधर्म्ययोगतः यथाक्रमं लोकसंरक्षणपरोपकारभूधारणरूपसमानधर्म्मत्ववलात् लोकपालानाम् इन्द्रादीनां चतुर्णां पञ्चमम् ऊचुः, महतां भूतानां पृथिव्यादीनां पञ्चानां षष्ठम् ऊचुः, कुलभूभृतां कुलाचलानां महेन्द्रमलयादीनां सप्तानाम् अष्टमम् ऊचुः ॥ ७८ ॥

दूरापवर्ज्जितच्छत्रैः तस्याज्ञां शासनार्पिताम्।
दधुः शिरोभिर्भूपाला देवाः पौरन्दरीमिव ॥७९॥
ऋत्विजः स तथानर्च्च दक्षिणाभिर्महाक्रतौ।
यथा साधारणीभूतं नामास्य धनदस्य च ॥ ८० ॥
इन्द्राद् वृष्टिर्नियमितगदोद्रेकवृत्तिर्यमोऽभूत्,
यादोनाथः शिवजलपथः कर्म्मणे नौचराणाम्।

दूरेति। भूपालाः शासनेषु अर्पिताम् उपन्यस्तां तस्य राज्ञः आज्ञाम्, देवाः पौरन्दरीम् ऐन्द्रीम् आज्ञाम् इव, दूरापवर्ज्जितच्छत्रैः दूरात्परित्यक्तच्छत्रैः शिरोभिः दधुः ॥ ७९ ॥

ऋत्विजइति सः राजा महाक्रतौ अश्वमेधे ऋत्विजः याजकान् दक्षिणाभिः तथा आनर्च्च अर्च्चयामास। अर्च्चतेर्भौवादिकाल्लिट्। यथा अस्य राज्ञः धनदस्य च नाम साधारणीभूतम् एकीभूतम्, उभयोरपि धनदसंज्ञा यथा स्यात् तथा इत्यर्थः ॥ ८० ॥

इन्द्रादिति। इन्द्रात् वृष्टिः अभूत्, यमः नियमिता निवारिता गदस्य रोगस्य उद्रेकः एव वृत्तिः येन सः अभूत्, यादोनाथः वरुणः नौचराणां नाविकानां कर्म्मणि सञ्चाराय शिवजलपथः सुचरजलमार्गः अभूत्, तदनु पूर्व्वापिची रघुरामादियशोमहिमाभिज्ञः कुवेरः कोषवृद्धिं विदधे, इत्थं लोकपालाः तस्मिन् राज्ञि विषये दण्डोपनतस्य शरणागतस्य चरितं वृत्तिं भेजिरे। "दुर्ब्बलो बलवत्सेवी विरुद्धाच्छङ्कितादिभिः।

पूर्व्वां पेचे तदनु विदधे कोषवृद्धिं कुवेरः,
तस्मिन् दण्डोपनतचरितं भेजिरे लोकपालाः ॥८१॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ
अतिथिवर्णनो नाम सप्तदशः सर्गः ॥

---

वर्त्तेन दण्डोपनतः भर्त्तर्य्येवमवस्थितः ॥" इति कौटिल्यः ॥८१॥

इति श्रीमहामहोपाध्याय कोलाचलमल्लिनाथसूरि-विरचितायां
रघुवंशटीकायां सञ्जीवनीसमाख्यायां सप्तदशः सर्गः ।

---

# अष्टादशः सर्गः ।

स नैषधस्यार्थपतेः सुताया
मुत्पादयामास निषिद्धशत्रुः ।
अनूनसारं निषधान्नगेन्द्रात्
पुत्रं यमाहुर्निषधाख्यमेव ॥ १ ॥

तेनोरुवीर्य्येण पिता प्रजायै
कल्पिष्यमाणेन ननन्द यूना ।
सुवृष्टियोगादिव जीवलोकः
शस्येन सम्पत्तिफलोन्मुखेन ॥ २ ॥

यत्पदाम्बुजसम्पर्कात् अहल्यासीदपांशुला ।
कारुण्यसिन्धवे तस्मै नमो वैदेहिबन्धवे ॥

सद्दति । निषिद्धशत्रुः निवारितरिपुः सः अतिथिः नैषधस्य निषधदेशाधीश्वरस्य अर्थपतेः रायः सुतायां निषधात् निषधाख्यात् नगेन्द्रात् पर्व्वतात् अनूनसारम् अन्यूनबलं पुत्रम् उत्पादयामास, यं पुत्रं निषधाख्यं निषधनामकमेवाहुः ॥ १ ॥

तेनेति । उरुवीर्य्येण अतिपराक्रमेण अतएव प्रजायै लोकरक्षणार्थं कल्पिष्यमाणेन तेन यूना निषधेन पिता अतिथिः, सुवृष्टियोगात् सम्पत्तिफलोन्मुखेन पाकाभिमुखेन शस्येन जीवलोकः इव, ननन्द जहर्ष ॥ २ ॥

शब्दादि निर्विश्य सुखं चिराय
तस्मिन् प्रतिष्ठापितराजशब्दः।
कौमुद्वतेयः कुमुदावदातै-
र्द्यामर्ज्जितां कर्म्मभिरारुरोह ॥ ३ ॥

पौत्रः कुशस्यापि कुशेशयाक्षः
ससागरां सागरधीरचेताः।
एकातपत्रां भुवमेकवीरः
पुरार्गलादीर्घभुजो बुभोज ॥ ४ ॥

तस्यानलौजास्तनयस्तदन्ते
वंशश्रियं प्राप नलाभिधानः।

शब्दादीति। कुमुद्वत्याः अपत्यं पुमान् कौमुद्वतेयः अतिथिः शब्दादि शब्दस्पर्शादि सुखं सुखसाधनं विषयवर्गं निर्विश्य उपभुज्य चिराय तस्मिन् निषधाख्ये पुत्रे प्रतिष्ठापितराजशब्दः दत्तराज्यः सन् कुमुदावदातैः निर्मलैः कर्म्मभिः अश्वमेधादिभिः अर्ज्जितां द्यां स्वर्गम् आरुरोह ॥ ३ ॥

पौत्र इति। कुशेशयाक्षः शतपत्रलोचनः। "शतपत्र कुशेशयम्" -इत्यमरः सागरधीरचेताः समुद्रगम्भीरचित्तः एकवीरः असहायशूरः पुरस्य अर्गला -कपटाविष्कम्भः "तत् विष्कम्भोऽर्गलं ना" -इत्यमरः। तद्वद्दीर्घभुजः कुशस्य पौत्रः निषधः अपि ससागराम् एकातपत्रां भुवं बुभोज पालयामास। भुजोऽनवन इत्युक्तेः परस्मैपदम् ॥ ४ ॥

तस्येति। अनलौजाः अग्नितेजाः नलाख्यः तस्य निषधस्य

यो नड्वलानीव गजः परेषां
बलान्यमृद्नान्नलिनाभवक्त्रः ॥ ५ ॥
नभश्चरैर्गीतयशाः स लेभे
नभस्तलश्यामतनुं तनूजम् ।
ख्यातं नभःशब्दमयेन नाम्ना
कान्तं नभोमासमिव प्रजानाम् ॥ ६ ॥
तस्मै विसृज्योत्तरकोशलानां
धर्म्मोत्तरस्तत् प्रभवे प्रभुत्वम् ।
मृगैरजर्य्यं जरसोपदिष्ट
मदेहबन्धाय पुनर्बबन्ध ॥ ७ ॥

तनयः तस्य निषधस्य अन्ते अवसाने वंशश्रियं राज्यलक्ष्मीं प्राप । नलिनाभवक्त्रः यः नलः, गजः नड्वलानि नड़प्रायः-स्थलानि इव । नड़शब्दात् ड्वलजिति ड्वलच्प्रत्ययः । परेषां अमृद्नात् ॥ ५ ॥

नभ इति । नभश्चरैः गन्धर्वादिभिः गीतयशाः सः नलः नभस्तलश्यामतनुं नभःशब्दमयेन नाम्ना ख्यातं नभः शब्दसंयकम् इत्यर्थः, नभोमासम् इव श्रावणमासम् इव, प्रजानां कान्तं प्रियं तनूजं पुत्त्रं लेभे ॥ ६ ॥

तस्मै इति । धर्म्मोत्तरः धर्म्मप्रधानः नलः प्रभवे समर्थाय तस्मै नभसे तत् उत्तरकोशलानां प्रभुत्वम् आधिपत्यं विसृज्य दत्त्वा जरसा जरया उपदिष्टं वार्द्धके चिकीर्षितम् इत्यर्थः ; मृगैः अजर्य्यं तैः सह सङ्गतम् । अजर्य्य सङ्गतमिति निपात

तेन द्विपानामिव पुण्डरीकः
राज्ञामजय्योऽजनिपुण्डरीकः ।
शान्ते पितर्य्याहृतपुण्डरीका
यं पुण्डरीकाक्षमिव श्रिता श्रीः ॥ ८ ॥

स क्षेमधन्वानममोघधन्वा
पुत्रं प्रजाक्षेमविधानदक्षम् ।
क्ष्मां लम्भयित्वा क्षमयोपपन्नं
वने तपः क्षान्ततरश्चचार ॥ ९ ॥

पुनः अदेहबन्धाय पुनर्देहसम्बन्धनिवृत्तये ववन्ध मोक्षार्थं वनं गतः इत्यर्थः । अदेहबन्धायेत्यत्र प्रसज्यप्रतिषेधेऽपि नञ्समास इष्यते ॥ ७ ॥

तेनेति । तेन नभसा, द्विपानां पुण्डरीकः दिग्गजविशेषः इव, राज्ञाम् अजय्यः जेतुमशक्यः । क्षय्यजय्यौ शक्यार्थे इति निपातः । पुण्डरीकः पुण्डरीकाख्यः पुत्रः अजनि जनितः । पितरि शान्ते स्वर्गते सति आहृतपुण्डरीका गृहीतश्वेतपद्मा श्रीः यं पुण्डरीकं, पुण्डरीकाक्षं विष्णुम् इव, श्रिता ॥ ८ ॥

स इति । अमोघं धनुः यस्य सः अमोघधन्वा । धनुषश्चेत्यनङादेशः समासान्तः । सः पुण्डरीकः प्रजानां क्षेमविधानदक्षं क्षमयोपपन्नं क्षान्तियुक्तं क्षेमं धनुः यस्य तं क्षेमधन्वानं नाम पुत्रम् । वा सञ्ज्ञायामित्यनङादेशः । क्ष्मां लम्भयित्वा प्रापय्य । लभेर्गत्यर्थत्वात् द्विकर्मकत्वम् । क्षान्ततरः अत्यन्तसहिष्णुः सन् वने तपः चचार ॥ ९ ॥

अनीकिनीनां समरेऽग्रयायी
तस्यापि देवप्रतिमः सुतोऽभूत्।
व्यश्रूयतानीकपदावसानं
देवादि नाम त्रिदिवेऽपि यस्य॥ १०॥
पिता समाराधनतत्परेण
पुत्रेण पुत्री स यथैव तेन।
पुत्रस्तथैवात्मजवत्सलेन
स तेन पित्रा पितृमान् बभूव॥ ११॥
पूर्व्वस्तयोरात्मसमे चिरोढ़ा
मात्मोद्भवे वर्णचतुष्टयस्य।

अनीकिनीनामिति। तस्य क्षेमधन्वनः अपि समरे अनीकिनीनां चमूनाम् अग्रयायी देवप्रतिमः इन्द्रादिकल्पः सुतः अभूत्। अनीकपदावसानम् अनीकशब्दान्तं देवादि देवशब्दपूर्व्वं यस्य नाम देवानीकः इति नामधेयं त्रिदिवे स्वर्गे अपि व्यश्रूयत विश्रुतम्॥ १०॥

पितेति। सः पिता क्षेमधन्वा समाराधनतत्परेण शुश्रूषापरेण तेन पुत्रेण यथैव पुत्री बभूव तथैव सः पुत्रः देवानीकः आत्मजवत्सलेन तेन पित्रा पितृमान् बभूव लोके पितृत्वपुत्रत्वयोः फलमनयोरेवासीत् इत्यर्थः॥ ११॥

पूर्व्वइति। गुणानाम् एकनिधि यज्वा विधिवत् इष्टवान् तयोः पितृपुत्रयोः मध्ये पूर्व्वः पिता क्षेमधन्वा आत्मसमे स्वतुल्ये आत्मोद्भवे पुत्रे देवानीके चिरोढ़ां चिरं धृत वर्णचतुष्टयस्य

धुरं निधायैकनिधिर्गुणानां
जगाम यज्वा यजमानलोकम् ॥ १२ ॥
वशी सुतस्तस्य वशंवदत्वात्
स्वेषामिवासीत् द्विषतामपीष्टः ।
सकृद्विविग्नानपि हि प्रयुक्तं
माधुर्य्यमीष्टे हरिणान् ग्रहीतुम् ॥ १३ ॥
अहीनगुर्नाम स गां समग्रा
महीनबाहुद्रविणः शशास ।
यो हीनसंसर्गपराङ्मुखत्वाद्
युवाप्यनर्थैर्व्यसनैर्विहीनः ॥ १४ ॥

धुरं रक्षाभारं निधाय यजमानलोकं यष्टृलोकं नाकं जगाम ॥ १२ ॥

वशीति । तस्य देवानीकस्य वशी समर्थः सुतः अहीनगुर्नामेति वक्ष्यमाण-नामकः वशं ववकारं मधुरं वदतीति व-वदः । प्रियवशे वदः खजिति खच्प्रत्ययः । तस्य भावः तत्त्वं तस्मात् इष्टवादित्वात् स्वेषाम् इव द्विषताम् अपि इष्टः प्रियः आसीत् । तथाहि, प्रयुक्तम् उच्चारितं माधुर्य्यं सकृत् एकवारं विविग्नान् भीतान् अपि हरिणान् ग्रहीतुं वशीकर्त्तुम् ईष्टे शक्नोति ॥ १३ ॥

अहीनगुरिति । अहीनबाहुद्रविणः समग्रभुजपराक्रमः । "द्रविणं काञ्चनं वित्तं द्रविणञ्च पराक्रमः"-इति विश्वः । हीन संसर्गपराङ्मुखत्वात् नीचसंसर्गविमुखत्वाद्धेतोः युवा अपि अन-र्थैः

गुरोः स चानन्तरमन्तरज्ञः
पुंसां पुमानाद्य इवावतीर्णः।
उपक्रमैरस्खलितैश्चतुर्भि
श्चतुर्दिगीशश्चतुरो बभूव ॥ १५ ॥
तस्मिन् प्रयाते परलोकयात्रां
जेतर्य्यरीणां तनयं तदीयम्।
उच्चैःशिरस्त्वाज्जितपारियात्रं
लक्ष्मीः सिषेवे किल पारियात्रम् ॥ १६ ॥
तस्याभवत् सूनुरुदारशीलः
शिलः शिलापट्टविशालवक्षाः।

अनर्थकरैः व्यसनैः पानद्यूतादिभिः विहीनः रहितः यः अहीन-गुर्नाम, सः पूर्व्वोक्तदेवानीकसुतः समग्रां सर्व्वां गां भुवं शशास ॥ १४ ॥

गुरोरिति। पुंसाम् अन्तरज्ञः विशेषज्ञः चतुरः निपुणः सः अहीनगुश्च गुरोः पितुः अनन्तरम्, अवतीर्णः भुवं प्राप्तः आद्यः पुमान् विष्णुः इव, अस्खलितैः अप्रतिहतैः चतुर्भिः उपक्रमैः सामाद्युपायैः। "सामादिभिरुपक्रमैः" -इति मनुः। चतुर्दिगीशः चतसृणां दिशाम् ईशः बभूव ॥ १५ ॥

तस्मिन्निति। अरीणां जेतरि तस्मिन् अहीनगौ परलोक-यात्रां प्रयाते प्राप्ते सति उच्चैःशिरस्त्वात् उन्नतशिरस्त्वात् जितः पारियात्रः कुलशैलविशेषः येन तं पारियात्रं पारियात्राख्यं तदीयं तनयं लक्ष्मीः राज्यलक्ष्मीः सिषेवे किल ॥ १६ ॥

जितारिपक्षोऽपि शिलीमुखैर्यः
शालीनतामव्रजदीड्यमानः ॥ १७ ॥

तमात्मसम्पन्नमनिन्दितात्मा
कृत्वा युवानं युवराजमेव ।
सुखानि सोऽभुङ्क्त सुखोपरोधि
वृत्तं हि राज्ञा मुपरुद्धवृत्तम् ॥ १८ ॥

तस्येति । तस्य पारियात्रस्य उदारशीलः महावृत्तः। "शीलं स्वभावे सद्वृत्ते"-इत्यमरः। शिलापट्टविशालवक्षाः शिलः शिलाख्यः सूनुः, अभवत् । यः सूनुः शिलामुखैः वाणैः । "अलिवाणौ शिलीमुखौ"-इत्यमरः। जितारिपक्षः अपि ईड्यमानः स्तूयमानः सन् शालीनताम् अधृष्टताम् लज्जाम् अव्रजत् अगच्छत् । "स्यादधृष्टे तु शालीनः"-इत्यमरः। शालीनकौपीने इति निपातः ॥ १७ ॥

तमिति। अनिन्दितात्मा अगर्हितस्वभावः सः पारियात्रः आत्मसम्पन्नं बुद्धिसम्पन्नम्। "आत्मा यत्नः धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च" -इत्युभयत्राप्यमरः। युवानं तं शिलं युवराजं कृत्वा एव सुखानि अभुङ्क्त, न त्वकृत्वेत्येवकारार्थः। किमर्थं युवराजकरणमित्याशङ्क्य अन्यथा सुखोपभोगो दुर्लभ इत्याह- सुखोपरोधीति । हि यस्मात् राज्ञां वृत्तं प्रजापालनादि- रूपं सुखोपरोधि बहुलत्वात् सुखप्रतिबन्धकम् अतएव उपरुद्ध- वृत्तम् कारादिबद्धसदृशम् इत्यर्थः। उपरुद्धस्य स्वयमूढभारस्य च सुखं नास्ति इति भावः ॥ १८ ॥

तं रागबन्धिष्ववितृप्तमेव
भोगेषु सौभाग्यविशेषभोग्यम् ।
विलासिनीनामरतिक्षमापि
जरा वृथा मत्सरिणी जहार ॥ १९ ॥

उन्नाभ इत्युद्गतनामधेय-
स्तस्याः यथार्थोन्नतनाभिरन्ध्रः ।
सुतोऽभवत् पङ्कजनाभकल्पः
कृत्स्नस्य नाभिर्नृपमण्डलस्य ॥ २० ॥

तमिति । रागं बध्नन्तीति रागबन्धिनः रागप्रवर्त्तकाः इत्यर्थः तेषु भोगेषु विषयेषु अवितृप्तमेव सन्तं किञ्च विलासिनीनां भोक्त्रीणां सौभाग्यविशेषेण सौन्दर्य्यातिशयेन हेतुना भोग्यं भोगार्हम् । चजोः कु घिण्यतोरिति कुत्वम् । तं पारियात्रं रतिक्षमा न भवतीति अरतिक्षमापि अतएव वृथा मत्सरिणी रतिक्षमासु विलासिनीषु इत्यर्थः जरा जहार वशीचकार ॥ १९ ॥

उन्नाभइति । तस्य शिलाख्यस्य उन्नाभः इति उद्गतनामधेयः प्रसिद्धनामा अयथार्थं यथा तथा उन्नतं नाभिरन्ध्रं यस्य सः गम्भीरनाभिः इत्यर्थः । तदुक्तम्- "स्वरः सत्वञ्च नाभिश्च गाम्भीर्य्यं त्रिषु शस्यते" । पङ्कजनाभकल्पः विष्णुसदृशः कृत्स्नस्य नृपमण्डलस्य नाभिः प्रधानम् । "नाभिः प्रधाने कस्तूरीमदेऽपि क्वचिदीरितः"-इति विश्वः । सुतः अभवत् । अच्प्रत्यन्ववपूर्व्वात् सामलोम्न इत्यजिति योगविभागादुन्नाभपद्मनाभादयः सिद्धाः ॥ २० ॥

ततः परं वज्रधरप्रभावः
तदात्मजः संयति वज्रघोषः ।
बभूव वज्राकरभूषणायाः
पतिः पृथिव्याः किल वज्रणाभः ॥ २१ ॥

तस्मिन् गते द्यां सुकृतोपलब्धां
तत्सम्भवं शङ्खणमर्णवान्ता ।
उत्खातशत्रुं वसुधोपतस्थे
रत्नोपहारैरुदितैः खनिभ्यः ॥ २२ ॥

तस्यावसाने हरिदश्वधामा
पित्र्यं प्रपेदे पदमश्विरूपः ।

तत इति । ततः परं वज्रधरप्रभावः इन्द्रतेजाः संयति संग्रामे वज्रघोषः अशनितुल्यध्वनिः वज्रनाभः नाम तस्य उन्नाभस्य आत्मजः वज्राणां हीरकाणाम् आकराः खनयः एव भूषणानि यस्याः तस्याः पृथिव्याः पतिः बभूव किल । २१ ।

तस्मिन्निति । तस्मिन् वज्रणाभे सुकृतोपलब्धां धर्म्मार्ज्जितां द्यां स्वर्गं गते सति, उत्खातशत्रुम् उद्धृतशत्रुं शङ्खणं नाम तत्सम्भवं तदात्मजम् अर्णवान्ता वसुधा खनिभ्यः आकरेभ्यः उदितैः उत्पन्नैः रत्नोपहारैः उत्कृष्टवस्तुसमर्पणैः उपतस्थे सिषेवे । "जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते"-इति भरतविश्वौ ॥ २२ ॥

तस्येति । तस्य शङ्खणस्य अवसाने अन्ते हरिदश्वधामाः सूर्य्यतेजाः अश्विनोः इव रूपमस्येति अश्विरूपः अतिसुन्दरः तत्सुतः इति शेषः पित्र्यमिति सम्बन्धिपदसामर्थ्यात्, पित्र्यं पदं

वेलातटेषूषितसैनिकाश्वं
पुरोविदो यं व्युषिताश्वमाहुः ॥ २३ ॥
आराध्य विश्वेश्वरमीश्वरेण
तेन क्षितेर्विश्वसहो विजज्ञे ।
पातुं सहो विश्वसखः समग्रां
विश्वम्भरामात्मजमूर्त्तिरात्मा ॥ २४ ॥
अंशे हिरण्याक्षरिपोः स जाते
हिरण्यनाभे तनये नयज्ञः ।
द्विषामसह्यः सुतरां तरूणां
हिरण्यरेता इव सानिलोऽभूत् ॥ २५ ॥

प्रवेटे । वेलातटेषु उषिताः निविष्टाः सैनिकाः अश्वाश्च यस्य तम् अन्वर्थनामानम् इत्यर्थः यं पुत्रं पुराविदः वृद्धाः व्युषिताश्वम् आहुः ॥ २३ ॥

आराध्येति । तेन क्षितेः ईश्वरेण व्युषिताश्वेन विश्वेश्वरं काशीपतिम् आराध्य उपास्य विश्वसहः नाम विश्वसखः समग्रां सर्व्वां विश्वम्भरां भुवं पातुं रक्षितुं सहते इति सहः क्षमः । पचाद्यच् । आत्मजमूर्त्तिः पुत्ररूपो आत्मा स्वयमेव । "आत्मा वै पुत्रनामासि"- इति श्रुतेः । विजज्ञे सुषुवे । विपूर्व्वो जनिर्गर्भविमोचने वर्त्तते । यथाह भगवान् पाणिनः- "स मां विजायते" -इति । २४ ।

अंशइति । नयज्ञः नीतिज्ञः सः विश्वसहः हिरण्याक्षरिपोः विष्णोः अंशे हिरण्यनाभे नाम्नि तनये जाते सति,

पिता पितॄणामनृणस्तमन्ते
वयस्यनन्तानि सुखानि लिप्सुः ।
राजानमाजानुविलम्बिबाहुं
कृत्वा कृती वल्कलवान् बभूव ॥ २६ ॥

कौशल्य इत्युत्तरकोशलानां
पत्युः पतङ्गान्वयभूषणस्य ।
तस्यौरसः सोमसुतः सुतोऽभूत्
नेत्रोत्सवः सोम इव द्वितीयः ॥ २७ ॥

तरूणां सानिलः हिरण्यरेताः हुतभुक् इव, द्विषां सुतराम् असह्यः अभूत् ॥ २५ ॥

पितेति । पितॄणाम् अनृणः निवृत्तपितृऋणः इत्यर्थः । "प्रजया पितृभ्यः" इति श्रुतेः । अत एव कृती कृतकृत्यः इत्यर्थः, पिता विश्वसहः अन्ते वयसि वार्द्धके अनन्तानि अविनाशानि सुखानि लिप्सुः मुमुक्षुः इत्यर्थः, आजानुविलम्बिबाहुं दीर्घबाहुं भाग्यसम्पन्नम् इति भावः तं हिरण्यनाभं राजानं कृत्वा वल्कलवान् बभूव वनं गतः इत्यर्थः ॥ २६ ॥

कौशल्य इति । उत्तरकोशलानां पत्युः पतङ्गान्वयभूषणस्य सूर्य्यवंशाभरणस्य सोमसुतः सोमं सुतवतः यज्वनः इत्यर्थः । सोमे सुञ इति क्विप् । तस्य हिरण्यनाभस्य, द्वितीयः सोमः चन्द्रः इव, नेत्रोत्सवः नयनानन्दकरः कौशल्यः इति प्रसिद्धः औरसः धर्म्मपत्नीजः सुतः अभूत् ॥ २७ ॥

यशोभिरात्रह्मसभं प्रकाशः
स ब्रह्मभूयं गतिमाजगाम ।
ब्रह्मिष्ठमाधाय निजेऽधिकारे
ब्रह्मिष्ठमेव स्वतनुप्रसूतम् ॥ २८ ॥

तस्मिन् कुलापीडनिभे विपीडं
सम्यङ्महीं शासति शासनाङ्काम् ।
प्रजाश्चिरं सुप्रजसि प्रजेशे
ननन्दुरानन्दजलाविलाक्ष्यः ॥ २९ ॥

यशोभिरिति । आब्रह्म सभायाः आब्रह्मसभं ब्रह्मसदनपर्य्यन्तम् । अभिविधावव्ययीभावः । यशोभिः प्रकाशः प्रसिद्धः सः कौशल्यः अतिशयेन ब्रह्मवन्तं ब्रह्मिष्ठं ब्रह्मविदम् इत्यर्थः । ब्रह्मशब्दान्मतुबन्तादिष्ठन् प्रत्यये विन्मतोर्लुगिति मतुपो लुक्, नस्तद्धित इति टिलोपः । ब्रह्मिष्ठं ब्रह्मिष्ठाख्यं स्वतनुप्रसूतं आत्मजम् एव निजे स्वकीये अधिकारे प्रजापालनकृत्ये आधाय निधाय ब्रह्मणो भावः ब्रह्मभूयं ब्रह्मत्वं तदेव गतिः ताम् आजगाम मुक्तोऽभूत् इत्यर्थः । "स्याद् ब्रह्मभूयं ब्रह्मत्वम्" इत्यमरः । भुवो भावे क्यप् ॥ २८ ॥

तस्मिन्निति । कुलापीडनिभे कुलशेखरतुल्ये । "शिखास्वापीडशेखरौ" इत्यमरः । सुप्रजसि सत्सन्तानवति । नित्यमसिच् प्रजामेधयोरित्यसिच्प्रत्ययः । तस्मिन् प्रजेशे ब्रह्मिष्ठे शासनाङ्कां शासनचिह्नां महीं विपीडं निर्बाधं यथा तथा सम्यक् शासति

पात्रीकृतात्मा गुरुसेवनेन
स्पष्टाकृतिः पत्त्ररथेन्द्रकेतोः।
तं पुत्रिणां पुष्करपत्त्रनेत्रः
पुत्त्रः समारोपयदग्रसङ्ख्याम् ॥ ३० ॥
वंशस्थितिं वंशकरेण तेन
सम्भाव्य भावी स सखा मघोनः।
उपस्पृशन् स्पर्शनिवृत्तलौल्यः
त्रिपुष्करेषु त्रिदशत्वमाप ॥ ३१ ॥

सति आनन्दजलाविलाक्षः आनन्दवाष्पाकुलनेत्राः प्रजाः चिरं ननन्दुः ॥ २९ ॥

पात्रीकृतेति। गुरुसेवनेन पित्रादिशुश्रूषया पात्रीकृतात्मा "योग्यभाजनयोः पात्रम्" इत्यमरः। पत्त्ररथेन्द्रकेतोः गरुड़ध्वजस्य स्पष्टाकृतिः स्पष्टवपुः तत्स्वरूपः इत्यर्थः। "आकृतिः कथिता रूपे सामान्यवपुषोरपि" इति विश्वः। पुष्करपत्त्रनेत्रः पद्मपलाशाक्षः पुत्त्रः पुत्राख्यः राजा यद्वा पुत्रशब्द आवर्त्तनीयः पुत्त्रः पुत्राख्यः पुत्त्रः सुतः, तं वशिष्ठं पुत्रिणाम् अग्रसंख्यां समारोपयत् अग्रगण्यं चकार इत्यर्थः ॥ ३० ॥

वंशेति। स्पृश्यन्ते इति स्पर्शाः विषयाः तेभ्यः निवृत्तलौल्यः निवृत्ततृष्णः अत एव मघोनः इन्द्रस्य सखा मित्रं भावी भविष्यन् स्वर्गं जिगमिषुः इत्यर्थः सः ब्रह्मिष्ठः वंशकरेण वंशप्रवर्त्तकेन तेन पुत्रेण वंशस्थितिं कुलप्रतिष्ठां सम्भाव्य सम्पाद्य त्रिपुष्करेषु तीर्थविशेषेषु। दिक्संख्ये संज्ञायाम् इति समासः। उपस्पृशन् स्नानं कुर्व्वन् त्रिदशत्वं देवभूयम् आप ॥ ३१ ॥

तस्य प्रभानिर्जितपुष्परागं
पौष्यान्तिथौ पुष्य मसूत पत्नी ।
तस्मिन्नपुष्यन्नुदिते समग्रां
पुष्टिं जनाः पुष्य इव द्वितीये ॥ ३२ ॥
महीं महेच्छः परिकीर्य्य सूनौ
मनीषिणे जैमिनयेऽर्पितात्मा ।
तस्मात् सयोगादधिगम्य योग
मजन्मनेऽकल्पत जन्मभीरुः ॥ ३३ ॥
ततः परं तत्प्रभवः प्रपेदे
ध्रुवोपमेयो ध्रुवसन्धिरुर्व्वीम् ।

तस्येति । तस्य पुत्राख्यस्य पत्नी पौष्यां पुष्यनक्षत्रयुक्तायां पौर्णमास्यां तिथौ "पुष्ययुक्ता पौर्णमासी पौषी" इत्यमरः । नक्षत्रेण युक्तः काल इत्यण्प्रत्ययः, टिड्ढाणञिति ङीप् । प्रभया निर्जितः पुष्परागः मणिविशेषः येन तं पुष्यं पुष्याख्यम् असूत । द्वितीये पुष्ये पुष्यनक्षत्रे इव तस्मिन् उदिते सति जनाः समग्रां पुष्टिं वृद्धिम् अपुष्यन् ॥ ३२ ॥

महीमिति । महेच्छः महाशयः । "महेच्छस्तु महाशयः" इत्यमरः । जन्मभीरुः संसारभीरुः सः पुत्रः सूनौ महीं परिकीर्य्य विसृज्य मनीषिणे ब्रह्मविद्या-विदुषे जैमिनये ऽर्पितात्मा शिष्यभूतः सन् इत्यर्थः संयोगात् योगिनः तस्मात् जैमिनेः योगं योगविद्याम् अधिगम्य अजन्मने जन्मनिवृत्तये मोक्षाय अकल्पत समपद्यत । क्लृपिः सम्पद्यमाने चतुर्थी वक्तव्या, सुक्तः इत्यर्थः ॥ ३३ ॥

तत इति । ततः परं, सः पुष्यः प्रभवः कारणं यस्य सः तत्

यस्मिन्नभूज्ज्यायसि सत्यसन्धे
सन्धिर्ध्रुवः सन्नमतामरीणाम् ॥ ३४ ॥

सुते शिशावेव सुदर्शनाख्ये
दर्शात्ययेन्दुप्रियदर्शने सः
मृगायताक्षो मृगयाविहारी
सिंहादवापद् विपदं नृसिंहः ॥ ३५ ॥

स्वर्गामिनस्तस्य तमैकमत्या
दमात्यवर्गः कुलतन्तुमेकम् ।
अनाथदीनाः प्रकृती रवेक्ष्य
साकेतनाथं विधिवच्चकार ॥ ३६ ॥

प्रभवः तदात्मजः इत्यर्थः ध्रुवेण औत्तानपादिना उपमेयः । "ध्रुव औत्तानपादिः स्यात्" इत्यमरः । ध्रुवसन्धिः उर्व्वीं प्रपेदे । ज्यायसि श्रेष्ठे सत्यसन्धे सत्यप्रतिज्ञे यस्मिन् ध्रुवसन्धौ सन्नमताम् अनुद्धतानाम् इत्यर्थः अरीणां सन्धिः ध्रुवः स्थिरः अभूत् । ततः सार्थकानाम् इत्यर्थः ॥ ३४ ॥

सुते इति । मृगायताक्षः नृसिंहः पुरुषश्रेष्ठः सः ध्रुवसन्धिः दर्शात्ययेन्दुप्रियदर्शने प्रतिपच्चन्द्रनिभे सुदर्शनाख्ये सुते शिशौ सति एव मृगयाविहारी सन् सिंहात् विपदं मरणम् अवापत् । व्यसनासक्तिरनर्थावहा इति भावः ॥ ३५ ॥

स्वरिति । स्वर्गामिनः स्वर्यातस्य तस्य ध्रुवसन्धेः अमात्यवर्गः अनाथाः नाथहीनाः अत एव दीनाः शोच्याः प्रकृतीः प्रजाः अवेक्ष्य कुलतन्तुं कुलालम्बनम् एकम् अद्वितीयं तं

नवेन्दुना तन्नभसोपमेयं
शावैकसिंहेन च काननेन ।
रघोः कुलं कुड्मलपुष्करेण
तोयेन चाप्रौढ़नरेन्द्रमासीत् ॥ ३७ ॥

लोकेन भावी पितुरेव तुल्यः
सम्भावितो मौलिपरिग्रहात् सः ॥
दृष्टो हि वृण्वन् कलभप्रमाणो-
ऽप्याशाः पुरोवातमवाप्य मेघः ॥ ३८ ॥

तं राजवीथ्यामधिहस्ति यान्त-
माधोरणालम्बितमग्र्यवेशम् ।

सुदर्शनम् एकमत्यात् विधिवत् साकेतनाथम् अयोध्याधीश्वरं चकार ॥ ३६ ॥

नवेति अप्रौढ़नरेन्द्रं तत् रघोः कुलं नवेन्दुना बालचन्द्रेण नभसा व्योम्ना, शावः शिशुरेकः सिंहः यस्मिन् । "पृथुकः शावकः शिशुः" इत्यमरः । तेन काननेन च, कुड्मलं कुड्मलावस्थं पुष्करं पङ्कजं यस्मिन् तेन तोयेन च उपमेयम् उपमातुमर्हम् आसीत् । नवेन्द्वाद्युपमानेन तस्य वर्द्धिष्णुताशौर्य्यश्रीमत्त्वानि सूचितानि॥ ३७

लोकेनेति । सः बालः मौलिपरिग्रहात् किरीटस्वीकारा-द्धेतोः पितुः तुल्यः पितुः स्वरूपः एव भावी भविष्यति लोकेन जनेन सम्भावितः तर्कितः । तथाहि- कलभप्रमाणः कलभ-मात्रोऽपि मेघः पुरोवातम् अवाप्य आशाः दिशः वृण्वन् गच्छन् दृष्टः हि ॥ ३८ ॥

षड्वर्षदेशीयमपि प्रभुत्वात्
प्रैक्षन्त पौराः पितृगौरवेण ॥ ३९ ॥

कामं न सोऽकल्पत पैतृकस्य
सिंहासनस्य प्रतिपूरणाय ।
तेजोमहिम्ना पुनरावृतात्मा
तद् व्याप चामीकरपिञ्जरेण ॥ ४० ॥

तस्मादधः किञ्चिदिवावतीर्णा-
वसंस्पृशन्तौ तपनीयपीठम् ।

तमिति । राजवीथ्यां राजमार्गे अधिहस्ति हस्तिनि । विभक्त्यर्थेऽव्ययीभावः । यान्तं गच्छन्तं हस्तिनम् आरुह्य गच्छन्तम् इत्यर्थः आधोरणालम्बितं शिशुत्वात् सादिना गृहीतम् अग्र्यवेशं उदारनेपथ्यं षड्वर्षाणि भूतः षड्वर्षः । तद्धितार्थेति समासः । तमधीष्टोभृतो भूतभावीत्यधिकारे चित्तवति नित्य-मिति तद्धितस्य लुक् । ईषदसमाप्तः षड्वर्षः षड्वर्षदेशीयः । ईषदसमाप्तावित्यादिना देशीयप्रत्ययः । तं षड्वर्षदेशीयम् अपि बालम् अपि तं सुदर्शनं पौराः प्रभुत्वात् पितृगौरवेण प्रैक्षन्त पितरि यादृग्गौरवं तादृशेनैव ददृशुः इत्यर्थः ॥ ३९ ॥

काममिति । सः सुदर्शनः पैतृकस्य सिंहासनस्य कामं सम्यक् प्रतिपूरणाय न अकल्पत बालत्वाद् व्याप्तुं न पर्याप्तः इत्यर्थः चामीकरपिञ्जरेण कनकगौरेण तेजोमहिम्ना पुनः तेजः-सम्पदा तु आवृतात्मा विस्तारितदेहः सन् तत् सिंहासनं व्याप व्याप्तवान् ॥ ४० ॥

तस्मादिति । तस्मात् सिंहासनात् अपादानात् अधः अधो-

सालक्तकौ भूपतयः प्रसिद्धै
र्ववन्दिरे मौलिभिरस्य पादौ ॥ ४१ ॥
मणौ महानील इति प्रभावा
दल्पप्रमाणेऽपि यथा न मिथ्या ।
शब्दो महाराज इति प्रतीत
स्तथैव तस्मिन् युयुजेऽर्भकेऽपि ॥ ४२ ॥
पर्य्यन्तसञ्चारितचामरस्य
कपोललोलोभयकाकपक्षात् ।
तस्याननादुच्चरितो विवाद
श्चस्खाल वेलास्वपि नार्णवानाम् ॥ ४३ ॥

देशं प्रति किञ्चिदिव अवतीर्णौ देषलम्बौ तपनीयपीठं काञ्चनपीठम् असंस्पृशन्तौ अल्पकालत्वात् अव्याप्तौ सालक्तकौ लाक्षारसावसिक्तौ अस्य सुदर्शनस्य पादौ भूपतयः प्रसिद्धैः उन्नतैः मौलिभिः मुकुटैः ववन्दिरे प्रणेमुः ॥ ४१ ॥

मणाविति । अल्पप्रमाणे अपि मणौ इन्द्रनीले प्रभावात् तेजिष्ठत्वाद्धेतोः महानीलः इति शब्दः यथा मिथ्या निरर्थकः न तथैव अर्भके शिशौ अपि तस्मिन् सुदर्शने प्रतीतः प्रसिद्धः महाराजः इति शब्दः न मिथ्या युयुजे ॥ ४२ ॥

पर्य्यन्तेति । पर्य्यन्तयोः पार्श्वयोः सञ्चारिते चामरे यस्य तस्य बालस्य सम्बन्धिनः कपोलयोः लोलौ उभौ काकपक्षौ यस्य तस्मात् आननात् उच्चरितः विवादः वचनम् अर्णवानां वेलासु अपि न चस्खाल गिरोरपि तस्याज्ञाभङ्गो नासीत् इत्यर्थः ।

निर्वृत्तजाम्बूनदपट्टशोभे
न्यस्तं ललाटे तिलकं दधानः।
तेनैव शून्यान्यरिसुन्दरीणां
मुखानि स स्मेरमुखश्चकार ॥ ४४ ॥
शिरीषपुष्पाधिकसौकुमार्य्यः
खेदं स यायादपि भूषणेन।
नितान्तगुर्व्वीमपि सोऽनुभावात्
धुरं धरित्र्या बिभरांबभूव ॥ ४५ ॥
न्यस्ताक्षरामक्षरभूमिकायां
कार्त्स्न्येन गृह्णाति लिपिं न यावत्।

चपलसंसर्गेऽपि महान्तो न चलन्तीति ध्वनिः। उभयकाक-पक्षादित्वत्र "वृत्तिविषये उभयपुत्र इतिवदुभशब्दस्थाने उभय-शब्दप्रयोगः" इत्युक्तं प्राक् ॥ ४३ ॥

निर्वृत्तेति। निर्वृत्ता जाम्बूनदपट्टशोभा यस्य तस्मिन् कृत-कनक-पट्टबन्धे ललाटे न्यस्तं तिलकं दधानः स्मेरमुखः स्मितमुखः सः राजा अरिसुन्दरीणां मुखानि तेनैव तिलकेनैव शून्यानि चकार। अखिलमपि शत्रुवर्गमवधीत् इति भावः ॥ ४४

शिरीषेति। शिरीषपुष्पाधिकसौकुमार्य्यः कोमलाङ्गः इत्यर्थः अतएव सः राजा भूषणेन अपि खेदं श्रमं यायात् गच्छेत्, एवं-भूतः सः नितान्तगुर्व्वीमपि धरित्र्याः धुरं भुवः भारम् अनु-भावात् सामर्थ्यात् बिभरांबभूव बभार। भीह्रीभृहुवां श्लवच्चेति विकल्पादाम् प्रत्ययः ॥ ४५ ॥

सर्व्वाणि तावत् श्रुतवृद्धयोगात्
फलान्युपायुङ्क्त स दण्डनीतेः ॥ ४६ ॥
उरस्यपर्य्याप्तनिवेशभागा
प्रौढ़ीभविष्यन्तमुदीक्षमाणा ।
सञ्जातलज्जेव तमातपत्र-
च्छायाच्छलेनोपजुगूह लक्ष्मीः ॥ ४७ ॥
अनश्नुवानेन युगोपमान
मबद्धमौर्व्वीकिणलाञ्छनेन ।

न्यस्तेति । अक्षरभूमिकायाम् अक्षरलेखनस्थले न्यस्ताक्षरां रचिताक्षरपङ्क्तिरेखान्यासां लिपिं पञ्चाशद्वर्णात्मिकां मातृकां कार्त्स्न्येन यावत् न गृह्णाति, सः सुदर्शनः तावत् श्रुतवृद्धयोगात् विद्यावृद्धसंसर्गात् सर्व्वाणि दण्डनीतेः दण्डशास्त्रस्य फलानि उपायुङ्क्त अन्वभूत् । प्रागेव बद्धफलस्य तस्य पश्चादभ्यस्यमानं शास्त्रं संवादार्थमिवाभवत् इत्यर्थः ॥ ४६ ॥

उरसीति । उरसि अपर्य्याप्तः निवेशभागः निवासावकाशः यस्याः सा अतएव प्रौढ़ीभविष्यन्तं वर्द्धिष्यमाणम् उदीक्षमाणा प्रौढ़वपुष्मान् भविष्यतीति प्रतीक्षमाणा लक्ष्मीः सञ्जातलज्जेव साक्षात् आलिङ्गितुं लज्जितेव तं सुदर्शनम् आतपत्रच्छाया-च्छलेन उपजुगूह आलिलिङ्ग । छत्रच्छाया लक्ष्मीरूपेति प्रसिद्धिः । प्रौढ़ाङ्गनायाः प्रौढ़पुरुषालाभे लज्जा भवतीति ध्वनिः ॥ ४७ ॥

अनश्नुवानेनेति । युगोपमानं युगसादृश्यं अनश्नुवानेन अप्राप्नुवता अबद्धः मौर्व्वीकिणः ज्यावातग्रन्थिरेव लाञ्छनं यस्य

अस्पृष्टखड्गत्सरुणापि चासी-
द्रक्षावती तस्य भुजेन भूमिः ॥ ४८ ॥
न केवलं गच्छति तस्य काले
ययुः शरीरावयवा विवृद्धिम् ।
वंश्या गुणाः खल्वपि लोककान्ताः
प्रारम्भसूक्ष्माः प्रथिमानमापुः ॥ ४९ ॥
स पूर्व्वजन्मान्तरदृष्टपाराः
स्मरन्निवाक्लेशकरो गुरूणाम् ।

तेन अस्पृष्टः खड्गत्सरुः खड्गमुष्टिः येन तेन । "त्सरुः खड्गादि-मुष्टौ स्यात्" इत्यमरः । एवंविधेन अपि च तस्य सुदर्शनस्य भुजेन भूमिः रक्षावती आसीत् । शिशोरपि तस्य तेजस्तादृक् इत्यर्थः ॥ ४८ ॥

नेति । काले गच्छति सति तस्य केवलं शरीरावयवाः एव विवृद्धिं प्रसारं न ययुः, किन्तु वंशे भवाः वंश्याः लोककान्ताः जनप्रियाः प्रारम्भे आदौ सूक्ष्माः तस्य गुणाः शौर्य्यौदार्य्या-दयोऽपि प्रथिमानं पृथुत्वम् आपुः खलु ॥ ४९ ॥

स इति । सः सुदर्शनः पूर्व्वस्मिन् जन्मान्तरे जन्मविशेषे दृष्टपाराः स्मरन्निव गुरूणाम् अक्लेशकरः सन् त्रयाणां धर्म्मार्थ-कामानां वर्गः त्रिवर्गः तस्य अधिगमस्य प्राप्तेः मूलं तिस्रः विद्याः त्रयी-वार्त्ता-दण्डनीतीः पित्र्याः पितृसम्बन्धिनीः प्रकृतीः प्रजाश्च जग्राह स्वायत्तीचकार । अत्र कौटिल्यः- "धर्म्माधर्म्मौ त्रय्याम् अर्थानर्थौ वार्त्तायां नयानयौ दण्डनीत्याम्" इति ।

तिस्रस्त्रिवर्गाधिगमस्य मूलं
जग्राह विद्याः प्रकृतीश्च पित्र्याः ॥ ५० ॥
व्यूह्य स्थितः किञ्चिदिवोत्तरार्द्ध
मुन्नद्धचूड़ोऽञ्चितसव्यजानुः।
आकर्णमाकृष्टसवाणधन्वा
व्यरोचतास्त्रेषु विनीयमानः ॥ ५१ ॥
अथ मधु वनितानां नेत्रनिर्वेशनीयं
मनसिजतरुपुष्पं रागबन्धप्रवालम्।

अत्र दण्डनीतिः नयद्वारा कामभूलमिति द्रष्टव्यम्। आन्वीक्षिक्या अनुपादानं तस्यान्तर्भावपक्षमाश्रित्य। यथाह कामन्दकः,
"त्रयी वार्त्ता दण्डनीतिः तिस्रो विद्या मनोर्मताः। त्रय्या एव विभागोऽयं येन सान्वीक्षिकी मता॥" इति ॥ ५० ॥

व्यूह्येति। अस्त्रेषु धनुर्विद्यायां विनीयमानः शिक्ष्यमाणः अतएव उत्तरार्द्धं पूर्व्वकायं किञ्चित् इव व्यूह्य विस्तार्य्य स्थितः उन्नद्धचूड़ं जर्न्नम् उत्कृष्य बद्धकेशः अञ्चितम् आकुञ्चितं सव्यं जानु यस्य सः आकर्णम् आकृष्टं सवाणं धनुः धन्व वा येन सः तथोक्तः सन् व्यरोचत अशोभत ॥ ५१ ॥

अथेति। अथ सः सुदर्शनः वनितानां नेत्रैः निर्वेशनीयं भोग्यं नेत्रपेयम् इत्यर्थः। "निर्वेशो भृतिभोगयोः" इत्यमरः। मधु चौद्रम्, रागबन्धः अनुरागसन्तानः एव प्रवालः पल्लवः यस्य तत् मनसिजः एव तरुः तस्य पुष्पं पुष्पभूतम्, अकृतकविधि अकृत्रिमसम्पादनं सर्व्वाङ्गं व्याप्नोतीति सर्व्वाङ्गीणम्। तत्सर्व्वादि

अङ्गतकविधि सर्व्वाङ्गीणमाकल्पजातं
विलसितपदमाद्यं यौवनं स प्रपेदे ॥ ५२ ॥
प्रतिकृतिरचनाभ्यो दूतिसन्दर्शिताभ्यः
समधिकतररूपाः शुद्धसन्तानकामैः।
अधिविविदुरमात्यैराहृतास्तस्य यूनः
प्रथमपरिगृहीते श्रीभुवौ राजकन्याः ॥५३॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ
वंशानुक्रमो नाम अष्टादशः सर्गः।

रित्यादिना खप्रत्ययः। आकल्पजातम् आभरणसमूहभूतम्, आद्यं विलसितपदं विलासस्थानं यौवनं प्रपेदे। विशिष्टमधुपुष्पाकल्पजातविलासपदत्वेन यौवनस्य चतुर्धाकरणात् सविशेषणमालारूपकमेतत् ॥ ५२ ॥

प्रतिकृतीति। दूतीभिः कन्यापरीक्षणार्थं प्रेषिताभिः सन्दर्शिताभ्यः दूतिसन्दर्शिताभ्यः प्रतिकृतीनां तूलिकादिलिखितकन्याप्रतिमानां रचनाभ्यः विन्यासेभ्यः। पञ्चमी विभक्ते इति पञ्चमी। समधिकतररूपाः चित्रनिर्म्माणादपि रमणीयनिर्म्माणाः इत्यर्थः शुद्ध-सन्तान-कामैः अमात्यैः आहृताः आनीताः राजकन्याः यूनः तस्य सुदर्शनस्य सम्बन्धिन्यौ प्रथमपरिगृहिते श्रीभुवौ श्रीश्च भूश्च ते अधिविविदुः अधिविन्नेचक्रुः आत्मना सपत्नीभावं चक्रुः इत्यर्थः। "कृतसापत्निकाध्यूढाधिविन्ना" इत्यमरः ॥ ५३ ॥

इति श्रीमहामहोपाध्याय-कोलाचलमल्लिनाथसूरि-विरचितायां
रघुवंशटीकायां सञ्जीवनीसमाख्यायां अष्टादशः सर्गः।

## ऊनविंशः सर्गः ।

—०—

अग्निवर्णमभिषिच्य राघवः
स्वे पदे तनयमग्नितेजसम् ।
शिश्रिये श्रुतवतामपश्चिमः
पश्चिमे वयसि नैमिषं वशी ॥ १ ॥
तत्र तीर्थसलिलेन दीर्घिका
स्तल्पमन्तरितभूमिभिः कुशैः ।
सौधवासमुटजेन विस्मृतः
सञ्चिकाय फलनिःस्पृहस्तपः ॥ २ ॥

मनसो मम संसारबन्धमुच्छेत्तुमिच्छतः ।
रामचन्द्रपदाम्भोजयुगलं निविड़ायताम् ॥

अग्निवर्णमिति । श्रुतवतां श्रुतसम्पन्नानाम् अपश्चिमः प्रथमः वशी जितेन्द्रियः राघवः सुदर्शनः पश्चिमे वयसि वार्द्धके स्वे पदे स्थाने अग्नितेजसं तनयम् अग्निवर्णम् अभिषिच्य नैमिषं नैमिषारण्यं शिश्रिये श्रितवान् ॥ १ ॥

तत्रेति । तत्र नैमिषे तीर्थसलिलेन दीर्घिकाः विहारवापीः अन्तरितभूमिभिः कुशैः तल्पं शय्याम् उटजेन पर्णशालया सौधवासं विस्मृतः विस्मृतवान् सः । कर्त्तरि क्तः । फले स्वर्गादिफले निस्पृहः तपः सञ्चिकाय सञ्चितवान् ॥ २ ॥

लब्धपालनविधौ न तत्सुतः
खेदमाप गुरुणा हि मेदिनी ।
भोक्तुमेव भुजनिर्ज्जितद्विषा
न प्रसाधयितुमस्य कल्पिता ॥ ३ ॥

सोऽधिकारमभिकः कुलोचितं
काश्चन स्वयमवर्त्तयत् समाः ।
सन्निवेश्य सचिवेष्वतः परं
स्त्रीविधेय-नव-यौवनोऽभवत् ॥ ४ ॥

लब्धेति । तत्सुतः सुदर्शनपुत्त्रः अग्निवर्णः लब्धपालनविधौ लब्धस्य राजस्य पालनकर्म्मणि खेदं नाप अक्लेशेन अपालयत् इत्यर्थः । कुतः? हि यस्मात् भुजनिर्जितद्विषा गुरुणा पित्रा मेदिनी अस्य अग्निवर्णस्य भोक्तुम् एव कल्पिता प्रसाधयितुं न । प्रसाधनं कण्टकशोधनम्, अलङ्कृतिर्ध्वन्यते । तथाच, यथालङ्कृत्य नीता युवतिः केवलमुपभुज्यते तद्वत् इति भावः ॥ ३ ॥

स इति । अभिकः कामुकः । अनुकाभिकाभीकः कमितेति निपातः । "कम्रः कामयिताभीकः कमनः कामनोऽभिकः" इत्यमरः । सः अग्निवर्णः कुलोचितम् अधिकारं प्रजापालनं काश्चन समाः कतिचित् वत्सरान् स्वयम् अवर्त्तयत् अकरोत् । अतः परं सचिवेषु सन्निवेश्य निधाय स्त्रीविधेयं स्त्र्यधीनं नवं यौवनं यस्य सः अभवत् स्त्र्यासक्तोऽभूत् इत्यर्थः ॥ ४ ॥

कामिनीसहचरस्य कामिन
स्तस्य वेश्मसु मृदङ्गनादिषु ।
ऋद्धिमन्तमधिकर्द्धिरुत्तरः
पूर्व्वमुत्सवमपोहदुत्सवः ॥ ५ ॥
इन्द्रियार्थपरिशून्यमक्षमः
सोढुमेकमपि स क्षणान्तरम् ।
अन्तरेव विहरन् दिवानिशं
न व्यपैक्षत समुत्सुकाः प्रजाः ॥ ६ ॥
गौरवाद् यदपि जातु मन्त्रिणां
दर्शनं प्रकृतिकाङ्क्षितं ददौ ।

कामिनीति । कामिनीसहचरस्य कामिनः तस्य मृदङ्गनादिषु मृदङ्गनादवत्सु वेश्मसु अधिकर्द्धिः पूर्व्वात् अधिकसम्भारः उत्तरः उत्सवः ऋद्धिमन्तं साधनसम्पन्नं पूर्व्वं उत्सवं अपोहत् अपानुदत् । उत्तरमुत्तरमधिका तस्योत्सवपरम्परा वृत्ता इत्यर्थः ५ ॥

इन्द्रियेति । इन्द्रियार्थपरिशून्यं शब्दादिविषयरहितम् एकमपि क्षणान्तरं क्षणभेदं सोढुम् अक्षमः अशक्तः सः अग्निवर्णः दिवानिशि अन्तः एव विहरन् समुत्सुकाः दर्शनाकाङ्क्षिणीः प्रजाः न व्यपैक्षत न अपेक्षितवान् ॥ ६ ॥

गौरवादिति । जातु कदाचित् मन्त्रिणां गौरवात् गुरुत्वात् हेतोः मन्त्रिवचनानुरोधात् इत्यर्थः प्रकृतिभिः प्रजाभिः काङ्क्षितं यदपि दर्शनं ददौ तत् गवाक्षविवरावलम्बिना

तद्गवाक्षविवरावलम्बिना
केवलेन चरणेन कल्पितम् ॥ ७ ॥
तं कृतप्रणतयोऽनुजीविनः
कोमलात्मनखरागरूषितम् ।
भेजिरे नवदिवाकरातप-
स्पृष्टपङ्कजतुलाधिरोहणम् ॥ ८ ॥
यौवनोन्नतविलासिनीस्तन-
क्षोभलोलकमलाश्च दीर्घिकाः ।
गूढमोहनगृहास्तदम्बुभिः
स व्यगाहत विगाढमन्मथः ॥ ९ ॥

केवलेन चरणेन चरणमात्रेण कल्पितं सम्पादितं न तु मुखावलोकनप्रदानेन इत्यर्थः ॥ ७ ॥

तमिति । कोमलेन मृदुलेन आत्मनखानां रागेण आरुण्येन रूषितं छुरितम् अतएव नवदिवाकरातपेन स्पृष्टं व्याप्तं यत् पङ्कजं तस्य तुलां साम्यम् अधिरोहति इति तुलाधिरोहणं तं चरणम् अनुजीविनः कृतप्रणतयः कृतनमस्काराः सन्तः भेजिरे सिषेविरे ॥ ८ ॥

यौवनेति । विगाढमन्मथः प्रौढमदनः सः अग्निवर्णः यौवनेन हेतुना उन्नतानां विलासिनीस्तनानां क्षोभेण आघातेन लोलानि चञ्चलानि कमलानि यासां ताः तदम्बुभिः तासां दीर्घिकाणाम् अम्बुभिः गूढानि अन्तरितानि मोहनगृहाणि

तत्र सेकहृतलोचनाञ्जनै
र्धौतरागपरिपाटलाधरैः ।
अङ्गनास्तमधिकं व्यलोभय
न्नर्पितप्रकृतकान्तिभिर्मुखैः ॥ १० ॥
घ्राणकान्तमनुगन्धकर्षिणीः
पानभूमिरचनाः प्रियासखः ।
अभ्यपद्यत स वासितासखः
पुष्पिताः कमलिनीरिव द्विपः ॥ ११ ॥

सुरतभवनानि यासु ताश्च दीर्घिकाः व्यगाहत । स्त्रीभिः सह दीर्घिकासु विजहार इत्यर्थः ॥ ९ ॥

तत्रेति । तत्र दीर्घिकासु अङ्गनाः सेकेन हृतं लोचनाञ्जनं नेत्रकज्जलं येषां तैः रज्यते अनेनेति रागः रागद्रव्यं लाक्षादि रागस्य परिपाटलः अङ्गगुणः । "गुणे शुक्लादयः पुंसि" इत्यमरः । धौतः रागपरिपाटलः येषां ते तथोक्ताः अधराः येषां तैः निवृत्तसाङ्क्रमिकरागैः इत्यर्थः अतएव अर्पितप्रकृतकान्तिभिः अभिव्यञ्जितस्वाभाविकरागैः इत्यर्थः एवंभूतैः मुखैः तम् अग्निवर्णम् अधिकं व्यलोभयन् प्रलोभितवत्यः ॥ १० ॥

घ्राणेति । प्रियासखः सः अग्निवर्णः घ्राणकान्तेन घ्राणतर्पणेन मधुगन्धेन कर्षिणीः मनोहारिणीः रच्यन्ते इति रचनाः पानभूमयः एव रचनाः रचिताः पानभूमयः इत्यर्थः, वासितासखः करिणीसहचरः । "वासिता स्त्री-करिण्योश्च" इत्यमरः । द्विपः पुष्पिताः कमलिनीरिव, अभ्यपद्यत अभिगतः ॥ ११ ॥

सातिरेकमदकारणं रह-
स्तेन दत्तमभिलेषुरङ्गनाः।
ताभिरप्युपहृतं मुखासवं
सोऽपिबद् वकुलतुल्यदोहदः॥ १२॥
अङ्कमङ्कपरिवर्त्तनोचिते
तस्य निन्यतुरशून्यतामुभे।
वल्लकी च हृदयङ्गमस्वना
वल्गुवागपि च वामलोचना॥ १३॥
स स्वयं प्रहतपुष्करः कृती
लोलमाल्यवलयो हरन्मनः।

सातिरेकेति। अङ्गनाः रहः रहसि सातिरेकस्य साति-शयस्य मदस्य कारणं तेन अग्निवर्णेन दत्तं मुखासवम् अभि लेषुः, वकुलेन तुल्यदोहदः तुल्याभिलाषः। "अथ दोहदम् इच्छाकाङ्क्षास्पृहेहातृट्" इत्यमरः। वकुलद्रुमस्याङ्गनामद्यार्थि-त्वात् तुल्याभिलाषत्वम्। सः अपि ताभिः अङ्गनाभिः उपहृतं दत्तं मुखासवम् अपिबत्॥ १२॥

अङ्कमिति। अङ्कपरिवर्त्तनोचिते उत्सङ्गविहारार्हे उभे तस्य अग्निवर्णस्य अङ्कम् अशून्यतां पूर्णतां निन्यतुः। के उभे? हृदयङ्गमस्वना मनोहरध्वनिः वल्लकी वीणा च, वल्गुवाक् मधुरभाषिणी वामलोचना कामिनी अपि च। हृदयं गच्छ-तीति हृदयङ्गमः। सुप्युपसंख्यानात् खच्प्रत्ययः। अङ्काधि-रोपितयोर्वीणावामाक्ष्योर्वाद्यगीताभ्यामरंस्त इत्यर्थः॥ १३॥

स इति। कृती कुशलः स्वयं प्रहतपुष्करः वादितवाद्य-

नर्त्तकीरभिनयातिलङ्घिनीः
पार्श्ववर्त्तिषु गुरुष्वलज्जयत् ॥ १४ ॥
चारु नृत्यविगमे च तन्मुखं
स्वेदभिन्नतिलकं परिश्रमात्।
प्रेमदत्तवदनानिलः पिब
न्नत्यजीवदमरालकेश्वरौ ॥ १५ ॥
तस्य सावरणदृष्टसन्धयः
काम्यवस्तुषु नवेषु सङ्गिनः।

मुखः लोलानि माल्यानि वलयानि च यस्य सः तथोक्तः सन्‌ः हरन् नर्त्तकीनाम् इति शेषः। सः अग्निवर्णः अभिनयातिलङ्घिनीः अभिनयेषु स्खलन्तीः इत्यर्थः नर्त्तकीः विलासिनीः। शिल्पिनि ष्वुन् इति ष्वुन् प्रत्ययः, षिद्गौरादिभ्यश्च इति ङीष्। "नर्त्तकीलासिके समे" इत्यमरः। गुरुषु नाट्याचार्य्येषु पार्श्ववर्त्तिषु समीपस्थेषु सत्स्वेव अलज्जयत् लज्जामनमयत् ॥ १४ ॥

चार्व्विति। किञ्च, चारु सुन्दरं नृत्यविगमे लास्यावसाने परिश्रमात् नर्त्तनप्रयासात् स्वेदेन भिन्नतिलकं विशीर्णतिलकं तन्मुखं नर्त्तकीमुखं प्रेम्णा दत्तवदनानिलः प्रवर्त्तितमुखमारुतः पिबन् अमराणाम् अलकायाश्च ईश्वरौ इन्द्रकुवेरौ अत्यजीवत् अतिक्रम्याजीवत् ततोऽप्युत्कृष्टजीवित आसीत् इत्यर्थः। इन्द्रादेरपि दुर्लभमीदृशं सौभाग्यमिति भावः ॥ १५ ॥

तस्येति। उपसृत्य अन्यत्र गत्वा नवेषु नूतनेषु काम्यवस्तुषु शब्दादिषु इन्द्रियार्थेषु सङ्गिनः आसक्तिमतः सतः तस्य सावरणाः प्रच्छन्नाः दृष्टाः प्रकाशाश्च सन्धयः साधनानि येषु

वल्लभाभिरुपसृत्य चक्रिरे
सामिभुक्तविषयाः समागमाः ॥ १६ ॥
अङ्गुलीकिसलयाग्रतर्ज्जनं
भ्रूविभङ्गकुटिलञ्च वीक्षितम् ।
मेखलाभिरसकृच्च बन्धनं
वञ्चयन् प्रणयिनीरवाप सः ॥ १७ ॥
तेन दूतिविदितं निषेदुषा
पृष्ठतः सुरतवाररात्रिषु ।

ते समागमाः सङ्गमाः वल्लभाभिः प्रेयसीभिः सामिभुक्तविषयाः अर्द्धोपभुक्तेन्द्रियार्थाः चक्रिरे। यथेष्टं भुक्तश्चेत् तर्हि अयं निःस्पृहः सन् अस्मत्समीपं नायास्यति इति भावः। अत्र गोनर्द्दीयः—"सन्धिः द्विविधः सावरणः प्रकाशश्च। सावरणो भिक्षुकादिना प्रकाशः स्वयमुपेत्य" इति। "इतः स्वयमुपसृत्य विशेषार्थं तत्र स्थितोऽनुपजाप्यं स्वयं सन्धेयः" इति वात्स्यायनः। अन्यत्र गतं कथञ्चित् सन्धाय पुनरनुपगमायार्द्धोपभोगेन अनिवृत्ततृष्णं चक्रुः इत्यर्थः ॥ १६ ॥

अङ्गुलीति। सः अग्निवर्णः प्रणयिनीः प्रेयसीः वञ्चयन् अन्यत्र गच्छन् अङ्गुल्यः किसलयानि तेषाम् अग्राणि तैः तर्ज्जनं भर्त्सनं भ्रूविभङ्गेन भ्रूभेदेन कुटिलं वक्रं वीक्षितं वीक्षणञ्च असकृत् मेखलाभिः बन्धनञ्च अवाप। अपराधिनो दण्ड्याः इति भावः ॥ १७ ॥

तेनेति। सुरतस्य वारः वासरः तस्य रात्रिषु दूतीनां

शुश्रुवे प्रियजनस्य कातरं
विप्रलम्भपरिशङ्किनो वचः ॥ १८ ॥
लौल्य मेत्य गृहिणीपरिग्रहात्
नर्त्तकीष्वसुलभासु तद्वपुः ।
वर्त्तते स्म स कथञ्चिदालिखन्
अङ्गुलीक्षरणसन्नवर्त्तिकः ॥ १९ ॥
प्रेमगर्व्वितविपक्षमत्सरा
दायताच्च मदनान्महीक्षितम् ।
निन्युरुत्सवविधिच्छलेन तं
देव्य उज्झितरुषः कृतार्थताम् ॥ २० ॥

विदितं यथा तथा पृष्ठतः प्रियजनस्य पश्चाद्भागे निषेदुषा तेन अग्निवर्णेन विप्रलम्भपरिशङ्किनः विरहशङ्किनः प्रियश्चासौ जनश्च प्रियजनः तस्य कातरं वचः प्रियानयनेन मां पाहीत्येवमादि दीनवचनं शुश्रुवे ॥ १८ ॥

लौल्यमिति । गृहिणीपरिग्रहात् राज्ञीभिः समागमाद्भीतोः नर्त्तकीषु वेश्यासु असुलभासु दुर्लभासु सतीषु लौल्यम् औत्सुक्यम् एत्य प्राप्य अङ्गुल्योः क्षरणेन स्वेदनेन सन्नवर्त्तिकः विगलितशलाकः सः अग्निवर्णः तासां नर्त्तकीनां वपुः आलिखन् कथञ्चित् वर्त्तते स्म अवर्त्तत ॥ १९ ॥

प्रेमेति । प्रेम्णा स्वविषयेण प्रियस्य अनुरागेण हेतुना गर्व्विते विपक्षे सपत्नजने मत्सरात् वैरात् आयतात् प्रवृद्धात् मदनाच्च हेतोः देव्यः राज्ञ्यः उज्झितरुषः त्यक्तरोषाः सत्यः तं

प्रातरेत्य परिभोगशोभिना
दर्शनेन कृतखण्डनव्यथाः ।
प्राञ्जलिः प्रणयिनीः प्रसादयन्
सोऽदुनोत् प्रणयमन्थरः पुनः ॥ २१ ॥

स्वप्नकीर्त्तितविपक्षमङ्गनाः
प्रत्यभैत्सुरवदन्त्य एव तम् ।
प्रच्छदान्तगलिताश्रुबिन्दुभिः
क्रोधभिन्नवलयैर्विवर्त्तनैः ॥ २२ ॥

महीक्षितम् उत्सवविधिच्छलेन महोत्सवव्याजेन कृतः अर्थः प्रयोजनं येन सः कृतार्थः तस्य भावः तत्तां निन्युः । मदनमहोत्सवव्याजान्नीतेन तेन स्वमनोरथं कारयामासुः इत्यर्थः॥२०॥

प्रातरिति । सः अग्निवर्णः प्रातः एत्य आगत्य परिभोगशोभिना दर्शनेन हेतुना । हृशीर्ण्यन्ताल्लुरट् कृता खण्डनव्यथा यासां ताः तथोक्ताः खण्डिताः इत्यर्थः । तदुक्तम्, "ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता" इति । प्रणयिनीः प्राञ्जलिः प्रसादयन् तथापि प्रणयमन्थरः प्रणयेन नर्त्तकीगतेन मन्थरः अलसः अत्र शिथिलप्रयत्नः सन् इत्यर्थः पुनरदुनोत् पर्य्यतापयत् ।२१॥

स्वप्नेति । स्वप्ने कीर्त्तितः विपक्षः सपत्नजनः येन तं तम् अग्निवर्णम् अवदन्त्यः एव त्वया गोत्रस्खलनं कृतम् इत्यनुपालम्भमानाः एव प्रच्छदस्य आस्तरणपटस्य अन्ते मध्ये गलिताः अश्रुविन्दवः येषु तैः क्रोधेन भिन्नानि वलयानि येषु तैः विवर्त्तनैः पराग्विलसनैः प्रत्यभैत्सुः प्रतिचक्रुः तिरश्चक्रुः इत्यर्थः ॥२२॥

क्लृप्तपुष्पशयनान् लतागृहान्
एत्य दूतिकृतमार्गदर्शनः ।
अन्वभूत् परिजनाङ्गनारतं
सोऽवरोधभयवेपथूत्तरम् ॥ २३ ॥

नाम वल्लभजनस्य ते मया
प्राप्य भाग्यमपि तस्य काङ्क्ष्यते ।
लोलुपं ननु मनो ममेति तं
गोत्रविस्खलितमूचुरङ्गनाः ॥ २४ ॥

चूर्णबभ्रु लुलितस्रगाकुलं
छिन्नमेखलमलक्तकाङ्कितम् ।

क्लृप्तेति। सः अग्निवर्णः दूतीभिः कृतमार्गदर्शनः सन् क्लृप्तपुष्पशयनान् लतागृहान् एत्य अवरोधादन्तःपुरजनात् भयेन यः वेपथुः कम्पः तत् उत्तरं तत्प्रधानं यथा तथा परिजनाङ्गनारतं दासीरतम् अन्वभुत्। परिजनश्चासावङ्गना चेति विग्रहः ॥ २३ ॥

नामेति। मया ते वल्लभजनस्य प्रियजनस्य नाम प्राप्य तन्नाम्ना आह्वानं लब्ध्वा तस्य त्वद्वल्लभजनस्य यद्भाग्यम्, तत्परिहासकारणम् इति शेषः, तदपि काङ्क्ष्यते। ननु बत मम मनः लोलुपं गृध्नु इत्यनेन प्रकारेण गोत्रे नाम्नि विस्खलितं स्खलितवन्तं तम् अग्निवर्णम् ऊचुः। "गोत्रं नाम्नि कुलेऽचले" इति यादवः। तन्नामलाभे सति तद्भाग्यमपि काङ्क्षिणः मनः अहो तृष्णेति सोल्लुण्ठमुपालभन्त इत्यर्थः ॥ २४ ॥

उत्थितस्य शयनं विलासिन
स्तस्य विभ्रमरतान्यपावृणोत् ॥ २५ ॥
स स्वयं चरणरागमादधे
योषितां न च तथा समाहितः ।

चूर्णेति । चूर्णबभ्रु चूर्णैः व्यानतकरणे अधोमुखावस्थितायाः स्त्रियाः चिकुरगलितैः कुङ्कुमादिभिः बभ्रु पिङ्गलम् । "बभ्रु स्यात् पिङ्गले त्रिषु" इत्यमरः । लुलितस्रगाकुलं वारिपदाख्यबन्धे स्त्रिया भूमिगतमस्तकतया पतिताभिः लुलितस्रग्भिः आकुलम्, छिन्नमेखलं हरिविक्रमकरणे स्त्रियाः उच्छ्रितैकचरणत्वात् गलितमेखलम्, अलक्तकाङ्कितं धेनुकबन्धे भूतलनिहितकान्ताचरणत्वात् लाक्षारागरूषितं शयनं कर्तृ उत्थितस्य शयनात् इति भावः विलासिनः तस्य अग्निवर्णस्य विभ्रमरतानि लीलारतानि सुरतबन्धविशेषान् इत्यर्थः अपावृणोत् स्फुटोचकार । व्यानतादीनां लक्षणं रतिरहस्ये, "व्यानतं रतमिदं प्रिया यदि स्या दधोमुख चतुष्पदाकृतिः । तत्कटिं समधिरुह्य वल्लभः स्यात् वृषादिपशुसंस्थितास्थितिः । भूगतस्तनभुजास्यमस्तकामुन्नतं स्वयमधोमुखीं स्त्रियम् । क्रामति स्वकरकृष्टमेहने वल्लभे वारिपदन्तदुच्यते । योषिदेकचरणे समुत्थिते जायते हि हरिविक्रमाह्वयः । न्यस्तहस्तयुगला निजे पदे योषिदेति कटिरूढवल्लभा । शयतो यदि शनैरधोमुखो धेनुकं वृषवदुन्नते प्रिये ॥" इति ॥ २५ ॥

स इति । सः अग्निवर्णः स्वयमेव योषितां चरणयोः रागं लाक्षारसम् आदधे अर्पयामास । किं च, शयांशुकैः प्रियाङ्ग-

लोभ्यमाननयनः श्लथांशुकै
र्मेखलागुणपदै र्नितम्बिभिः ॥ २६ ॥
चुम्बने विपरिवर्त्तिताधरं
हस्तरोधि रशनाविघट्टने।
विघ्नितेच्छमपि तस्य सर्व्वतो
मन्मथेन्धन मभूद् वधूरतम् ॥ २७ ॥
दर्पणेषु परिभोगदर्शिनी
र्नर्म्मपूर्व्वमनुपृष्ठसंस्थितः।
छ्राययां स्मितमनोज्ञया वधू
र्ह्रीनिमीलितमुखीश्चकार सः ॥ २८ ॥

स्पर्शात् इति भावः। नितम्बिभिः नितम्बवद्भिः मेखलागुणपदैः जघनैः। "पश्चान्नितम्बः स्त्रीकट्याः क्लीवे तु जघनं पुरः" इत्यमरः। लभ्यमाननयनः आकृष्यमाणदृष्टिः सन् तया समाहितः अवहितः नादधे यथा सम्यग्रागरचना स्यात् इति भावः ॥ २६ ॥

चुम्बन इति। चुम्बने प्रवृत्ते सति विपरिवर्त्तिताधरं परिहृतोष्ठं रशनाविघट्टने ग्रन्थिविस्रंसने प्रसक्ते सति हस्तं रुणद्धि वारयतीति हस्तरोधि इत्थं सर्व्वतः सर्व्वत्र विघ्नितेच्छं प्रतिहतमनोरथमपि वधूनां रतं सुरतं तस्य अग्निवर्णस्य मन्मथेन्धनं कामोद्दीपनम् अभूत् ॥ २७ ॥

दर्पणेष्विति। सः अग्निवर्णः दर्पणेषु परिभोगदर्शिनीः सम्भोगचिह्नानि पश्यन्तीः वधूः नर्मपूर्व्वं परिहासपूर्व्वम् अनु-

कण्ठसक्तमृदुबाहुबन्धनं
न्यस्तपादतलमग्रपादयोः ।
प्रार्थयन्ति शयनोत्थितं प्रिया
स्तं निशात्ययविसर्गचुम्बनम् ॥ २६ ॥

प्रेक्ष्य दर्पणतलस्थमात्मनो
राजवेशमतिशक्रशोभिनम् ।
पिप्रिये न स तथा यथा युवा
व्यक्तलक्ष्म परिभोगमण्डनम् ॥ ३० ॥

पृष्ठं तासां पृष्ठभागे संस्थितः सन् स्मितेन मनोज्ञया छायया दर्पणगतेन स्वप्रतिबिम्बेन कौनिमीलितमुखीः लज्जावनतमुखीः चकार, तमागतं दृष्ट्वा लज्जिता इत्यर्थः ॥ २८ ॥

कण्ठेति । प्रियाः शयनात् उत्थितं तम् अग्निवर्णं कण्ठसक्तं कण्ठार्पितं मृदुबाहुबन्धनं यस्मिन् तत् अग्रपादयोः स्वकीययोः न्यस्ते पादतले यस्मिन् तत् निशात्यये विसर्गः विसृज्य गमनं तत्र यत् चुम्बनं तत् प्रार्थयन्ति । दृष्टाचित्यादिना हिकर्मकत्वम् । अत्र गोनर्दीयः—"रतावसाने यदि चुम्बनादि प्रयुज्य यायान्मदनोऽस्य वासः" इति ॥ २९ ॥

प्रेक्ष्येति । युवा सः अग्निवर्णः अतिशक्रं यथा तथा शोभमानम् अतिशक्रशोभिनं दर्पणतलस्थं दर्पणसंक्रान्तम् आत्मनः राजवेशं प्रेक्ष्य तथा न पिप्रिये न तुतोष यथा व्यक्तलक्ष्म प्रकटचिह्नं परिभोगमण्डनं प्रेक्ष्य पिप्रिये ॥ ३० ॥

मित्रकृत्यमपदिश्य पार्श्वतः
प्रस्थितं तमनवस्थितं प्रियाः ।
विद्म हे शठ ! पलायनच्छला
न्यञ्जसेति रुरुधुः कचग्रहैः ॥ ३१ ॥
तस्य निर्दयरतिश्रमालसाः
कण्ठसूत्रमपदिश्य योषितः ।

मित्रेति । मित्रकृत्यं सुहृत्कार्य्यम् अपदिश्य व्याजीकृत्य पार्श्वतः प्रस्थितम् अन्यतः गन्तुम् उद्युक्तम् अनवस्थितम् अवस्थातुम् अक्षमं तम् अग्निवर्णं प्रियाः हे शठ ! हे गूढविप्रियकारिन् ! "गूढविप्रियकृच्छठः" इति दशरूपके । तव पलायनस्य छलानि अञ्जसा तत्त्वतः । "तत्त्वे त्वद्धाञ्जसा द्वयम्" इत्यमरः । विद्म जानीमः । विदो लटो वेति वैकल्पिक आदेशः । इति उक्त्वा इति शेषः । कचग्रहैः केशाकर्षणैः रुरुधुः । अत्र गोनर्दीयः, "ऋतुस्नाताभिगमने मित्रकार्य्ये तथापदि । निष्पेतेषु प्रियतमः वक्तव्य इति अञ्जसा ।" विरक्तलक्षणप्रस्तावे वात्स्यायनः, "मित्रकृत्यञ्चापदिश्यान्यत्र शेते" इति ॥ ३१ ॥

तस्येति । निर्दयरतिश्रमेण अलसाः निश्चेष्टाः योषिताः कण्ठसूत्रम् आलिङ्गनविशेषम् अपदिश्य व्याजीकृत्य पीवरस्तनाभ्यां विलुप्तचन्दनं विच्छिष्टाङ्गरागं तस्य अग्निवर्णस्य हृहद्भुजान्तरम् अध्यशेरत वक्षःस्थले शेरते स्म । कण्ठसूत्रलक्षणं तु—"याः कुर्वते वक्षसि वल्लभस्य स्तनाभिघातं निविड़ोपगूहात् । परिश्रमार्थं शनकैर्विदग्धा स्तत्कण्ठसूत्रं प्रवदन्ति सन्तः ।" इदमेव रतिरहस्ये स्तनालिङ्गनमित्युक्तम् । तथाच,

अध्यशेरत बृहद्भुजान्तरं
पीवरस्तनविलुप्तचन्दनम् ॥ ३२ ॥
सङ्गमाय निशि गूढचारिणं
चारदूतिकथितं पुरोगताः।
वञ्चयिष्यसि कुतस्तमोवृतः
कामुकेति चकृषुस्तमङ्गनाः ॥ ३३ ॥
योषितामुडुपतेरिवार्चिषां
स्पर्शनिर्वृतिमसाववाप्नुवन्।
आरुरोह कुमुदाकरोपमां
रात्रिजागरपरो दिवाशयः ॥ ३४ ॥

"उरसि च प्रियमुच्चैरालिङ्गति विराङ्गी स्तनयुगमुपधत्ते स्तनालिङ्गनन्तदिति वदन्ति" ॥ ३२ ॥

सङ्गमायेति। सङ्गमाय सुरतार्थं निशि गूढम् अज्ञातं चरति इष्टगृहं प्रति गच्छतीति गूढचारी तं चारदूतिकथितं चरन्तीति चाराः गूढचारिणः। ज्वलिति कसन्तेभ्यो ण इति णप्रत्ययः। चाराश्च ता दूतयश्च चारदूतयः ताभिः कथितं निवेदितं तम् अग्निवर्णम् अङ्गनाः पुरः अग्रे गताः अवरुद्धमार्गाः सत्यः इत्यर्थः हे कामुक! तमसा वृतः गूढः सन् कुतः वञ्चयिष्यसि इति उपालभ्य इति शेषः चकृषुः स्ववासं निन्युः इत्यर्थः ॥ ३३ ॥

योषितामिति। "उडुपतेः इन्दोः अर्चिषां भासाम् इव। "ज्वालाभासोर्नपुंस्यर्चिः" इत्यमरः। योषितां स्पर्शनिर्वृतिं

वेणुना दशनपीडिताधरा
वीणया नखपदाङ्कितोरवः ।
शिल्पकार्य्य उभयेन वेजिता
स्तं विजिह्मनयना व्यलोभयन् ॥ ३५ ॥
अङ्गसत्ववचनाश्रयं मिथः
स्त्रीषु नृत्यमुपधाय दर्शयन् ।

स्वर्गसुखम् अवाप्नुवन् किं च रात्रिषु जागरपरः दिवा दिवसेषु शेते स्वपितीति दिवाशयः । अधिकरणे शेते रित्यच्प्रत्ययः । असौ अग्निवर्णः कुमुदाकरस्य उपमां साम्यमारुरोह प्राप ॥ ३४ ॥

वेणुनेति । दशनैः पीडिताधराः दष्टौष्ठाः नखपदैः नखक्षतैः अङ्कितोरवः चिह्नितोत्सङ्गाः व्रणिताधरोरुत्वादक्षमाः इत्यर्थः तथापि वेणुना वीणया चेत्युभयेन अधरोरुपीडाकारिण्य इत्यर्थः वेजिताः पीडिताः शिल्पं वेणुवीणावाद्यादिकं कुर्व्वन्तीति शिल्पकारिण्यः गायिकाः । कर्म्मण्यणित्यण्, टिड्ढाणञिति ङीप् । तं विजिह्मनयनाः कुटिलदृष्टयः सत्यः स्वं चेष्टितं जानन् अपि त्वया नः पीडयतीति साभिप्रायं पश्यन्त्यः इत्यर्थः व्यलोभयन् । तथाविधालोकनमपि तस्याकर्षकमेवाभूदिति भावः ॥ ३५ ॥

अङ्गेति । अङ्गं हस्तादि सत्वम् अन्तःकरणं वचनं गेयञ्च आश्रयः कारणं यस्य तत् अङ्गसत्ववचनाश्रयम् आङ्गिक-सात्विक-वाचिक-रूपेण त्रिविधम् इत्यर्थः । यथाह भरतः—"सामान्याभिनयो नाम ज्ञेयो वागङ्गसत्वजः" इति । नृत्यम् अभिनयं मिथः रहसि स्त्रीषु नर्त्तकीषु उपधाय निधाय दर्शयन् सः मित्रसन्निधौ सहचरसमक्षं प्रयोगे अभिनये निपुणैः कृतिभिः

स प्रयोगनिपुणैः प्रयोक्तृभिः
सञ्जघर्ष सह मित्रसन्निधौ ॥ ३६ ॥
अंसलम्बिकुटजार्ज्जुनस्रज-
स्तस्य नीपरजसाङ्गरागिणः।
प्रावृषि प्रमदबर्हिणेष्वभूत्
कृत्रिमाद्रिषु विहारविभ्रमः ॥ ३७ ॥
विग्रहाच्च शयने पराङ्मुखीः
नानुनेतुमबलाः स तत्वरे।
आचकाङ्क्ष घनशब्दविक्लवा-
स्ता विवृत्य विशती र्भुजान्तरम् ॥ ३८ ॥

प्रयोक्तृभिः अभिनयार्थप्रकाशकैः नाट्याचार्य्यैः सह सञ्जघर्ष सङ्घर्षं कृतवान्। सङ्घर्षः पराभिभवेच्छा ॥ ३६ ॥

इतः प्रभृति तस्य कृत्रिमाद्रिषु विरचितविहारप्रकारमाह, अंसेति। प्रावृषि अंसलम्बिन्यः कुटजानाम् अर्ज्जुनानाञ्च स्रजः यस्य तस्य नीपानां कदम्बकुसुमानां रजसा अङ्गरागिणः अङ्गरागवतः तस्य अग्निवर्णस्य, प्रमदबर्हिणेषु उन्मत्तमयूरेषु कृतिमाद्रिषु विहारः एव विभ्रमः विलासः अभूत् ॥ ३७ ॥

विग्रहादिति। प्रावृषीत्यनुषज्यते, सः अग्निवर्णः विग्रहात् प्रणयकलहात् शयने पराङ्मुखीः अबलाः अनुनेतुं न तत्वरे त्वरितवान्, किन्तु घनशब्देन घनगर्ज्जितेन विक्लवाः चकिताः अतएव विवृत्य स्वयमेव अभिमुखीभूय भुजान्तरं विशतीः

कार्त्तिकीषु सवितानहर्म्यभाक्
यामिनीषु ललिताङ्गनासखः।
अन्वभुङ्क्त सुरतश्रमापहां
मेघमुक्तविशदां स चन्द्रिकाम् ३९ ॥

सैकतञ्च सरयूं विवृण्वतीं
श्रोणिबिम्बमिव हंसमेखलम्।
स्वप्रियाविलसितानुकारिणीं
सौधजालविवरैर्व्यलोकयत् ॥ ४० ॥

प्रविशन्तीः। आच्छीनयोर्नुमिति नुम् विकल्पः। ताः अवला: आचकाङ्क्ष, स्वयं ग्रहादेव साम्मुख्य मैच्छत् इत्यर्थः ॥ ३८ ॥

कार्त्तिकीष्विति। कार्त्तिकस्येमाः कार्त्तिक्यः। तस्येदमित्यण्। तासु यामिनीषु निशासु शरद्रात्रिषु इत्यर्थः। सवितानानि उपरि वस्त्रावृतानि हर्म्याणि भजतीति सवितानहर्म्यभाक्। भजेर्ण्विप्रत्ययः। हिमवारणार्थं सवितानमुक्तम्। ललिताङ्गनासखः सः अग्निवर्णः सुरतश्रमापहां मेघमुक्ता च असौ विशदा च ताम्। बहुलग्रहणात् सविशेषणसमासः। चन्द्रिकाम् अन्वभुङ्क्त ॥ ३९ ॥

सैकतमिति। किं च, हंसाः एव मेखला यस्य तत् सैकतं पुलिनं श्रोणिबिम्बम् इव, विवृण्वतीम् अतएव स्वप्रियाविलसितानि अनुकरोतीति तद्विधां सरयूं सौधस्य जालानि गवाक्षाः ते एव विवराणि तैः व्यलोकयत् ॥ ४० ॥

मर्म्मरैरगुरुधूपगन्धिभिः
व्यक्तहेमरशनैस्तमेकतः ।
जह्रुराग्रथनमोक्षलोलुपं
हैमनैर्निवसनैः सुमध्यमाः ॥ ४१ ॥

अर्पितस्तिमितदीपदृष्टयः
गर्भवेश्मसु निवातकुक्षिषु ।
तस्य सर्व्वसुरतान्तरक्षमाः
साक्षितां शिशिररात्रयो ययुः ॥ ४२ ॥

मर्म्मरैरिति । मर्म्मरैः संस्कारविशेषाच्छब्दायमानैः । "अथ मर्म्मरः स्वनिते वस्त्रपर्णानाम्" इत्यमरः । अगुरुधूपगन्धिभिः व्यक्तहेमरशनैः लौल्याल्लक्ष्यमाणकनकमेखलागुणैः हैमनैः हेमन्ते भवैः । सर्व्वत्राण् च तलोपश्चेति हेमन्तशब्दादण् प्रत्ययस्त-लोपश्च । निवसनैः अंशुकैः सुमध्यमाः स्त्रियः एकतः नितम्बैक-देशे आग्रथनमोक्षयोः नीवीबन्धविस्रंसनयोः लोलुपम् आसक्तं तं जह्रुः आचकृषुः ॥ ४१ ॥

अर्पितेति । निवाताः वातरहिताः कुक्षयः अभ्यन्तराणि येषां तेषु गर्भवेश्मसु गृहान्तर्गृहेषु अर्पिताः दत्ताः स्तिमिताः निवातत्वात् निश्चलाः दीपाः एव दृष्टयः याभिः ताः । अत्रानि-मिषदृष्टित्वञ्च गम्यते । सर्व्वसुरतान्तरक्षमाः तापखेदापनोदन-त्वात् दीर्घकालत्वाच्च सर्व्वेषां सुरतान्तराणां सुरतभेदानां क्षमाः क्रियार्हाः शिशिररात्रयः तस्य अग्निवर्णस्य साक्षितां ययुः विविक्तकालदेशत्वाद् यथेच्छं विजहार इत्यर्थः ॥ ४२ ॥

दक्षिणेन पवनेन सम्भृतं
प्रेक्ष्य चूतकुसुमं सपल्लवम्।
अन्वनैषुरवधूतविग्रहा
स्तं दुरुत्सहवियोगमङ्गनाः॥ ४३॥
ताः स्वमङ्कमधिरोप्य दोलया
प्रेङ्खयन् परिजनापविद्धया।
मुक्तरज्जु निविड़ं भयच्छलात्
कण्ठबन्धनमवाप बाहुभिः॥ ४४॥
तं पयोधरनिषिक्तचन्दनै
र्मौक्तिकग्रथितचारुभूषणैः।

दक्षिणेनेति। अङ्गनाः दक्षिणेन पवनेन मलयानिलेन सम्भृतं जनितं सपल्लवं चूतकुसुमं प्रेक्ष्य अवधूतविग्रहाः त्यक्तविरोधाः सत्यः दुरुत्सहवियोगं दुःसहविरहं तम् अन्वनैषुः तद्विरहमसहमानाः स्वयमेवानुनीतवत्यः इत्यर्थः॥ ४३॥

ता इति। ताः अङ्गनाः स्वम् अङ्कं स्वकीयम् उत्सङ्गम् अधिरोप्य परिजनेन अपविद्धया संप्रेषितया दोलया मुक्तरज्जु त्यक्तदोलासूत्रं यथा तथा प्रेङ्खयन् चालयन् भयच्छलात् पतनभयमिषात् बाहुभिः भुजैः निविड़ं कण्ठबन्धनम् अवाप प्राप स्वयं गाढाश्लेषसुखमन्वभूत्॥ ४४॥

तमिति। प्रियाः पयोधरेषु स्तनेषु निषिक्तम् उक्षितं चन्दनं येषु तैः मौक्तिकैः ग्रथितानि प्रोतानि चारुभूषणानि येषु तैः मुक्ताप्रायाभरणैः इत्यर्थः श्रोणिलम्बिन्यः मणिमेखलाः

शीतवेशविधिभिः सिषेविरे
श्रोणिलम्बिमणिमेखलैः प्रियाः ॥ ४५ ॥

यत् स लग्नसहकारमासवं
रक्तपाटलसमागमं पपौ ।
तेन तस्य मधुनिर्गमात् कृश
श्चित्तयोनिरभवत् पुनर्नवः ॥ ४६ ॥

एवमिन्द्रियसुखानि निर्विश
न्नन्यकार्य्यविमुखः स पार्थिवः ।
आत्मलक्षणनिवेदितानृतू
नत्यवाहयदनङ्गवाहितः ॥ ४७ ॥

मरकतादिमणियुक्त कटिसूत्राणि येषु तादृशैः शीतवेषविधिभिः उष्णकालोचितनेपथ्यविधानैः शीतलोपायैरित्यर्थः । तमग्निवर्णं सिषेविरे ४५ ॥

यदिति । सोऽग्निवर्णः लग्नः सहकारः चूतपल्लवो यस्मिन् तं रक्तपाटलस्य पाटलकुसुमस्य समागमो यस्य तम् आसवं मद्यं पपौ इति यत् तेनासवपानेन मधुनिर्गमाद्वसन्तापगमात् कृशो मन्दवीर्य्यः तस्य चित्तयोनिः कामः पुनर्नवः प्रबलोऽभवत् । ४६ ॥

एवमिति । एवम् अनङ्गवाहितः कामप्रेरितः अन्यकार्य्य-विमुखः स पार्थिवः इन्द्रियाणां सुखानि सुखकराणि गन्धादीनि निर्विशन् अनुभवन् आत्मनो लक्षणैः कुटजस्रग्धारणादिचिह्नैः निवेदितान् अयमृतुरिदानीं वर्त्तते इति ज्ञापितान् ऋतून् वर्षादीन् अत्यवाहयत् अगमयत् ॥ ४७ ॥

तं प्रमत्तमपि न प्रभावतः
शेकुराक्रमितुमन्यपार्थिवाः
आमयस्तु रतिरागसम्भवो
दक्षशाप इव चन्द्रमक्षिणोत् ॥ ४८ ॥

दृष्टदोषमपि तन्न सोऽत्यजत्
सङ्गवस्तु भिषजामनाश्रवः ।
स्वादुभिस्तु विषयैर्हृतस्ततो
दुःखमिन्द्रियगणो निवार्य्यते ॥ ४९ ॥

तमिति । प्रमत्तं व्यसनासक्तमपि तं नृपं प्रभावतः अन्यपार्थिवाः आक्रमितुमभिभवितुं न शेकुः न शक्ताः रतिरागसम्भव आमयो व्याधिस्तु क्षयरोग इत्यर्थः दक्षस्य दक्षप्रजापतेः शापः चन्द्रमिव, अक्षिणोत् अकर्शयत्। शापोऽपि रतिरागसम्भव इति । दक्षः किल अन्याः स्वकन्याः उपेक्ष्य रोहिण्यामेव रममाणं राजानं सोमं शशाप पश्चाद्व्यापि क्षयरूपेण तं क्षिणोतीत्युपाख्यायते ॥ ४८ ॥

दृष्टेति । भिषजां वैद्यानामनाश्रवो वचसि न स्थितः । वचने स्थित आश्रव इत्यमरः । अविधेय इत्यर्थः स दृष्टदोषमपि रोगजननादिति शेषः तत् सङ्गस्य वस्तु सङ्गवस्तु स्त्रीमद्यादिकं सङ्गजनकं वस्तु नात्यजत् । तथाहि इन्द्रियगणः स्वादुभि र्विषयैः हृतस्तु हृतश्चेत् तत स्तेभ्यो विषयेभ्यो दुःखं कृच्छ्रेण निवार्य्यते दुस्त्यजा खलु विषया इत्यर्थः ॥ ४९ ॥

तस्य पाण्डुवदनाल्पभूषणा
सावलम्बगमना मृदुस्वना ।
राजयक्ष्मपरिहानिराययौ
कामयानसमवस्थया तुलाम् ॥ ५० ॥

व्योम पश्चिमकलास्थितेन्दु वा
पङ्कशेषमिव घर्मपल्वलम् ।
राज्ञि तत्कुलमभूत् क्षयातुरे
वामनार्चिरिव दीपभाजनम् ॥ ५१ ॥

तस्येति । तस्य राज्ञः पाण्डुवदना अल्पभूषणा परिमिताभरणा सावलम्बं दासादिहस्तावलम्बसहितं गमनं यस्यां सा सावलम्बगमना मृदुस्वना हीनस्वरा राज्ञः सोमस्य यक्ष्मा राजयक्ष्मा क्षयरोग स्तेन या परिहानिः क्षीणावस्था कामयते विषयानिच्छति कामयानः । कमेर्णिङन्तात् शानच् । अनित्यमागमशासनमिति मुमागमाभावः । एतदेवाभिप्रेत्योक्तम् वामनेनापि कामयानशब्दः सिद्धोऽनादिश्चेति । तस्य समवस्थया कामुकावस्थया तुलां साम्यमाययौ प्राप । कालकृतो विशेषोऽवस्था । विशेषः कालिकोऽवस्थेत्यमरः ॥ ५० ॥

व्योमेति । राज्ञि क्षयातुरे सति तत् कुलं रघुकुलं पश्चिमकलायां स्थित इन्दुर्यस्मिंस्तत् कलाविशिष्टेन्दु व्योम वा व्योमेव । वा शब्द इवार्थे यथाह दण्डी इववद्वा यथाशब्दाविति । पङ्कशेषं घर्मपल्वलमिव वामनार्चिः अल्पशिखं दीपभाजनं दीपपात्रमिव अभूत् ॥ ५१ ॥

वाढमेष दिवसेषु पार्थिवः
कर्म्म साधयति पुत्त्रजन्मने।
इत्यदर्शितरुजोऽस्य मन्त्रिणः
शश्वदूचु रघशङ्किनीः प्रजाः॥ ५२॥
स त्वनेकवनितासखोऽपि सन्
पावनीमनवलोक्य सन्ततिम्।
वैद्ययत्नपरिभाविनं गदं
न प्रदीप इव वायुमत्यगात्॥ ५३॥
तं गृहोपवनएव सङ्गताः
पश्चिमक्रतुविदा पुरोधसा।

वाढमिति। वाढं सत्यम् एव पार्थिवः दिवसेषु पुत्त्रजन्मने पुत्त्रोदयार्थं कर्म्म जपादिकं साधयति इत्येवम् अदर्शि तरुजो निगूहितरोगाः सन्तोऽस्य राज्ञो मन्त्रिणः अघशङ्किनीः व्यसन-शङ्किनीः प्रजाः शश्वत् ऊचुः॥ ५२॥

सइति। सतु अग्निवर्णः अनेकवनितासखः सन्नपि पावनीं पितृऋणमोचनीं सन्ततिमनवलोक्य पुत्रमनवाप्येत्यर्थः वैद्ययत्न-परिभाविनं गदं रोगं प्रदीपो वायुमिव नात्यगात् नातिचक्राम नासारित्यर्थः॥ ५३॥

तमिति। पश्चिमक्रतुविदा अन्त्येष्टिविधिज्ञेन पुरोधसा सङ्गताः समेताः मन्त्रिणः गृहोपवनएव गृहारामएव। आरामः स्यादुपवनमित्यमरः। रोगशान्तिमपदिश्य शान्तिकर्म्म व्यपदिश्य

रोगशान्तिमपदिश्य मन्त्रिणः
सम्भृते शिखिनि गूढमादधुः ॥ ५४ ॥
तैः कृतप्रकृतिमुख्यसंग्रहै
राशु तस्य सहधर्म्मचारिणी ।
साधु दृष्टशुभगर्भलक्षणा
प्रत्यपद्यत नराधिपश्रियम् ॥ ५५ ॥
तस्यास्तथाविधनरेन्द्रविपत्तिशोका
दुष्णैर्विलोचनजलैः प्रथमाभितप्तः
निर्वापितः कनककुम्भमुखोज्झितेन
वंशाभिषेकविधिना शिशिरेण गर्भः ॥ ५६ ॥

तमग्निवर्णं सम्भृते समृद्धे शिखिनि अग्नौ गूढमप्रकाशम् आदधुः निदधुः ॥ ५४ ॥

तैरिति । आशु शीघ्रं कृतः प्रकृतिमुख्यानां पौरजनप्रधानानां संग्रहः सन्निपातो यैः स्तादृशैः स्तैः मन्त्रिभिः साधु निपुणं दृष्टशुभगर्भलक्षणा परीक्षितशुभगर्भचिह्ना तस्याग्निवर्णस्य सहधर्म्मचारिणी नराधिपश्रियं प्रत्यपद्यत राज्यलक्ष्मीं प्राप ॥ ५५

तस्या इति । तथाविधया नरेन्द्रविपत्त्या यः शोक स्तस्मादुष्णैर्विलोचनजलैः प्रथमाभितप्तः तस्याः गर्भः कनककुम्भानां मुखैरुज्झितेन शिशिरेण शीतलेन वंशाभिषेकविधिना लक्षणया अभिषेकजलेन निर्वापितः आप्यायितः ॥ ५६ ॥

तं भावार्थं प्रसवसमयाकाङ्क्षिणीनां प्रजाना
मन्तर्गूढं क्षितिरिव नभोवीजमुष्टिं दधाना।
मौलैः सार्द्धं स्थविरसचिवैर्हेमसिंहासनस्था
राज्ञी राज्यं विधिवदशिषद्भर्त्तुरव्याहताज्ञा ॥५७॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ
अग्निवर्णशृङ्गारो नाम एकोनविंशः सर्गः।

---

तमिति। प्रसवो गर्भमोचनं फलञ्च विवक्षितम्। स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने इत्यमरः। तस्य यः समयः तदाकाङ्क्षिणीनां प्रजानां भावार्थं भावाय भूतये इत्यर्थः। भावो लीलाक्रियाचेष्टाभूत्यभिप्रायजन्तुष्विति यादवः। क्षितिः अन्तर्गूढं नभोवीजमुष्टिमिव श्रावणमासुप्तं वीजमुष्टिं यथा धत्ते तद्वदित्यर्थः। मुष्टिशब्दोद्विलिङ्गः। अक्लीवौ मुष्टिमुस्तकाविति यादवः। अन्तर्गूढमन्तर्गतं तं गर्भं दधाना हेमसिंहासनस्था अव्याहताज्ञा राज्ञी मौलैर्मूले भवैः मूलागतैर्वा आप्तैरित्यर्थः स्थविरसचिवैर्वृद्धामात्यैः सार्द्धं भर्त्तुः राज्यं विधिवद्विध्यर्हं यथाशास्त्रमित्यर्थः। अर्हार्थे वतिप्रत्ययः। अशिषत् शास्तिस्म। सर्त्ति शास्त्यर्त्तिभ्यश्चेति च्लेरङ्शासइदङ्हलोरितीकारः॥५७॥

इति श्रीमहामहोपाध्याय कोलाचलमल्लिनाथसूरि-विरचितायां
रघुवंशटीकायां सञ्जीवनीसमाख्यायां एकोनविंशः सर्गः।

---

समाप्तम्